॥ अथ दशोपनिषच्छान्तिसमेता अष्टोत्तर-
शतमुपनिषदः प्रारभ्यन्ते ॥

# उपनिषदामनुक्रमणिका.

॥ समाप्तोऽयमुपनिषदामनुक्रमः ॥

5

॥ श्रीगणेशाय नमः॥अथ वाजसनेयसंहितोपनिषत्प्रारम्भः॥ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते। पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते।ॐ शांतिः शांतिः शांतिः॥ हरिः ॐ॥ ईशा वास्यमिदꣳसर्वं यत्किंच जगत्यां जगत्। तेन त्यक्तेन भुञ्जीथा मागृधः कस्य स्विद्धनम्। कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳसमाः। एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे। असुर्या नाम ते लोका अन्धेन तमसावृताः। ताꣳस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः। अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन्पूर्वमर्शत्। तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति। तदेजति तन्नेजति तद्दूरे तद्वन्तिके। तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः। यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति। सर्वभूतेषु चात्मानं ततो न विजुगुप्सते। यस्मिन्त्सर्वाणि भूतान्यात्मैवाभू-

ई० द्विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः । स पर्यगाच्छुक्रमकायमव्रण- उ०
॥ १ ॥ मस्नाविरꣳशुद्धमपापविद्धम् । कविर्मनीषी परिभूः स्वयंभूर्याथातथ्यतोऽर्थान्व्यदधाच्छा-
श्वतीभ्यः समाभ्यः । अन्धन्तमः प्रविशन्ति येऽविद्यामुपासते । ततो भूय इव ते तमो य
उ विद्यायाꣳरताः । अन्यदेवाहुर्विद्ययान्यदाहुरविद्यया । इति शुश्रुम धीराणां ये नस्त-
द्विचचक्षिरे । विद्यां चाविद्यां च यस्तद्वेदोभयꣳसह । अविद्यया मृत्युं तीर्त्वा विद्यया-
मृतमश्नुते । अन्धन्तमः प्रविशन्ति येऽसंभूतिमुपासते । ततो भूय इव ते तमो य उ
संभूत्याꣳरताः । अन्यदेवाहुः संभवादन्यदाहुरसंभवात् । इति शुश्रुम धीराणां ये नस्त-
द्विचचक्षिरे । संभूतिं च विनाशं च यस्तद्वेदोभयꣳसह । विनाशेन मृत्युं तीर्त्वा संभूत्या-
मृतमश्नुते । हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् । तत्त्वं पूषन्नपावृणु सत्यधर्माय ॥ १ ॥

दृष्टये । पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन्त्समूह तेजो यत्ते रूपं कल्याणतमं तत्ते पश्यामि । योऽसावसौ पुरुषः सोऽहमस्मि वायुरनिलममृतमथेदं भस्मान्तꣳशरीरम् । ॐ क्रतो स्मर कृतꣳस्मर क्रतो स्मर कृतꣳस्मर । अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम । ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥ ॐ शांतिः शांतिः शांतिः ॥ इति वाजसनेयसंहितोपनिषत्संपूर्णा ॥ १ ॥

अथ सामवेदीयतलवकारोपनिषत्प्रारम्भः ॥ हरिः ॐ ॥ आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि सर्वं ब्रह्मोपनिषदं माहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं मेऽस्तु तदात्मनि निरते य उपनि-

षत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु । ॐ शांतिः शांतिः शांतिः ॥ हरिः ॐ ॥ केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः । केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रं क उ देवो युनक्ति । श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचꣳस उ प्राणस्य प्राणश्चक्षुषश्चक्षुरतिमुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति । न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनो न विद्मो न विजानीमो यथैतदनुशिꣳष्यादन्यदेव तद्विदितादथो अविदितादधि । इति शुश्रुम पूर्वेषां ये नस्तद्व्याचचक्षिरे । यद्वाचानभ्युदितं येन वाग- भ्युद्यते । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते । यन्मनसा न मनुते येनाहुर्मनो मतम् । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते । यच्चक्षुषा न पश्यति येन चक्षूꣳषि पश्यति । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते । यच्छ्रोत्रेण न शृणोति येन श्रोत्र-

॥ २ ॥

मिदꣳश्रुतम् । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते । यत्प्राणेन न प्राणिति येन प्राणः प्रणीयते । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ इति प्रथमः खण्डः ॥ १ ॥ यदि मन्यसे सुवेदेति दभ्रमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपं यदस्य त्वं यदस्य च देवेष्वथ नुमीमाꣳस्यमेव ते मन्ये विदितम् । नाहं मन्ये सुवेदेति नो न वेदेति वेद च । यो नस्तद्वेद तद्वेद नो न वेदेति वेद च । यस्यामतं तस्य मतं मतं यस्य न वेद सः । अविज्ञातं विजानतां विज्ञातमविजानताम् । प्रतिबोधविदितं मतममृतत्वं हि विन्दते । आत्मना विन्दते वीर्यं विद्यया विन्दतेऽमृतम् । इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः । भूतेषु भूतेषु विचित्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ॥ इति द्वितीयः खण्डः ॥ २ ॥ ब्रह्म ह देवेभ्यो विजिग्ये तस्य ह ब्रह्मणो विजये देवा अमहीयन्त त

ऐक्षन्तास्माकमेवायं विजयोऽस्माकमेवायं महिमेति । तद्धैषां विजज्ञौ तेभ्यो ह प्रादुर्बभूव तन्न व्यजानन्त किमिदं यक्षमिति । तेऽग्निमब्रुवन् जातवेद एतद्विजानीहि किमेतद्यक्ष- ॥ ३ ॥ मिति तथेति तदभ्यद्रवत्तमभ्यवदत्कोऽसीत्यग्निर्वा अहमस्मीत्यब्रवीज्जातवेदा वा अहम- स्मीति तस्मिंस्त्वयि किं वीर्यमित्यपीदꣳसर्वं दहेयं यदिदं पृथिव्यामिति तस्मै तृणं निद- धावेतद्दहेति तदुपप्रेयाय सर्वजवेन तन्न शशाक दग्धुं स तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति । अथ वायुमब्रुवन्वायवेतद्विजानीहि किमेतद्यक्षमिति तथेति तदभ्यद्रवत्तमभ्यवदत्कोऽसीति वायुर्वा अहमस्मीत्यब्रवीन्मातरिश्वा वा अहमस्मीति तस्मिं- स्त्वयि किं वीर्यमित्यपीदꣳसर्वमाददीयं यदिदं पृथिव्यामिति । तस्मै तृणं निदधावेतदाद- त्स्वेति तदुपप्रेयाय सर्वजवेन तन्न शशाकादातुं स तत एव निववृते नैतदशकं विज्ञातुं ॥ ३ ॥

यदेतद्यक्षमिति । अथेन्द्रमब्रुवन्मघवन्नेतद्विजानीहि किमेतद्यक्षमिति । तथेति तदभ्यद्रवत्तस्मात्तिरोदधे स तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीं ताꣳहोवाच किमेतद्यक्षमिति ॥ इति तृतीयः खण्डः ॥ ३ ॥ सा ब्रह्मेति होवाच ब्रह्मणो वा एतद्विजये महीयध्वमिति ततो हैव विदाञ्चकार ब्रह्मेति । तस्माद्वा एते देवा अतितरामिवान्यान्देवान्यदग्निर्वायुरिन्द्रस्ते ह्येनन्नेदिष्ठं पस्पर्शुस्ते ह्येनत्प्रथमो विदाञ्चकार ब्रह्मेति तस्माद्वा इन्द्रोऽतितरामिवान्यान्देवान्स ह्येनत्प्रथमो विदाञ्चकार ब्रह्मेति । तस्यैष आदेशो यदेतद्विद्युतो व्यद्युतदा ३ इतीति न्यमीमिषदा ३ इत्यधिदैवतम् । अथाध्यात्मं यदेतद्गच्छतीव च मनोऽनेन चैतदुपस्मरत्यभीक्ष्णं सङ्कल्पः । तद्ध तद्वनं नाम तद्वनमित्युपासितव्यं स य एतदेवं वेदाभिहैनं सर्वाणि भूतानि संवाञ्छन्ति । उपनिषदं भो ब्रूहीत्युक्ता

क० ॥ ४ ॥

त उपनिषद्ब्राह्मीं वाव त उपनिषदमब्रूमेति । तस्यै तपो दमः कर्मेति प्रतिष्ठा वेदाः सर्वाङ्गानि सत्यमायतनम् । यो वा एतामेवं वेदापहत्य पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति प्रतितिष्ठति ॥ इति चतुर्थः खण्डः ॥ ४ ॥ ॐ आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि सर्वं ब्रह्मोपनिषदं माहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं मेऽस्तु तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ॐ शांतिः शांतिः शांतिः ॥ इति सामवेदी-यतलवकारोपनिषत्समाप्ता ॥ ॐ तत्सत् ॥ २ ॥

उ०

अथ यजुर्वेदीयकठोपनिषत्प्रारम्भः ॥ ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै । ॐ शांतिः शांतिः शांतिः । हरिः ॐ ॥

॥ ४ ॥

उशन्ह वै वाजश्रवसः सर्व्ववेदसं ददौ । तस्य ह नचिकेता नाम पुत्र आस । तꣳह कुमारꣳसन्तं दक्षिणासु नीयमानासु श्रद्धाविवेश सोऽमन्यत पीतोदका जग्धतृणा दुग्धदोहा निरिन्द्रिया अनन्दा नाम ते लोकास्तान् स गच्छति ता ददत् । स होवाच पितरं तत कस्मै मां दास्यसीति । द्वितीयं तृतीयं तꣳहोवाच मृत्यवे त्वा ददामीति । बहूनामेमि प्रथमो बहूनामेमि मध्यमः । किꣳस्विद्यमस्य कर्तव्यं यन्मयाद्य करिष्यति। अनुपश्य यथा पूर्वे प्रतिपश्य तथा परे । सस्यमिव मर्त्यः पच्यते सस्यमिवाजायते पुनः । वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान् । तस्यैताꣳशान्तिं कुर्वन्ति हर वैवस्वतोदकम्। आशाप्रतीक्षे सङ्गतꣳसूनृतां चेष्टापूर्त्ते पुत्रपशूꣳश्च सर्वान् । एतद्वृङ्क्ते पुरुषस्याल्पमेधसो यस्यानश्नन्वसति ब्राह्मणो गृहे । तिस्रो रात्रीर्यदवात्सीर्गृहे मेऽनश्नन्ब्रह्मन्नतिथिर्नमस्यः ।

क०

॥ ८ ॥

नमस्तेऽस्तु ब्रह्मन्त्स्वस्ति मेऽस्तु तस्मात्प्रति त्रीन्वरान्वृणीष्व । शान्तसङ्कल्पः सुमना यथा स्याद्वीतमन्युर्गौतमो माभिमृत्यो । त्वत्प्रसृष्टं माभिवदेत्प्रतीत एतत्त्रयाणां प्रथमं वरं वृणे । यथा पुरस्ताद्भविता प्रतीत औद्दालकिरारुणिर्मत्प्रसृष्टः । सुखꣳरात्रीः शयिता वीतमन्युस्त्वां ददृशिवान्मृत्युमुखात्प्रमुक्तम् । स्वर्गे लोके न भयं किंच नास्ति न तत्र त्वं न जरया बिभेति । उभे तीर्त्वाशनायापिपासे शोकातिगो मोदते स्वर्गलोके । स त्वमग्निꣳस्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तꣳश्रद्दधानाय मह्यम् । स्वर्गलोका अमृतत्वं भजन्त एतद्द्वितीयेन वृणे वरेण । प्र ते ब्रवीमि तदु मे निबोध स्वर्ग्यमग्निं नचिकेतः प्रजानन् । अनन्तलोकाप्तिमथो प्रतिष्ठां विद्धि त्वमेतन्निहितं गुहायाम् । लोकादिमग्निं तमुवाच तस्मै या इष्टका यावतीर्वा यथावा । स चापि तत्प्रत्यवदद्यथोक्तमथास्य मृत्युः पुनरेवाह तुष्टः ।

उ०

॥ ८ ॥

तमब्रवीत्प्रीयमाणो महात्मा वरं तवेहाद्य ददामि भूयः । तवैव नाम्ना भवितायमाग्निः सृङ्कां चेमामनेकरूपां गृहाण । त्रिणाचिकेतस्त्रिभिरेत्य सन्धिं त्रिकर्मकृत्तरति जन्म-मृत्यू । ब्रह्मजज्ञं देवमीड्यं विदित्वा निचाय्येमाꣳशान्तिमत्यन्तमेति । त्रिणाचिकेतस्त्रय-मेतद्विदित्वा य एवंविद्वाꣳश्चिनुते नाचिकेतम् । स मृत्युपाशान्पुरतः प्रणोद्य शोकातिगो मोदते स्वर्गलोके । एष तेऽग्निर्नचिकेतः स्वर्ग्योऽयमवृणीथा द्वितीयेन वरेण । एतमग्निं तवैव प्रवक्ष्यन्ति जनासस्तृतीयं वरं नचिकेतो वृणीष्व । येयं प्रेते विचिकित्सा मनु-ष्येऽस्तीत्येके नायमस्तीति चैके । एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः । देवैरत्रापि विचिकित्सितं पुरा न हि सुविज्ञेयमणुरेष धर्मः । अन्यं वरं नचिकेतो वृणीष्व मा मोपरोत्सीरति मा सृजैनम् । देवैरत्रापि विचिकित्सितं किल त्वं च मृत्यो यन्न

क० सुविज्ञेयमात्थ । वक्ता चास्य त्वादृगन्यो न लभ्यो नान्यो वरस्तुल्य एतस्य कश्चित् । उ०

॥ ६ ॥ शतायुषः पुत्रपौत्रान्वृणीष्व बहून्पशून्हस्तिहिरण्यमश्वान् । भूमेर्महदायतनं वृणीष्व स्वयं च जीवशरदो यावदिच्छसि । एतत्तुल्यं यदि मन्यसे वरं वृणीष्व वित्तं चिरजीविकां च । महाभूमौ नचिकेतस्त्वमेधि कामानां त्वा कामभाजं करोमि । ये ये कामा दुर्लभा मर्त्यलोके सर्वान् कामाँश्छन्दतः प्रार्थयस्व । इमा रामाः सरथाः सतूर्या नहीदृशा लम्भनीया मनुष्यैः । आभिर्मत्प्रत्ताभिः परिचारयस्व नचिकेतो मरणं मानुप्राक्षीः । श्वोभावा मर्त्यस्य यदन्तकैतत्सर्वेन्द्रियाणां जरयन्ति तेजः । अपि सर्वं जीवितमल्पमेव तवैव वाहास्तव नृत्यगीते । न वित्तेन तर्पणीयो मनुष्यो लप्स्यामहे वित्तमद्राक्ष्म चेत्त्वा । जीविष्यामो यावदीशिष्यसि त्वं वरस्तु मे वरणीयः स एव । अजीर्यताममृतानामुपेत्य ॥ ६ ॥

जीर्यन्मर्त्यः क्वधःस्थः प्रजानन् । अभिध्यायन्वर्णरतिप्रमोदानतिदीर्घे जीविते को रमेत ।
यस्मिन्निदं विचिकित्सन्ति मृत्यो यत्साम्पराये महति ब्रूहि नस्तत् । योऽयं वरो गूढ-
मनुप्रविष्टो नान्यं तस्मान्नचिकेता वृणीते ॥ इति प्रथमेऽध्याये प्रथमावल्ली ॥ १ ॥ अन्य-
च्छ्रेयोऽन्यदुतैव प्रेयस्ते उभे नानार्थे पुरुषꣳसिनीतः । तयोः श्रेय आददानस्य साधु
भवति हीयतेऽर्थाद्य उ प्रेयो वृणीते । श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ संपरीत्य विविनक्ति
धीरः । श्रेयो हि धीरोऽभिप्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद्वृणीते । स त्वं प्रिया-
न्प्रियरूपाꣳश्च कामानभिध्यायन्नचिकेतोऽत्यस्राक्षीः । नैताꣳसृङ्कां वित्तमयीमवाप्तो यस्यां
मज्जन्ति बहवो मनुष्याः । दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता ।
विद्याभीप्सिनं नचिकेतसं मन्ये न त्वा कामा बहवोलोलुपन्त । अविद्यायामन्तरे वर्त-

12

क० मानाः स्वयं धीराः पण्डितं मन्यमानाः। दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीय- उ०
मानाः यथान्धाः । न साम्परायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम् । अयं
॥ ७ ॥ लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे। श्रवणायापि बहुभिर्यो न लभ्यः
शृण्वन्तोऽपि बहवो यं न विद्युः। आश्चर्यो वक्ता कुशलोऽस्य लब्धाश्चर्यो ज्ञाता कुश-
लानुशिष्टः। न नरेणावरेण प्रोक्त एष सुविज्ञेयो बहुधा चिन्त्यमानः। अनन्यप्रोक्ते
गतिरत्र नास्त्यणीयान्ह्यतर्क्यमणुप्रमाणात् । नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव
सुज्ञानाय प्रेष्ठ। यां त्वमापः सत्यधृतिर्बतासि त्वादृङ्नो भूयान्नचिकेतः प्रष्टा । जाना-
म्यहꣳशेवधिरित्यनित्यं न ह्यध्रुवैः प्राप्यते हि ध्रुवं तत्। ततो मया नाचिकेताश्चितोऽ-
ग्निरनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम्। कामस्याप्तिं जगतः प्रतिष्ठां क्रतोरनन्त्यमभयस्य ॥ ७ ॥

पारम् । स्तोममहदुरुगायं प्रतिष्ठा दृष्ट्वा धृत्या धीरो नचिकेतोऽत्यस्राक्षीः । तं दुर्दर्शं गूढ-मनुप्रविष्टं गुहाहितं गव्हरेष्ठं पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति । एतच्छ्रुत्वा संपरिगृह्य मर्त्यः प्रवृह्य धर्म्यमणुमेतमाप्य । स मोदते मोदनीयꣳहि लब्ध्वा विवृतꣳसद्म नचिकेतसं मन्ये । अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृ-तात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद । सर्वे वेदा यत्पदमामनन्ति तपाꣳसि सर्वाणि च यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदꣳसङ्ग्रहेण ब्रवीम्योमित्ये-तत् । एतद्ध्येवाक्षरं ब्रह्म एतदेवाक्षरं परम् । एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् । एतदालम्बनꣳश्रेष्ठमेतदालम्बनं परम् । एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते । न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित् । अजो नित्यः शाश्वतोऽयं

13

पुराणो न हन्यते हन्यमाने शरीरे। हन्ता चेन्मन्यते हन्तुꣳहतश्चेन्मन्यते हतम्। उभौ तौ न विजानीतो नायꣳहन्ति न हन्यते। अणोरणीयान्महतो महीयानात्मास्य जन्तोर्निहितो गुहायाम्। तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमात्मनः। आसीनो दूरं व्रजति शयानो याति सर्वतः। कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति। अशरीरꣳशरीरेष्वनवस्थेष्ववस्थितम्। महान्तं विभुमात्मानं मत्वा धीरो न शोचति। नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूꣳस्वाम्। नाविरतो दुश्चरितान्नाशान्तो नासमाहितः। नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात्। यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः। मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः। इति प्रथमेऽध्याये द्वितीयावल्ली ॥ २ ॥

ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्द्धे । छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः । यः सेतुरीजानानामक्षरं ब्रह्म यत्परम् । अभयं तितीर्षतां पारं नाचिकेतꣳशकेमहि । आत्मानꣳरथिनं विद्धि शरीरꣳरथमेव तु । बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च । इन्द्रियाणि हयानाहुर्विषयाꣳस्तेषु गोचरान् । आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः । यस्त्वविज्ञानवान्भवत्ययुक्तेन मनसा सदा । तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः । यस्तु विज्ञानवान्भवति युक्तेन मनसा सदा । तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः । यस्त्वविज्ञानवान्भवत्यमनस्कः सदाऽशुचिः । न स तत्पदमाप्नोति सꣳसारं चाधिगच्छति । यस्तु विज्ञानवान्भवति समनस्कः सदा शुचिः । स तु तत्पदमाप्नोति यस्माद्भूयो न जायते । विज्ञानसारथि-

क० यस्तु मनःप्रग्रहवान्नरः। सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्। इन्द्रियेभ्यः परा उ०
॥ ९ ॥ ह्यर्था अर्थेभ्यश्च परं मनः। मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः। महतः परमव्य-
क्तमव्यक्तात्पुरुषः परः। पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः। एष सर्वेषु
भूतेषु गूढोत्मा न प्रकाशते। दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः। यच्छे-
द्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि। ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त
आत्मनि। उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत। क्षुरस्य धारा निशिता दुरत्यया दुर्गं
पथस्तत्कवयो वदन्ति। अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगन्धवच्च यत्। अना-
द्यनन्तं महतः परं ध्रुवं निचाय्य तन्मृत्युमुखात्प्रमुच्यते। नाचिकेतमुपाख्यानं मृत्यु-
प्रोक्तꣳसनातनम्। उक्त्वा श्रुत्वा च मेधावी ब्रह्मलोके महीयते। य इमं परमं गुह्यं श्राव- ॥ ९ ॥

येद्ब्रह्मसंसदि । प्रयतः श्राद्धकाले वा तदानन्त्याय कल्पते तदानन्त्याय कल्पत इति । इति प्रथमेऽध्याये तृतीयावल्ली ॥ ३ ॥ इति प्रथमोऽध्यायः समाप्तः ॥ १ ॥ पराञ्चि खानि व्यतृणत्स्वयम्भूस्तस्मात्पराङ्पश्यति नान्तरात्मन् । कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्त-चक्षुरमृतत्वमिच्छन् । पराचः कामाननुयन्ति बालास्ते मृत्योर्यन्ति विततस्य पाशम् । अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते । येन रूपं रसं गन्धं शब्दान् स्पर्शांश्च मैथुनान् । एतेनैव विजानाति किमत्र परिशिष्यत एतद्वैतत् । स्वप्नान्तं जाग-रितान्तं चोभौ येनानुपश्यति । महान्तं विभुमात्मानं मत्वा धीरो न शोचति । य इमं मध्वदं वेद आत्मानं जीवमन्तिकात् । ईशानं भूतभव्यस्य न ततो विजुगुप्सत एतद्वै-तत् । यः पूर्वं तपसो जातमद्भ्यः पूर्वमजायत । गुहां प्रविश्य तिष्ठन्तं यो भूतेभिर्व्यप-

क० ॥ १० ॥

श्यत एतद्वैतत् । या प्राणेन संभवत्यदितिर्देवतामयी । गुहां प्रविश्य तिष्ठन्तीं या भूतेभिर्व्यजायत एतद्वैतत् । अरण्योर्निहितो जातवेदा गर्भ इव सुभृतो गर्भिणीभिः । दिवे दिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निरेतद्वैतत् । यतश्चोदेति सूर्योऽस्तं यत्र च गच्छति । तं देवाः सर्वेऽर्पितास्तदु नात्येति कश्चन एतद्वैतत् । यदेवेह तदमुत्र यदमुत्र तदन्विह । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति । मनसैवेदमाप्तव्यं नेह नानास्ति किंचन । मृत्योः स मृत्युं गच्छति य इह नानेव पश्यति । अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य न ततो विजुगुप्सत एतद्वैतत् । अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः । ईशानो भूतभव्यस्य स एवाद्य स उ श्व एतद्वैतत् । यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति । एवं धर्मान्पृथक्पश्यंस्तानेवानुविधावति । यथोदकं

उ० ॥ १० ॥

शुद्धे शुद्धमासिक्तं तादृगेव भवति। एवं मुनेर्विजानत आत्मा भवति गौतम। इति प्रथमेऽध्याये चतुर्थीवल्ली ॥ ४ ॥ पुरमेकादशद्वारमजस्यावक्रचेतसः। अनुष्ठाय न शोचति विमुक्तश्च विमुच्यत एतद्वैतत्। हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्। नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्। ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति। मध्ये वामनमासीनं विश्वे देवा उपासते। अस्य विस्रꣳसमानस्य शरीरस्थस्य देहिनः देहाद्विमुच्यमानस्य किमत्रपरिशिष्यत एतद्वैतत्। न प्राणेन नापानेन मर्त्यो जीवति कश्चन। इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ। हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम्। यथा च मरणं प्राप्य आत्मा भवति गौतम। योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः। स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्। य एष सुप्तेषु जागर्ति कामं

कामं पुरुषो निर्मिमाणः । तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन एतद्वैतत् । अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव । एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च । वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव । एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च । सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः । एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः । एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् । नित्योनित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम् । तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखं । कथं नु तद्विजा-

नीयां किमु भाति विभाति वा। न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति। इति प्रथमेऽध्याये पञ्चमीवल्ली ॥ ५ ॥ ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः। तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते। तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन एतद्वैतत्। यदिदं किंच जगत्सर्वं प्राण एजति निःसृतं। महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति। भयादस्याग्निस्तपति भयात्तपति सूर्यः। भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः। इह चेदशकद्बोद्धुं प्राक्शरीरस्य विस्रसः। ततः सर्गेषु लोकेषु शरीरत्वाय कल्पते। यथादर्शे तथात्मनि यथा स्वप्ने तथा पितृलोके। यथाप्सु परीव ददृशे तथा गन्धर्वलोके छायातपयोरिव ब्रह्मलोके। इन्द्रियाणां पृथग्भावमुदयास्तमयौ च यत्। पृथ-

क० गुत्पद्यमानानां मत्वा धीरो न शोचति । इन्द्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम् । उ०
॥ १२ ॥ सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम् । अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च ।
यज्ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति । न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा
पश्यति कश्चनैनम् । हृदा मनीषा मनसाभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति । यदा
पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम् । तां
योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् । अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ।
नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा । अस्तीतिब्रुवतोऽन्यत्र कथं तदुपलभ्यते ।
अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयोः । अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति ।
यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते । ॥ १२ ॥

यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः । अथ मर्त्योऽमृतो भवत्येतावदनुशासनम् । शतं चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति । अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः । तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकां धैर्येण । तं विद्याच्छुक्रममृतं तं विद्याच्छुक्रममृतमिति । मृत्युप्रोक्तां नचिकेतोऽथ लब्ध्वा विद्यामेतां योगविधिं च कृत्स्नम् । ब्रह्म प्राप्तो विरजोऽभूद्विमृत्युरन्योऽप्येवं यो विदध्यात्ममेव । ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ इति द्वितीयेऽध्याये षष्ठीवल्ली ॥ ६ ॥ इति कठोपनिषत्समाप्ता ॥

10

अथाथर्ववेदीयप्रश्नोपनिषत्प्रारम्भः। ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः। स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेम देवहितं यदायुः। स्वस्तिन इन्द्रो वृद्धःश्रवाः स्वस्तिनः पूषा विश्ववेदाः। स्वस्तिनस्तार्क्ष्यों अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु । ॐ शान्तिः शान्तिः शान्तिः। हरिः ॐ सुकेशा च भारद्वाजः शैब्यश्च सत्यकामः सौर्यायणी च गार्ग्यः कौसल्यश्चाश्वलायनो भार्गवो वैदर्भिः कबन्धीकात्यायनस्ते हैते ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणा एष ह वै तत्सर्वं वक्ष्यतीति ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः। तान्ह स ऋषिरुवाच भूय एव तपसा ब्रह्मचर्येण श्रद्धया संवत्सरं संवत्स्यथ यथाकामं प्रश्नान्पृच्छथ यदि विज्ञास्यामः सर्वं ह वो वक्ष्याम इति। अथ कबन्धीकात्यायन उपेत्य पप्रच्छ। भगवन्कुतो ह वा इमाः प्रजाः

प्रजायन्त इति । तस्मै स होवाच प्रजाकामो वै प्रजापतिः स तपोऽतप्यत स तपस्तप्त्वा स मिथुनमुत्पादयते रयिं च प्राणं चेत्येतौ मे बहुधा प्रजाः करिष्यत इति । आदित्यो ह वै प्राणो रयिरेव चन्द्रमा रयिर्वा एतत्सर्वं यन्मूर्त्तं चामूर्त्तं च तस्मान्मूर्तिरेव रयिः । अथादित्य उदयन्यत्प्राचीं दिशं प्रविशति तेन प्राच्यान्प्राणान्रश्मिषु सन्निधत्ते । यद्द-क्षिणां यत्प्रतीचीं यदुदीचीं यदधो यदूर्ध्वं यदन्तरा दिशो यत्सर्वं प्रकाशयति तेन सर्वा-न्प्राणान्रश्मिषु सन्निधत्ते । स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते । तदेतदृचाभ्यु-क्तम् । विश्वरूपं हरिणं जातवेदसं परायणं ज्योतिरेकं तपन्तम् । सहस्ररश्मिः शतधा वर्तमानः प्राणः प्रजानामुदयत्येष सूर्यः । संवत्सरो वै प्रजापतिस्तस्यायने दक्षिणं चोत्तरं च । तद्ये ह वै तदिष्टापूर्त्ते कृतमित्युपासते । ते चान्द्रमसमेव लोकमभिजयन्ते ।

त एव पुनरावर्तन्ते तस्मादेत ऋषयः प्रजाकामा दक्षिणं प्रतिपद्यन्ते । एष ह वै रयिर्यः पितृयाणः । अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययात्मानमन्विष्यादित्यमभिजयन्त एतद्वै प्राणानामायतनमेतदमृतमभयमेतत्परायणमेतस्मान्न पुनरावर्तन्त इत्येष निरोधस्तदेष श्लोकः । पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्द्धे पुरीषिणम् । अथेमे अन्य उ परे विचक्षणं सप्तचक्रे षडर आहुरर्पितमिति । मासो वै प्रजापतिस्तस्य कृष्णपक्ष एव रयिः शुक्लः प्राणस्तस्मादेत ऋषयः शुक्ल इष्टं कुर्वन्तीतर इतरस्मिन् । अहोरात्रे वै प्रजापतिस्तस्याहरेव प्राणो रात्रिरेव रयिः प्राणं वा एते प्रस्कन्दन्ति । ये दिवा रत्या संयुज्यन्ते ब्रह्मचर्यमेव तद्यद्रात्रौ रत्या संयुज्यन्ते । अन्नं वै प्रजापतिस्ततो ह वै तद्रेतस्तस्मादिमाः प्रजाः प्रजायन्त इति । तद्ये ह तत्प्रजापतिव्रतं चरन्ति ते

॥ १४ ॥

मिथुनमुत्पादयन्ते । तेषामेवैष ब्रह्मलोको येषां तपो ब्रह्मचर्यं येषु सत्यं प्रतिष्ठितम् ।
तेषामसौ विरजो ब्रह्मलोको न येषु जिह्ममनृतं न माया चेति। इति प्रथमः प्रश्नः॥ १ ॥

अथ हैनं भार्गवो वैदर्भिः पप्रच्छ । भगवन्कत्येव देवाः प्रजां विधारयन्ते कतर एतत्प्रकाशयन्ते कः पुनरेषां वरिष्ठ इति । तस्मै स होवाचाकाशो ह वा एष देवो वायुरग्निरापः पृथिवी वाङ्मनश्चक्षुः श्रोत्रं च ते प्रकाश्याभिवदन्ति वयमेतद्बाणमवष्टभ्य विधारयामः । तान्वरिष्ठः प्राण उवाच मा मोहमापद्यथाहमेवैतत्पञ्चधात्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामीति । तेऽश्रद्दधाना बभूवुः सोऽभिमानादूर्ध्वमुत्क्रमत इव तस्मिन्नुत्क्रामत्यथेतरे सर्व एवोत्क्रामन्ते तस्मिंश्च प्रतिष्ठमाने सर्व एव प्रातिष्ठन्ते । तद्यथा मक्षिका मधुकरराजानमुत्क्रामन्तं सर्वा एवोत्क्रामन्ते तस्मिंश्च प्रतिष्ठमाने सर्वा

20

एव प्रातिष्ठन्त एवं वाङ्मनश्चक्षुः श्रोत्रं च ते प्रीताः प्राणं स्तुन्वन्ति। एषोऽग्निस्तपत्येष सूर्य एष पर्जन्यो मघवानेष वायुरेष पृथिवी रयिर्देवः सदसच्चामृतं च यत्। अरा इव रथनाभौ प्राणे सर्वं प्रतिष्ठितम्। ऋचो यजूꣳषि सामानि यज्ञः क्षत्रं ब्रह्म च। प्रजापतिश्चरसि गर्भे त्वमेव प्रतिजायसे। तुभ्यं प्राणः प्रजास्त्विमा बलिं हरन्ति यः प्राणैः प्रतितिष्ठसि देवानामसि वह्नितमः पितॄणां प्रथमा स्वधा। ऋषीणां चरितं सत्यमथर्वाङ्गिरसामसि। इन्द्रस्त्वं प्राण तेजसा रुद्रोऽसि परिरक्षिता। त्वमन्तरिक्षे चरसि सूर्यस्त्वं ज्योतिषां पतिः। यदा त्वमभिवर्षस्यथेमाः प्राणते प्रजाः। आनन्दरूपास्तिष्ठन्ति कामायान्नं भविष्यतीति। व्रात्यस्त्वं प्राणैकऋषिरत्ता विश्वस्य सत्पतिः। वयमाद्यस्य दातारः पिता त्वं मातरिश्वनः। या ते तनूर्वाचि प्रतिष्ठिता या श्रोत्रे या च चक्षुषि। या च

मनसि सन्तता शिवां तां कुरु मोत्क्रमीः। प्राणस्येदं वशे सर्वं त्रिदिवे यत्प्रतिष्ठितम्।
मातेव पुत्रान्रक्षस्व श्रीश्च प्रज्ञां च विधेहि न इति। इति द्वितीयः प्रश्नः ॥ २ ॥
अथ हैनं कौसल्यश्चाश्वलायनः पप्रच्छ। भगवन्कुत एष प्राणो जायते कथमायात्यस्मि-
ञ्छरीर आत्मानं वा प्रविभज्य कथं प्रातिष्ठते केनोत्क्रमते कथं बाह्यमभिधत्ते कथम-
ध्यात्ममिति। तस्मै स होवाचातिप्रश्नान्पृच्छसि ब्रह्मिष्ठोऽसीति तस्मात्तेऽहं ब्रवीमि
आत्मन एष प्राणो जायते। यथैषा पुरुषे छायैतस्मिन्नेतदाततं मनोकृतेनायात्यस्मिञ्छरीरे।
यथा सम्राडेवाधिकृतान्विनियुङ्क्ते। एतान्ग्रामानेतान्ग्रामानधितिष्ठस्वेत्येवमेवैष प्राण इत-
रान्प्राणान्पृथक्पृथगेव सन्निधत्ते। पायूपस्थेऽपानं चक्षुःश्रोत्रे मुखनासिकाभ्यां प्राणः
स्वयं प्रातिष्ठते मध्ये तु समानः। एष ह्येतद्धुतमन्नं समं नयति तस्मादेताः सप्तार्चिषो

भवन्ति । हृदि ह्येष आत्मा अत्रैतदेकशतं नाडीनां तासां शतं शतमेकैकस्यां द्वासप्ततिर्द्वासप्ततिः प्रतिशाखानाडीसहस्राणि भवन्त्यासु व्यानश्चरति । अथैकयोर्ध्व उदानः पुण्येन पुण्यं लोकं नयति पापेन पापमुभाभ्यामेव मनुष्यलोकम् । आदित्यो ह वै बाह्यः प्राण उदयत्येष ह्येनं चाक्षुषं प्राणमनुगृह्णानः । पृथिव्यां या देवता सैषा पुरुषस्यापानमवष्टभ्यान्तरा यदाकाशः स समानो वायुर्व्यानः । तेजो ह वाव उदानस्तस्मादुपशान्ततेजाः । पुनर्भवमिन्द्रियैर्मनसि संपद्यमानैः । यच्चित्तस्तेनैष प्राणमायाति प्राणस्तेजसा युक्तः । सहात्मना यथा सङ्कल्पितं लोकं नयति । य एवं विद्वान्प्राणं वेद । न हास्य प्रजा हीयतेऽमृतो भवति तदेष श्लोकः । उत्पत्तिमायतिं स्थानं विभुत्वं चैव पञ्चधा । अध्यात्मं चैव प्राणस्य विज्ञायामृतमश्नुते विज्ञायामृतमश्नुत इति । इति तृतीयः प्रश्नः ॥ १६ ॥

॥ ३ ॥ अथ हैनं सौर्यायणीगार्ग्यः पप्रच्छ । भगवन्नेतस्मिन्पुरुषे कानि स्वपन्ति कान्यस्मिन् जाग्रति कतर एष देवः स्वप्नान्पश्यति कस्यैतत्सुखं भवति कस्मिन्नु सर्वे संप्रतिष्ठिता भवन्तीति । तस्मै स होवाच यथा गार्ग्य मरीचयोऽर्कस्यास्तंगच्छतः सर्वा एतस्मिंस्तेजोमण्डल एकीभवन्ति । ताः पुनः पुनरुदयतः प्रचरन्त्येवं ह वै तत्सर्वं परे देवे मनस्येकीभवति । तेन तर्ह्येष पुरुषो न शृणोति न पश्यति न जिघ्रति न रसयते न स्पृशते नाभिवदते नादत्ते नानन्दयते न विसृजते नेयायते स्वपितीत्याचक्षते । प्राणाग्नय एवैतस्मिन्पुरे जाग्रति गार्हपत्यो ह वा एषोऽपानो व्यानोऽन्वाहार्यपचनो यद्गार्हपत्यात्प्रणीयते प्रणयनादाहवनीयः प्राणः । यदुच्छ्वासनिश्वासावेतावाहुती समं नयतीति स समानः । मनो ह वाव यजमान इष्टफलमेवोदानः स एनं यजमानमह-

प्र० रहर्ब्रह्म गमयति । अत्रैष देवः स्वप्ने महिमानमनुभवति । यद्दृष्टं दृष्टमनुपश्यति श्रुतं उ०
॥ १७ ॥ श्रुतमेवार्थमनुशृणोति देशदिगन्तरैश्च प्रत्यनुभूतं पुनः पुनः प्रत्यनुभवति दृष्टं चादृष्टं च श्रुतं चाश्रुतं चानुभूतं चाननुभूतं च सच्चासच्च सर्वं पश्यति सर्वः पश्यति । स यदा तेजसाभिभूतो भवत्यत्रैष देवः स्वप्नान्न पश्यत्यथ तदैतस्मिञ्छरीर एतत्सुखं भवति । स यथा सोम्य वयांसि वासो वृक्षं संप्रतिष्ठन्ते । एवं ह वै तत्सर्वं पर आत्मनि संप्रतिष्ठते । पृथिवी च पृथिवीमात्रा चापश्चापोमात्रा च तेजश्च तेजोमात्रा च वायुश्च वायुमात्रा चाकाशश्चाकाशमात्रा च चक्षुश्च द्रष्टव्यं च श्रोत्रं च श्रोतव्यं च घ्राणं च घ्रातव्यं च रसश्च रसयितव्यं च त्वक्च स्पर्शयितव्यं च वाक्च वक्तव्यं च हस्तौ चादातव्यं चोपस्थश्चानन्दयितव्यं च पायुश्च विसर्जयितव्यं च पादौ च गन्तव्यं च मनश्च मन्तव्यं च बुद्धिश्च ॥ १७ ॥

बोद्धव्यं चाहङ्कारश्चाहङ्कर्त्तव्यं च चित्तं च चेतयितव्यं च तेजश्च विद्योतयितव्यं च प्राणश्च विधारयितव्यं च । एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्त्ता विज्ञानात्मा पुरुषः । स परेऽक्षरे आत्मनि संप्रतिष्ठते । परमेवाक्षरं प्रतिपद्यते स यो ह वै तदच्छायमशरीरमलोहितं शुभ्रमक्षरं वेदयते यस्तु सोम्य । स सर्वज्ञः सर्वो भवति तदेष श्लोकः । विज्ञानात्मा सह देवैश्च सर्वैः प्राणा भूतानि संप्रतिष्ठन्ति यत्र । तदक्षरं वेदयते यस्तु सोम्य स सर्वज्ञः सर्वमेवाविवेशेति । इति चतुर्थः प्रश्नः ॥ ४ ॥

अथ हैनं शैब्यःसत्यकामः पप्रच्छ । स यो ह वै तद्भगवन्मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत । कतमं वाँव स तेन लोकं जयतीति । तस्मै स होवाच । एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारस्तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेति ।

23

प्र० ॥ १८ ॥

स यद्येकमात्रमभिध्यायीत स तेनैव संवेदितस्तूर्णमेव जगत्यामभिसंपद्यते। तमृचो मनुष्यलोकमुपनयन्ते स तत्र तपसा ब्रह्मचर्येण श्रद्धया संपन्नो महिमानमनुभवति। अथ यदि द्विमात्रेण मनसि संपद्यते सोऽन्तरिक्षं यजुर्भिरुन्नीयते। सोमलोकं स सोमलोके विभूतिमनुभूय पुनरावर्तते। यः पुनरेतत्त्रिमात्रेणैवोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये संपन्नः। यथा पादोदरस्त्वचा विनिर्मुच्यत एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते तदेतौ श्लोकौ भवतः तिस्रो मात्रा मृत्युमत्यः प्रयुक्ता अन्योऽन्यसक्ता अनविप्रयुक्ताः। क्रियासु बाह्याभ्यन्तरमध्यमासु सम्यक्प्रयुक्तासु न कम्पते ज्ञः। ऋग्भिरेतं यजुर्भिरन्तरिक्षं स सामभिर्यत्तत्कवयो वेदयन्ते। तमोङ्कारेणैवायतनेनान्वेति विद्वा-

उ० ॥ १८ ॥

न्यत्तच्छान्तमजरममृतमभयं परञ्चेति । इति पञ्चमःप्रश्नः ॥ ५ ॥ अथ हैनं सुकेशा-
भारद्वाजः पप्रच्छ । भगवन्हिरण्यनाभः कौसल्यो राजपुत्रो मामुपेत्यैतं प्रश्नम-
पृच्छत । षोडशकलं भारद्वाज पुरुषं वेत्थ तमहं कुमारमब्रुवं नाहमिमं वेद यद्यहमि-
ममवेदिषं कथं ते नावक्ष्यमिति समूलो वा एष परिशुष्यति योऽनृतमभिवदति तस्मा-
न्नार्हाम्यनृतं वक्तुं स तूष्णीं रथमारुह्य प्रवव्राज । तं त्वा पृच्छामि क्वासौ पुरुष इति ।
तस्मै स होवाच । इहैवान्तः शरीरे सोम्य स पुरुषो यस्मिन्नेताः षोडशकलाः प्रभव-
न्तीति । स ईक्षाञ्चक्रे । कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते
प्रतिष्ठास्यामीति । स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियम् ।
मनोऽन्नमन्नाद्वीर्यं तपो मन्त्राः कर्मलोका लोकेषु च नाम च । स यथेमा नद्यः स्यन्द-

प्र० | मानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति भिद्येते तासां नामरूपे समुद्र इत्येवं | उ०

॥ १९ ॥ प्रोच्यते । एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति भिद्येते तासां नामरूपे पुरुष इत्येवं प्रोच्यते स एषोऽकलोऽमृतो भवति तदेष श्लोकः । अरा इव रथनाभौ कला यस्मिन्प्रतिष्ठिताः । तं वेद्यं पुरुषं वेद यथा मा वो मृत्युः परिव्यथा इति । तान्होवाचैतावदेवाहमेतत्परं ब्रह्म वेद नातः परमस्तीति । ते तमर्चयन्तस्त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसीति । नमः परमऋषिभ्यो नमः परमऋषिभ्यः । इति षष्ठः प्रश्नः समाप्तः ॥ ६ ॥ ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः । स्वस्तिन इन्द्रो वृद्धश्रवाः स्वस्तिनः पूषा विश्ववेदाः । स्वस्तिनस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु । ॐ शान्तिः शान्तिः शान्तिः । इति प्रश्नोपनिषत्समाप्ता ॥ १९ ॥

अथाथर्ववेदीयमुण्डकोपनिषत्प्रारम्भः ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवांऽसस्तनूभिर्व्यशेम देवहितं यदायुः । स्वस्तिन इन्द्रो वृद्धश्रवाः स्वस्तिनः पूषा विश्ववेदाः । स्वस्तिनस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु । ॐ शान्तिः शान्तिः शान्तिः । हरिः ॐ ब्रह्मा देवानां प्रथमः संबभूव विश्वस्य कर्ता भुवनस्य गोप्ता स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह । अथर्वणे यां प्रवदेत ब्रह्माथर्वा तां पुरोवाचाङ्गिरे ब्रह्मविद्याम् । स भारद्वाजाय सत्यवाहाय प्राह भारद्वाजोऽङ्गिरसे परावराम् । शौनको ह वै महाशालोऽङ्गिरसं विधि-वदुपसन्नः पप्रच्छ । कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति । तस्मै स होवाच । द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदन्ति परा चैवापरा च । तत्रापरा

ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिष-
मिति । अथ परा यया तदक्षरमधिगम्यते । यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं
तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः। यथो-
र्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः संभवन्ति । यथा सतः पुरुषात्के-
शलोमानि तथाक्षरात्संभवतीह विश्वम् । तपसा चीयते ब्रह्म ततोऽन्नमभिजायते ।
अन्नात्प्राणो मनः सत्यं लोकाः कर्मसु चामृतम् । यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं
तपः । तस्मादेतद्ब्रह्म नाम रुपमन्नं च जायते । इति प्रथममुण्डके प्रथमः खण्डः ॥ १ ॥
तदेतत्सत्यं मन्त्रेषु कर्माणि कवयो यान्यपश्यंस्तानि त्रेतायां बहुधा सन्ततानि । तान्या-
चरथ नियतं सत्यकामा एष वः पन्थाः सुकृतस्य लोके । यदा लेलायते ह्यर्चिः समिद्धे

हव्यवाहने । तदाज्यभागावन्तरेणाहुतीः प्रतिपादयेच्छ्रद्धया हुतम् । यस्याग्निहोत्रमदर्शमपौर्णमासमचातुर्मास्यमनाग्रयणमतिथिवर्जितं च । अहुतमवैश्वदेवमविधिना हुतमासप्तमांस्तस्य लोकान्हिनस्ति । काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा । स्फुलिङ्गिनी विश्वरूची च देवी लेलायमाना इति सप्त जिह्वा एतेषु यश्चरते भ्राजमानेषु यथाकालं चाहुतयो ह्याददायन् । तन्नयन्त्येताः सूर्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवासः । एह्येहीति तमाहुतयः सुवर्चसः सूर्यस्य रश्मिभिर्यजमानं वहन्ति प्रियां वाचमभिवदन्त्योऽर्चयन्त्य एष वः पुण्यः सुकृतो ब्रह्मलोकः । प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापि यन्ति । अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः परे

…कं छन्दो ज्योतिष- | उ०



जङ्घन्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः । अविद्यायां बहुधा वर्त-

माना वयं कृतार्था इत्यभिमन्यन्ति बालाः । यत्कर्मिणो न प्रवेदयन्ति रागात्तेनातुराः
क्षीणलोकाश्च्यवन्ते । इष्टापूर्त्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः । नाकस्य
पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरं वा विशन्ति । तपःश्रद्धे ये ह्युपवसन्त्यरण्ये
शान्ता विद्वांसो भैक्षचर्यां चरन्तः । सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो
ह्यव्ययात्मा । परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन । तद्वि-
ज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् । तस्मै स विद्वानुपस-
न्नाय सम्यक्प्रशान्तचित्ताय शमान्विताय । येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो
ब्रह्मविद्याम् । इति प्रथममुण्डके द्वितीयः खण्डः ॥ २ ॥ इति प्रथमं मुण्डकं समाप्तम् ॥ १ ॥

तदेतत्सत्यं यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः । तथाक्षराद्वि-विधाः सोम्य भावाः प्रजायन्ते तत्र चैवापि यन्ति । दिव्यो ह्यमूर्त्तः पुरुषः सबाह्या-भ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः। एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी । अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्यं पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा । तस्मादग्निः समिधो यस्य सूर्यः सोमात्पर्जन्य ओषधयः पृथिव्याम् । पुमान्रेतः सिञ्चति योषितायां बह्वीः प्रजाः पुरुषात्संप्रसूताः । तस्मादृचः साम यजूꣳषि दीक्षा यज्ञाश्च सर्वे क्रतवो दक्षिणाश्च । संवत्सरं च यजमानश्च लोकाः सोमो यत्र पवते यत्र सूर्यः । तस्माच्च देवा बहुधा संप्रसूताः साध्या मनुष्याः पशवो वयांसि प्राणापानौ व्रीहियवौ तपश्च श्रद्धा सत्यं ब्रह्मचर्यं विधिश्च ।

वयाꣳसि । प्राणापानौ व्रीहियवौ तपश्च श्रद्धा सत्यं ब्रह्मचर्यं विधिश्च । सप्त प्राणाः प्रभवन्ति तस्मात्सप्तार्चिषः समिधः सप्तहोमाः । सप्तइमे लोका येषु चरन्ति प्राणा गुहाशया निहिताः सप्त सप्त । अतः समुद्रा गिरयश्च सर्वेऽस्मात्स्यन्दन्ते सिन्धवः सर्वरूपाः । अतश्च सर्वा ओषधयो रसश्च येनैष भूतैस्तिष्ठते ह्यन्तरात्मा । पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम् । एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थि विकिरतीह सोम्य । इति द्वितीयमुण्डके प्रथमः खण्डः ॥ १ ॥ आविः सन्निहितं गुहाचरन्नाम महत्पदमत्रैतत्समर्पितम् । एजत्प्राणन्निमिषच्च यदेतज्जानथ सदसद्वरेण्यं परं विज्ञानाद्यद्वरिष्ठं प्रजानाम् । यदर्चिमद्यदणुभ्योऽणु यस्मिँल्लोका निहिता लोकिनश्च । तदेतदक्षरं ब्रह्म स प्राणस्तदु वाङ्मनः तदेतत्सत्यं तदमृतं तद्वेद्धव्यं सोम्य विद्धि । धनुर्गृहीत्वौप- ॥ २२ ॥

निषदं महास्त्रं शरं ह्युपासा निशितं सन्धीयत। आयम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सोम्य विद्धि। प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते। अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत्। यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः। तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः। अरा इव रथनाभौ संहता यत्र नाड्यः स एषोऽन्तश्चरते बहुधा जायमानः। ॐइत्येवंध्यायथ आत्मानं स्वस्ति वः पाराय तमसः परस्तात्। यः सर्वज्ञः सर्वविद्यस्यैष महिमा भुवि दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठितः। मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्ने हृदयं सन्निधाय। तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाति। भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे। हिरण्मये परे

20

कोशे विरजं ब्रह्म निष्कलम् । तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः । न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति । ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण । अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम् । इति द्वितीयमुण्डके द्वितीयः खण्डः ॥ २ ॥ इति द्वितीयं मुण्डकं समाप्तम् ॥ द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति । समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः।जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः। यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति । प्राणो ह्येष यः सर्वभूतैर्विभाति विजानन्विद्वान्भवते

नातिवादी। आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः। सत्येन लभ्यस्तपसा ह्येषआत्मासम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम्। अन्तःशरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः। सत्यमेव जयते नानृतं सत्येन पन्था विततो देवयानः। येना-क्रमन्त्यृषयो ह्याप्तकामा यत्र तत्सत्यस्य परमं निधानम्। बृहच्च तद्दिव्यमचिन्त्यरूपं सूक्ष्माच्च तत्सूक्ष्मतरं विभाति। दूरात्सुदूरे तदिहान्तिके च पश्यत्स्विहैव निहितं गुहायां न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा। ज्ञानप्रसादेन विशुद्धसत्त्व-स्ततस्तु तं पश्यते निष्कलं ध्यायमानः। एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन्प्राणः पञ्चधा संविवेश। प्राणैश्चित्तं सर्वमोतं प्रजानां यस्मिन्विशुद्धे विभवत्येष आत्मा। यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते यांश्च कामान्। तं तं लोकं जायते

तांश्च कामांस्तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः । इति तृतीयमुण्डके प्रथमः खण्डः ॥ १ ॥
स वेदैतत्परमं ब्रह्म धाम यत्र विश्वं निहितं भाति शुभ्रम् । उपासते पुरुषं ये ह्यकामास्ते शुक्रमेतदतिवर्तन्ति धीराः । कामान्यः कामयते मन्यमानः स कामभिर्जायते तत्र तत्र । पर्याप्तकामस्य कृतात्मनस्तु इहैव सर्वे प्रविलीयन्ति कामाः । नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूँस्वाम् । नायमात्मा बलहीनेन लभ्यो न च प्रमादात्तपसो वाप्यलिङ्गात् । एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधाम । संप्राप्यैनमृषयो ज्ञानतृप्ताः कृतात्मानो वीतरागाः प्रशान्ताः । ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मानः सर्वमेवाविशन्ति । वेदान्तविज्ञानसुनिश्चितार्थाः सन्यासयोगाद्यतयः शुद्धसत्त्वाः । ते ब्रह्मलो-

केषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे। गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु। कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति। यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्। स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति नास्या-ब्रह्मवित्कुले भवति। तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति तदेतदृचाभ्युक्तं क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः स्वयं जुह्वते एकर्षिं श्रद्धयन्तस्ते-षामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्। तदेतत्सत्यमृषिरङ्गिराः पुरोवाच नैतदचीर्णव्रतोऽधीते नमः परमऋषिभ्यो नमः परमऋषिभ्यः॥ इति तृतीयमुण्डके द्वितीयः खण्डः॥ २ ॥ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः

स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेम देव हितं यदायुः ॥ स्वस्तिन इन्द्रो वृद्धश्रवाः स्वस्तिनः पूषा विश्ववेदाः। स्वस्तिनस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ इति मुण्डकोपनिषत्समाप्ता ॥ ७ ॥ ॥ ७ ॥

अथाथर्ववेदीयमाण्डूक्योपनिषत्प्रारम्भः ॥ ॐ भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेम देव हितं यदायुः । स्वस्तिन इन्द्रो वृद्धश्रवाः स्वस्तिनः पूषा विश्ववेदाः। स्वस्तिनस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु।ॐ शान्तिः शान्तिः शान्तिः॥ हरि ॐ॥ ओमित्येतदक्षरमिदꣳसर्वं तस्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्वमोङ्कार एव। यच्चान्यत्त्रिकालातीतं तदप्योङ्कार एव। सर्वꣳह्येतद्ब्रह्मायमात्मा ब्रह्म सोऽयमात्मा चतुष्पात् । जागरितस्थानो बहिष्प्रज्ञः सप्ताङ्ग

एकोनविंशतिमुखः स्थूलभुग्वैश्वानरः प्रथमः पादः। स्वप्नस्थानोऽन्तः प्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तभुक्तैजसो द्वितीयः पादः। यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति तत्सुषुप्तम्। सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक्चेतोमुखः प्राज्ञस्तृतीयः पादः। एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम्। नान्तः प्रज्ञं न बहिष्प्रज्ञं नोभयतः प्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञमदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः। सोऽयमात्माध्यक्षरमोङ्कारोऽधिमात्रं पादा मात्रा मात्राश्च पादा अकार उकारो मकार इति। जागरितस्थानो वैश्वानरोऽकारः प्रथमा मात्राप्तेरादिमत्वाद्वाप्नोति ह वै सर्वान्कामानादिश्च भवति य

एवं वेद । स्वप्नस्थानस्तैजस उकारो द्वितीया मात्रोत्कर्षादुभयत्वाद्वोत्कर्षति ह वै ज्ञानसन्ततिं समानश्च भवति नास्याब्रह्मवित्कुले भवति य एवं वेद । सुषुप्तस्थानः प्राज्ञो मकारस्तृतीया मात्रा मितेरपीतेर्वा मिनोति ह वा इदꣳसर्वमपीतिश्च भवति य एवं वेद । अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैत एवमोङ्कार आत्मैव संविशत्यात्मनात्मानं य एवं वेद य एवं वेद । इति माण्डूक्योपनिषत्संपूर्णा ॥ ॐ तत्सत् ॥ ॐ भद्रं कर्णेभिःशृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेम देवहितं यदायुः स्वस्तिन इन्द्रो वृद्धश्रवाः स्वस्तिनः पूषा विश्ववेदाः । स्वातिनस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु । ॐ शान्तिः शान्तिः शान्तिः ॥ इतिमाण्डूक्योपनिषत्संपूर्णा ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

अथ यजुर्वेदीयतैत्तिरीयोपनिषच्छिक्षाप्रारम्भः ॥ ॐ शं नो मित्रः शं वरुणः। शं नो भवत्वर्यमा। शं न इन्द्रो बृहस्पतिः। शं नो विष्णुरुरुक्रमः। नमो ब्रह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि। त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि। ऋतं वदिष्यामि। सत्यं वदिष्यामि। तन्मामवतु। तद्वक्तारमवतु। अवतु माम्। अवतु वक्तारम् ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ ॐ शीक्षां व्याख्यास्यामः। वर्णः स्वरः। मात्रा बलम्। साम सन्तानः। इत्युक्तः शीक्षाध्यायः। शीक्षां पञ्च॥ इति प्रथमोऽनुवाकः ॥ १ ॥ सह नौ यशः। सह नौ ब्रह्मवर्चसम्। अथातः सꣳहिताया उपनिषदं व्याख्यास्यामः। पञ्चस्वधिकरणेषु। अधिलोकमधिज्यौतिषमधिविद्यमधिप्रजमध्यात्मम्। ता महासꣳहिता इत्याचक्षते। अथाधिलोकम्। पृथिवी पूर्वरूपम्। द्यौरुत्तररूपम्। आकाशः सन्धिः।

32

वायुः सन्धानम्। इत्यधिलोकम् । अथाधिज्यौतिषम्। अग्निः पूर्वरूपम् । आदित्य उत्तररूपम् । आपः सन्धिः । वैद्युतः सन्धानम् । इत्यधिज्यौतिषम् । अथाधिविद्यम् । आचार्यः पूर्वरूपम् । अन्तेवास्युत्तररूपम् । विद्या सन्धिः । प्रवचनꣳसन्धानम् । इत्यधिविद्यम् । अथाधिप्रजम् । माता पूर्वरूपम् । पितोत्तररूपम् । प्रजा सन्धिः । प्रजननꣳसन्धानम् । इत्यधिप्रजम् । अथाध्यात्मम् । अधरा हनुः पूर्वरूपम् । उत्तरा हनुरुत्तररूपम् । वाक्सन्धिः । जिव्हा सन्धानम् । इत्यध्यात्मम् । इतीमा महासꣳहिताः । य एवमेता महासꣳहिता व्याख्याता वेद । सन्धीयते प्रजया पशुभिः। ब्रह्मवर्चसेनान्नाद्येन सुवर्ग्येण लोकेन। सन्धिराचार्यः पूर्वरूपमित्यधिप्रजं लोकेन ॥ इति द्वितीयोऽनुवाकः ॥ २ ॥ यश्छन्दसामृषभो विश्वरूपः । छन्दोभ्योऽध्यमृतात्सम्बभूव । स मेन्द्रो मेधया स्पृणोतु । अमृतस्य देवधा-

रणो भूयासम् । शरीरं मे विचर्षणम् । जिव्हा मे मधुमत्तमा । कर्णाभ्यां भूरि विश्रुवम् । ब्रह्मणः कोशोऽसि मेधया पिहितः । श्रुतं मे गोपाय । आवहन्ती वितन्वाना । कुर्वाणा चीरमात्मनः । वासांसि मम गावश्च । अन्नपाने च सर्वदा । ततो मे श्रियमावह । लोमशां पशुभिः सह स्वाहा । आमायन्तु ब्रह्मचारिणः स्वाहा । विमायन्तु ब्रह्मचारिणः स्वाहा । प्रमायन्तु ब्रह्मचारिणः स्वाहा । दमायन्तु ब्रह्मचारिणः स्वाहा । शमायन्तु ब्रह्मचारिणः स्वाहा । यशो जनेऽसानि स्वाहा । श्रेयान्वस्यसोऽसानि स्वाहा । तं त्वा भग प्रविशानि स्वाहा । स मा भग प्रविश स्वाहा । तस्मिन्त्सहस्रशाखे । निभगाहं त्वयि मृजे स्वाहा । यथापः प्रवता यन्ति । यथा मासा अहर्जरम् । एवं मां ब्रह्मचारिणः । धातरायन्तु सर्वतः स्वाहा । प्रतिवेशोऽसि प्रमा भाहि प्र मा पद्यस्व । वितन्वाना

शमायन्तु ब्रह्मचारिणः स्वाहा धातरायन्तु सर्वतः स्वाहैकं च ॥इति तृतीयोऽनुवाकः॥ ३ ॥



भूर्भुवःसुवरिति वा एतास्तिस्रो व्याहृतयः। तासामु ह स्मैतां चतुर्थीम्। माहाच-मस्यः प्रवेदयते। मह इति। तद्ब्रह्म।स आत्मा। अङ्गान्यन्या देवताः। भूरिति वा अयं लोकः। भुव इत्यन्तरिक्षम्। सुवरित्यसौ लोकः। मह इत्यादित्यः। आदित्येन वाव सर्वे लोका महीयन्ते। भूरिति वा अग्निः। भुव इति वायुः। सुवरित्यादित्यः। मह इति चन्द्रमाः। चन्द्रमसा वाव सर्वाणि ज्योतीꣳषि महीयन्ते। भूरिति वा ऋचः। भुव इति सामानि। सुवरिति यजूꣳषि। मह इति ब्रह्म। ब्रह्मणा वाव सर्वे वेदा मही-यन्ते। भूरिति वै प्राणः। भुव इत्यपानः। सुवरिति व्यानः। मह इत्यन्नम्। अन्नेन वाव सर्वे प्राणा महीयन्ते। ता वा एताश्चतस्रश्चतुर्द्धा। चतस्रश्चतस्रो व्याहृतयः। ता यो

वेद । स वेद ब्रह्म । सर्वेऽस्मै देवा बलिमावहन्ति। असौ लोको यजूꣳषि वेद द्वे च।
इति चतुर्थोऽनुवाकः ॥ ४ ॥ स य एषोऽन्तर्हृदय आकाशः । तस्मिन्नयं पुरुषो मनोमयः ।
अमृतो हिरण्मयः । अन्तरेण तालुके । य एष स्तन इवावलम्बते । सेन्द्रयोनिः । यत्रासौ
केशान्तो विवर्तते । व्यपोह्य शीर्षकपाले । भूरित्यग्नौ प्रतितिष्ठति । भुव इति वायौ ।
सुवरित्यादित्ये। मह इति ब्रह्मणि । आप्नोति स्वाराज्यम् । आप्नोति मनसस्पतिम् ।
वाक्पतिश्चक्षुष्पतिः । श्रोत्रपतिर्विज्ञानपतिः । एतत्ततो भवति । आकाशशरीरं ब्रह्म ।
सत्यात्मप्राणारामं मन आनन्दम्। शान्तिसमृद्धममृतम्। इति प्राचीनयोग्योपास्व । वाया-
वमृतमेकं च॥ इतिपञ्चमोऽनुवाकः॥५॥ पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिशाः। अग्निर्वायु-
रादित्यश्चन्द्रमा नक्षत्राणि । आप ओषधयो वनस्पतय आकाश आत्मा । इत्यधिभूतम् ।

अथाध्यात्मम्। प्राणोव्यानोऽपान उदानः समानः। चक्षुः श्रोत्रं मनो वाक्त्वक्। चर्म माꣳसꣳस्नावास्थिमज्जा। एतदधिविधाय ऋषिरवोचत्। पाङ्क्तं वा इदꣳसर्वम्। पाङ्क्तेनैव पाङ्क्तꣳस्पृणोतीति। सर्वमेकं च॥ इति षष्ठोऽनुवाकः॥ ६॥ओमिति ब्रह्म। ओमितीदꣳसर्वम्। ओमित्येतदनुकृति ह स्म वा अप्योश्रावयेत्याश्रावयन्ति। ओमिति सामानि गायन्ति। ओꣳशोमिति शस्त्राणि शꣳसन्ति। ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति। ओमिति ब्रह्मा प्रसौति। ओमित्यग्निहोत्रमनुजानाति। ओमिति ब्राह्मणः प्रवक्ष्यन्नाह ब्रह्मोपाप्नवानीति। ब्रह्मैवोपाप्नोति ॥ ॐ दश ॥ इति सप्तमोऽनुवाकः ॥ ७ ॥ ऋतं च स्वाध्यायप्रवचने च। सत्यं च स्वाध्यायप्रवचने च। तपश्च स्वाध्यायप्रवचने च। दमश्च स्वाध्यायप्रवचने च। शमश्च स्वाध्यायप्रवचने च। अग्नयश्च स्वाध्यायप्रवचने च। अग्निहोत्रं

च स्वाध्यायप्रवचने च। अतिथयश्च स्वाध्यायप्रवचने च। मानुषं च स्वाध्यायप्रवचने च। प्रजा च स्वाध्यायप्रवचने च। प्रजनश्च स्वाध्यायप्रवचने च। प्रजातिश्च स्वाध्यायप्रवचने च। सत्यमिति सत्यवचा राथीतरः। तप इति तपो नित्यः पौरुशिष्टिः। स्वाध्यायप्रवचने एवेति नाकोमौद्गल्यः। तद्धि तपस्तद्धि तपः। प्रजा च स्वाध्यायप्रवचने च षट्च ॥ इत्यष्टमोऽनुवाकः ॥ ८ ॥ अहं वृक्षस्य रेरिवा। कीर्तिः पृष्ठं गिरेरिव। ऊर्ध्वपवित्रो वाजिनीव स्वमृतमस्मि। द्रविणꣳसवर्चसम्। सुमेधा अमृतोऽक्षितः। इति त्रिशङ्कोर्वेदानुवचनम् ॥ अहꣳषट् ॥ इति नवमोऽनुवाकः ॥ ९ ॥ वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति। सत्यं वद। धर्मं चर। स्वाध्यायान्मा प्रमदः। आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः। सत्यान्न प्रमदितव्यम्। धर्मान्न

प्रमदितव्यम् । कुशलान्न प्रमदितव्यम् । भूत्यै न प्रमदितव्यम् । स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् । देवपितृकार्याभ्यां न प्रमदितव्यम् । मातृदेवो भव । पितृदेवो भव । आचार्यदेवो भव । अतिथिदेवो भव । यान्यनवद्यानि कर्माणि । तानि सेवितव्यानि । नो इतराणि । यान्यस्माकꣳसुचरितानि । तानि त्वयोपास्यानि । नो इतराणि । ये के चास्मच्छ्रेयाꣳसो ब्राह्मणाः । तेषां त्वयासनेन प्रश्वसितव्यम् । श्रद्धया देयम् । अश्रद्धयादेयम् । श्रिया देयम् । ह्रिया देयम् । भिया देयम् । संविदा देयम् । अथ यदि ते कर्मचिकित्सा वा वृत्तविचिकित्सा वा स्यात् । ये तत्र ब्राह्मणाः सम्मर्शिनः । युक्ता-अयुक्ताः । अलूक्षा धर्मकामाः स्युः । यथा ते तत्र वर्तेरन् । तथा तत्र वर्तेथाः । अथा-भ्याख्यातेषु । ये तत्र ब्राह्मणाः सम्मर्शिनः । युक्ता अयुक्ताः । अलूक्षा धर्मकामाः स्युः । ॥ ३० ॥

यथा ते तेषु वर्तेरन् । तथा तेषु वर्तेथाः । एष आदेशः । एष उपदेशः । एषा वेदोपनिषत् । एतदनुशासनम् । एवमुपासितव्यम् । एवमुचैतदुपास्यम् । स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यं तानि त्वयोपास्यानि स्याचेषु वर्तेरन् । सप्त च ॥ इति दशमोऽनुवाकः ॥ १० ॥ शं नो मित्रः शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्मावादिषम् । ऋतमवादिषम् । सत्यमवादिषम् । तन्मामावीत् । तद्वक्तारमावीत् । आवीन्माम् । आवीद्वक्तारम् ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ ६ ॥

अथ ब्रह्मानन्दवल्लीप्रारम्भः ॥ ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ ॐ ब्रह्मवि-

दाप्नोति परम् । तदेषाभ्युक्ता । सत्यं ज्ञानमनन्तं ब्रह्म । यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान्कामान्त्सह । ब्रह्मणा विपश्चितेति । तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी । पृथिव्या ओषधयः । ओषधीभ्योऽन्नम् । अन्नात्पुरुषः । स वा एष पुरुषोऽन्नरसमयः । तस्येदमेव शिरः । अयं दक्षिणः पक्षः । अयमुत्तरः पक्षः । अयमात्मा । इदं पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥ इति प्रथमोऽनुवाकः ॥ १ ॥ अन्नाद्वै प्रजाः प्रजायन्ते । याः काश्च पृथिवीꣳश्रिताः । अथो अन्नेनैव जीवन्ति । अथैनदपि यन्त्यन्ततः । अन्नꣳहि भूतानां ज्येष्ठम् । तस्मात्सर्वौषधमुच्यते । सर्वं वै तेऽन्नमाप्नुवन्ति । येऽन्नं ब्रह्मोपासते । अन्नꣳहि भूतानां ज्येष्ठम् । तस्मात्सर्वौषधमुच्यते । अन्नाद्भूतानि जायन्ते । जातान्यन्नेन वर्धन्ते ।

अद्यतेऽत्ति च भूतानि । तस्मादन्नं तदुच्यत इति । तस्माद्वा एतस्मादन्नरसमयात् । अन्योऽन्तर आत्मा प्राणमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य प्राण एव शिरः । व्यानो दक्षिणः पक्षः । अपान उत्तरः पक्षः । आकाश आत्मा । पृथिवी पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥ इति द्वितीयोऽनुवाकः ॥ २ ॥ प्राणं देवा अनु प्राणन्ति । मनुष्याः पशवश्च ये । प्राणो हि भूतानामायुः । तस्मात्सर्वायुषमुच्यते । सर्वमेव त आयुर्यन्ति । ये प्राणं ब्रह्मोपासते । प्राणो हि भूतानामायुः । तस्मात्सर्वायुषमुच्यत इति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य । तस्माद्वा एतस्मात्प्राणमयात् । अन्योऽन्तर आत्मा मनोमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः ।

तैत्ति० ॥ ३२ ॥

तस्य यजुरेवशिरः । ऋग्दक्षिणः पक्षः । सामोत्तरः पक्षः । आदेश आत्मा । अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥ इति तृतीयोऽनुवाकः ॥ ३ ॥ यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कदाचनेति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य । तस्माद्वा एतस्मान्मनोमयात् । अन्योऽन्तर आत्मा विज्ञानमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य श्रद्धैव शिरः । ऋतं दक्षिणः पक्षः । सत्यमुत्तरः पक्षः । योग आत्मा । महः पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥ इति चतुर्थोऽनुवाकः ॥ ४ ॥ विज्ञानं यज्ञं तनुते । कर्माणि तनुतेऽपि च । विज्ञानं देवाः सर्वे । ब्रह्म ज्येष्ठमुपासते । विज्ञानं ब्रह्म चेद्वेद । तस्माच्चेन्न प्रमाद्यति । शरीरे पाप्मनो हित्वा । सर्वान्कामा-

उ० ब्र० ॥ ३२ ॥

न्त्समश्नुत इति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य । तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योऽन्तर आत्मानन्दमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥ इति पञ्चमोऽनुवाकः ॥ ५ ॥ असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुरिति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य । अथातोऽनुप्रश्नाः । उताविद्वानमुं लोकं प्रेत्य । कश्चन गच्छती ३ आहो विद्वानमुं लोकं प्रेत्य । कश्चित्समश्नुता ३ उ । सोऽकामयत । बहु स्यां प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा । इदꣳसर्वमसृजत । यदिदं किं च । तत्सृष्ट्वा । तदेवानु-

प्राविशत् । तदनुप्रविश्य । सच्च त्यच्चाभवत् । निरुक्तं चानिरुक्तं च । निलयनं चानिलयनं च । विज्ञानं चाविज्ञानं च । सत्यं चानृतं च सत्यमभवत् । यदिदं किं च । तत्सत्यमित्याचक्षते । तदप्येष श्लोको भवति ॥ इति षष्ठोऽनुवाकः ॥ ६ ॥ असद्वा इदमग्र आसीत् । ततो वै सदजायत । तदात्मानꣳस्वयमकुरुत । तस्मात्तत्सुकृतमुच्यत इति । यद्वै तत्सुकृतम् । रसो वै सः । रसꣳह्येवायं लब्ध्वानन्दी भवति । को ह्येवान्यात्कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्दयाति । यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति । यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति । तत्त्वेव भयं विदुषो मन्वानस्य । तदप्येष श्लोको भवति ॥ इति सप्तमोऽनुवाकः ॥ ७ ॥ भीषा-

स्माद्वातः पवते । भीषोदेति सूर्यः । भीषास्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चम इति । सैषानन्दस्य मीमाꣳसा भवति । युवा स्यात्साधुयुवाध्यायकः । आशिष्ठो द्रढिष्ठो बलिष्ठः । तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् । स एको मानुष आनन्दः । ते ये शतं मानुषा आनन्दाः । स एको मनुष्यगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं मनुष्यगन्धर्वाणामानन्दाः । स एको देवगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं देवगन्धर्वाणामानन्दाः । स एकः पितृणां चिरलोकलोकानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं पितृणां चिरलोकलोकानामानन्दाः । स एक आजानजानां देवानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतमाजानजानां देवानामन्दाः । स एकः कर्मदेवानां देवाना-

मानन्दः। ये कर्मणा देवानपि यन्ति। श्रोत्रियस्य चाकामहतस्य। ते ये शतं कर्म-
देवानां देवानामानन्दाः। स एको देवानामानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये
शतं देवानामानन्दाः। स एक इन्द्रस्यानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शत-
मिन्द्रस्यानन्दाः। स एको बृहस्पतेरानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतं
बृहस्पतेरानन्दाः। स एकः प्रजापतेरानन्दः। श्रोत्रियस्य चाकामहतस्य। ते ये शतं
प्रजापतेरानन्दाः। स एको ब्रह्मण आनन्दः। श्रोत्रियस्य चाकामहतस्य। स यश्चायं
पुरुषे। यश्चासावादित्ये। स एकः। स य एवंवित्। अस्माल्लोकात्प्रेत्य। एतमन्नमय-
मात्मानमुपसंक्रामति। एतं प्राणमयमात्मानमुपसंक्रामति। एतं मनोमयमात्मानमुपसं-
क्रामति। एतं विज्ञानमयमात्मानमुपसंक्रामति। एतमानन्दमयमात्मानमुपसंक्रामति। तद-

प्येष श्लोको भवति॥ इत्यष्टमोऽनुवाकः ॥ ८ ॥ यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्। न बिभेति कुतश्चनेति। एतꣳह वाव न तपति। किमहꣳ साधु नाकरवम्। किमहं पापमकरवमिति। स य एवंविद्वानेते आत्मानꣳस्पृणुते। उभे ह्येवैष एते आत्मानꣳस्पृणुते। य एवं वेद। इत्युपनिषत्। इति नवमोऽनुवाकः ॥ ९ ॥ सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्विनावधीतमस्तु मा विद्विषावहै ॥ ॐ शान्तिः शान्तिः। शान्तिः ॥ ॥ ६५ ॥ ॥ ६१ ॥

अथ भृगुवल्लीप्रारभ्यते ॥ हरिः ॐ ॥ सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्विनावधीतमस्तु मा विद्विषावहै ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ भृगुर्वै वारुणिः। वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तस्मा

एतत्प्रोवाच । अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति । तꣳ होवाच । यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा । इति प्रथमोऽनुवाकः ॥ १ ॥ अन्नं ब्रह्मेति व्यजानात् । अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते । अन्नेन जातानि जीवन्ति । अन्नं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥ इति द्वितीयोऽनुवाकः ॥ २ ॥ प्राणो ब्रह्मेति व्यजानात् । प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते । प्राणेन जातानि जीवन्ति । प्राणं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच ।

तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥ इति तृतीयोऽनुवाकः ॥ ३ ॥ मनो ब्रह्मेति व्यजानात् । मनसो ह्येव खल्विमानि भूतानि जायन्ते । मनसा जातानि जीवन्ति । मनः प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳहोवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥ इति चतुर्थोऽनुवाकः ॥ ४ ॥ विज्ञानं ब्रह्मेति व्यजानात् । विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते । विज्ञानेन जातानि जीवन्ति । विज्ञानं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳहोवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥ इति पञ्चमोऽनुवाकः ॥ ५ ॥ आनन्दो

तैत्ति० ब्रह्मेति व्यजानात् । आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति । आनन्दं प्रयन्त्यभिसंविशन्तीति । सैषा भार्गवी वारुणी विद्या । परमे व्योमन्प्रतिष्ठिता । य एवं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान्भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान्कीर्त्या ॥ इति षष्ठोऽनुवाकः ॥ ६ ॥ अन्नं न निन्द्यात् । तद्व्रतम् । प्राणो वा अन्नम् । शरीरमन्नादम् । प्राणे शरीरं प्रतिष्ठितम् । शरीरे प्राणः प्रतिष्ठितः । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान्भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान्कीर्त्या ॥ इति सप्तमोऽनुवाकः ॥ ७ ॥ अन्नं न परिचक्षीत । तद्व्रतम् । आपो वा अन्नम् । ज्योतिरन्नादम् । अप्सु ज्योतिः प्रतिष्ठितम् । ज्योतिष्यापः प्रतिष्ठिताः । तदेतदन्नमन्ने प्रति-

॥ ३६ ॥ उ० भृ ॥ ३३

ष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महा-
न्भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान्कीर्त्या । इत्यष्टमोऽनुवाकः ॥ ८ ॥ अन्नं
बहु कुर्वीत । तद्व्रतम् । पृथिवी वा अन्नम् । आकाशोऽन्नादः । पृथिव्यामाकाशः प्रति-
ष्ठितः । आकाशे पृथिवी प्रतिष्ठिता । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने
प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान्भवति प्रजया पशुभिर्ब्र-
ह्मवर्चसेन । महान्कीर्त्या । इति नवमोऽनुवाकः ॥ ९ ॥ न कंचन वसतौ प्रत्या-
चक्षीत । तद्व्रतम् । तस्माद्यया कया च विधया बह्वन्नं प्राप्नुयात् । अराध्यस्मा अन्न-
मित्याचक्षते । एतद्वै मुखतोऽन्नꣳराद्धम् । मुखतोऽस्मा अन्नꣳराध्यते । एतद्वै मध्य-
तोऽन्नꣳराद्धम् । मध्यतोऽस्मा अन्नꣳराध्यते । एतद्वा अन्ततोऽन्नꣳराद्धम् । अन्ततोऽस्मा

अन्नश्राध्यते । य एवं वेद । क्षेम इति वाचि । योगक्षेम इति प्राणापानयोः । कर्मेति हस्तयोः । गतिरिति पादयोः । विमुक्तिरिति पायौ । इति मानुषीः समाज्ञाः । अथ दैवीः । तृप्तिरिति वृष्टौ । बलमिति विद्युति । यश इति पशुषु । ज्योतिरिति नक्षत्रेषु । प्रजातिरमृतमानन्द इत्युपस्थे । सर्वमित्याकाशे । तत्प्रतिष्ठेत्युपासीत । प्रतिष्ठावान्भवति । तन्मह इत्युपासीत । महान्भवति । तन्मन इत्युपासीत । मानवान्भवति । तन्नम इत्युपासीत । नम्यन्तेऽस्मै कामाः । तद्ब्रह्मेत्युपासीत । ब्रह्मवान्भवति । तद्ब्रह्मणः परिमर इत्युपासीत । पर्येणं म्रियन्ते द्विषन्तः सपत्नाः । परि येऽप्रिया भ्रातृव्याः । स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः । स य एवंवित् । अस्माल्लोकात्प्रेत्य । एतमन्नमयमात्मानमुपसंक्रम्य । एतं प्राणमयमात्मानमुपसंक्रम्य । एतं मनोमयमात्मानमुपसंक्रम्य । ॥ ३७ ॥

एतं विज्ञानमयमात्मानमुपसंक्रम्य । एतमानन्दमयमात्मानमुपसंक्रम्य । इमाँल्लोकान्कामान्नीकामरूप्यनुसञ्चरन् । एतत्साम गायन्नास्ते । हा ३ वु हा ३ वु हा ३ वु । अहमन्नमहमन्नमहमन्नम् । अहमन्नादो ३ अहमन्नदो ३ अमहमन्नादः । अहꣴश्लोककृदहꣴश्लोककृदहꣴश्लोककृत् । अहमस्मि प्रथमजा ऋता ३ स्य । पूर्वं देवेभ्योऽमृतस्य ना ३ भायि । यो मा ददाति स इ देव मा ३ वाः । अहमन्नमन्नमदन्तमा ३ द्मि । अहं विश्वं भुवनमभ्यभवां ३ सुवर्नज्योतीः । य एवं वेद । इत्युपनिषत् ॥ ६ ॥ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ इति भृगुवल्ली समाप्ता ॥ ३ ॥

अथ ऋग्वेदीयैतरेयोपनिषत्प्रारम्भः ॥ ॐ वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरावीर्म एधि वेदस्य म आणीस्थः श्रुतं मे मा प्रहासीरनेनाधीते नाहोरात्रान्सन्दधाम्यृतं वदिष्यामि सत्यं वदिष्यामि तन्मामवतु तद्वक्तारमवत्ववतु मामवतु वक्तारमवतु वक्तारम् ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ हरिः ॐ आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्स ईक्षत लोकान्नु सृजा इति स इमाँल्लोकानसृजताम्भो मरीचीर्मरमापोऽदोम्भः परेण दिवं द्यौः प्रतिष्ठान्तरिक्षं मरीचयः पृथिवी मरो या अधस्तात्ता आपः स ईक्षतेमे नु लोका लोकपालान्नु सृजा इति सोऽद्भ्य एव पुरुषं समुद्धृत्यामुर्छयत्तमभ्यतपत्तस्याभितप्तस्य मुखं निरभिद्यत यथाण्डं मुखाद्वाग्वाचोऽग्निर्नासिके निरभिद्येतां नासिकाभ्यां प्राणः प्राणाद्वायुरक्षिणी निरभिद्ये-

तामक्षीभ्यां चक्षुश्चक्षुष आदित्यः कर्णौ निरभिद्येतां कर्णाभ्यां श्रोत्रं श्रोत्राद्दिशस्त्वङ्निर-भिद्यत त्वचो लोमानि लोमभ्य ओषधिवनस्पतयो हृदयं निरभिद्यत हृदयान्मनो मन-सश्चन्द्रमा नाभिर्निरभिद्यत नाभ्या अपानोऽपानान्मृत्युः शिश्नं निरभिद्यत शिश्नाद्रेतो रेतस आपः॥ इति प्रथमः खण्डः॥ १ ॥ ता एता देवताः सृष्टा अस्मिन्महत्यर्णवे प्राप तंस्तमशनापिपासाभ्यामन्ववार्जत्ता एनमब्रुवन्नायतनं नः प्रजानीहि यस्मिन्प्रति-ष्ठिता अन्नमदामेति ताभ्यो गामानयत्ता अब्रुवन्न वै नोऽयमलमिति ताभ्योऽश्वमान-यत्ता अब्रुवन्न वै नोऽयमलमिति ताभ्यः पुरुषमानयत्ता अब्रुवन्त्सुकृतं बतेति पुरुषो वाव सुकृतं ता अब्रवीद्यथायतनं प्रविशतेत्यग्निर्वाग्भूत्वा मुखं प्राविशद्वायुः प्राणो भूत्वा नासिके प्राविशदादित्यश्चक्षुर्भूत्वाक्षिणी प्राविशद्दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्नो-

ऋ० ऐ० | षधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशंश्चन्द्रमा मनो भूत्वा हृदयं प्राविशन्मृत्युर | उ०

पानो भूत्वा नाभिं प्राविशदापो रेतो भूत्वा शिश्नं प्राविशंस्तमशनापिपासे अब्रूतामावा-
भ्यामभिप्रजानीहीति ते अब्रवीदेतास्वेव वां देवतास्वाभजाम्येतासु भागिन्यौ करोमीति
तस्माद्यस्यै कस्यै च देवतायै हविर्गृह्यते भागिन्यावेवास्यामशनापिपासे भवतः ॥
इति द्वितीयः खण्डः ॥ २ ॥ स ईक्षतेमे नु लोकाश्च लोकपालाश्चान्नमेभ्यः सृजा
इति सोऽपोऽभ्यतपत्ताभ्योऽभितप्ताभ्यो मूर्तिरजायत या वै सा मूर्तिरजायतान्नं वै
तत्तदेनदभिसृष्टं पराङत्यजिघांसत्तद्वाचा जिघृक्षत्तन्नाशक्नोद्वाचा ग्रहीतुं स यद्धैनद्वा-
चाग्रहैष्यदभिव्याहृत्य हैवान्नमत्रप्स्यत्तत्प्राणेनाजिघृक्षत्तन्नाशक्नोत्प्राणेन ग्रहीतुं स
यद्धैनत्प्राणेनाग्रहैष्यदभिप्राण्य हैवान्नमत्रप्स्यत्तच्चक्षुषाजिघृक्षत्तन्नाशक्नोच्चक्षुषा ग्रहीतुं

॥ ३९ ॥ (left margin) ॥ ३९ ॥ (right margin)

स यद्धैनच्चक्षुषाग्रहैष्यद्दृष्ट्वा हैवान्नमत्रप्स्यत्तच्छ्रोत्रेणाजिघृक्षत्तन्नाशक्नोच्छ्रोत्रेण ग्रहीतुं स यद्धैनच्छ्रोत्रेणाग्रहैष्यच्छ्रुत्वा हैवान्नमत्रप्स्यत्तत्त्वचाजिघृक्षत्तन्नाशक्नोत्त्वचा ग्रहीतुं स यद्धैनत्त्वचाग्रहैष्यत्स्पृष्ट्वा हैवान्नमत्रप्स्यत्तन्मनसाजिघृक्षत्तन्नाशक्नोन्मनसा ग्रहीतुं स यद्धैनन्मनसाग्रहैष्यद्ध्यात्वा हैवान्नमत्रप्स्यत्तच्छिश्नेनाजिघृक्षत्तन्नाशक्नोच्छिश्नेन ग्रहीतुं स यद्धैनच्छिश्नेनाग्रहैष्यद्विसृज्य हैवान्नमत्रप्स्यत्तदपानेनाजिघृक्षत्तदावयत्सैषोऽन्नस्य ग्रहो यद्वायुरन्नायुर्वा एष यद्वायुः स ईक्षत कथं न्विदं मदृते स्यादिति स ईक्षत कतरेण प्रपद्या इति स ईक्षत यदि वाचाभिव्याहृतं यदि प्राणेनाभिप्राणितं यदि चक्षुषा दृष्टं यदि श्रोत्रेण श्रुतं यदि त्वचा स्पृष्टं यदि मनसा ध्यातं यद्यपानेनाभ्यपानितं यदि शिश्नेन विसृष्टमथ कोऽहमिति स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत सैषा

विदृतिर्नाम द्वास्तदेतन्नान्दनं तस्य त्रय आवसथास्त्रयः स्वप्ना अयमावसथोऽयमात्र सथोऽयमावसथ इति स जातो भूतान्यभिव्यैख्यत्किमिहान्यं वावदिषदिति । स एतमेव पुरुषं ब्रह्म ततममपश्यदिदमदर्शमितीँ३ तस्मादिदन्द्रो नामेदन्द्रो ह वै नाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः परोक्षप्रिया इव हि देवाः ॥ इति तृतीयः खण्डः ॥ ३ ॥ इत्यैतरेये द्वितीयारण्यके चतुर्थोऽध्यायः ॥ ४ ॥ उपनिषत्सु प्रथमोऽध्यायः ॥ १ ॥ पुरुषे ह वा अयमादितो गर्भो भवति यदेतद्रेतस्तदेतत्सर्वेभ्योऽङ्गेभ्यस्तेजः सम्भूतमात्मन्येवात्मानं बिभर्ति तद्यदा स्त्रियां सिञ्चत्यथैनज्जनयति तदस्य प्रथमं जन्म तत्स्त्रिया आत्मभूयं गच्छति यथा स्वमङ्गं तथा तस्मादेनां न हिनस्ति सास्यैतमात्मानमत्र गतं भावयति सा भावयित्री भावयितव्या भवति तं स्त्री

गर्भं बिभर्त्ति सोऽग्र एव कुमारं जन्मनोऽग्रेऽधिभावयति स यत्कुमारं जन्मनोऽग्रेऽधि-भावयत्यात्मानमेव तद्भावयत्येषां लोकानां सन्तत्या एवं संन्तता हीमे लोकास्तदस्य द्वितीयं जन्म सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयतेऽथास्यायमितर आत्मा कृतकृत्यो वयोगतः प्रैति स इतः प्रयन्नेव पुनर्जायते तदस्य तृतीयं जन्म तदुक्तमृ-षिणा गर्भेनु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा शतं मा पुर आयसीररक्ष-न्नधः श्येनो जवसा निरदीयमिति गर्भ एवैतच्छयानो वामदेव एवमुवाच स एवं विद्वानस्माच्छरीरभेदादूर्ध्व उत्क्रम्यामुष्मिन्त्स्वर्गे लोके सर्वान्कामानात्वामृतः समभव-त्समभवत् ॥ इति चतुर्थः खण्डः ॥ ४ ॥ इत्यैतरेयारण्यके पञ्चमोऽध्यायः ॥ ५ ॥ उपनिषत्सु द्वितीयोऽध्यायः ॥ २ ॥ कोऽयमात्मेति वयमुपास्महे कतरः स आत्मा येन

वा पश्यति येन वा शृणोति येन वा गन्धानाजिघ्रति येन वा वाचं व्याकरोति येन वा स्वादु चास्वादु च विजानाति यदेतद्धृदयं मनश्चैतत्सञ्ज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृतिः सङ्कल्पः क्रतुरसुः कामो वश इति सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्त्येष ब्रह्मैष इन्द्र एष प्रजापतिरेते सर्वे देवा इमानि च पञ्च महाभूतानि पृथिवी वायुराकाश आपो ज्योतींषीत्येतानीमानि च क्षुद्रमिश्राणीव बीजानीतराणि चेतराणि चाण्डजानि च जारुजानि च स्वेदजानि चोद्भिज्जानि चाश्वा गावपुरुषा हस्तिनो यत्किञ्चेदं प्राणि जङ्गमं च पतत्रि च यच्च स्थावरं सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म स एतेन प्रज्ञेनात्मनास्माल्लोकादुत्क्रम्यामुष्मिन्स्वर्गे लोके सर्वान्कामानाप्त्वामृतः समभ- ॥ ४१ ॥

वत्सममवत् ॥ इति पञ्चमः खण्डः ॥ ५ ॥ इत्यैतरेयारण्यके षष्ठोऽध्यायः ॥ ६ ॥ उपनिषत्सु तृतीयोऽध्यायः ॥ ३ ॥ ॐ वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरावीर्म एधि वेदस्य म आणीस्थः श्रुतं मे मा प्रहासीरनेनाधीते नाहोरात्रान्त्सन्दधाम्यृतं वदिष्यामि सत्यं वदिष्यामि तन्मामवतु तद्वक्तारमवत्ववतु मामवतु वक्तारमवतु वक्तारम् ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ इत्यैतरेयोपनिषत्संपूर्णा ॥ ८ ॥

॥ अथ सामवेदीयच्छान्दोग्योपनिषत्प्रारम्भः ॥ हरिः ॐ ॥ आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि सर्वं ब्रह्मोपनिषदं माहं ब्रह्मनिराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं मेऽस्तु तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ॐ शान्तिः शान्तिः शान्तिः ॥

ओमित्येतदक्षरमुद्गीथमुपासीतोमिति ह्युद्गायति तस्योपव्याख्यानमेषां भूतानां पृथिवी रसः पृथिव्या आपो रसोऽपामोषधयो रस ओषधीनां पुरुषो रसः पुरुषस्य वाग्रसो वाच ऋग्रस ऋचः साम रसः साम्न उद्गीथो रसः स एष रसानाꣳ रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः कतमा कतमर्क्कतमत्कतमत्साम कतमः कतम उद्गीथ इति विमृष्टं भवति वागेवर्क्प्राणः सामोमित्येतदक्षरमुद्गीथस्तद्वा एतन्मिथुनं यद्वाक्च प्राणश्चर्क्च साम च तदेतन्मिथुनमोमित्येतस्मिन्नक्षरे सꣳसृज्यते यदा वै मिथुनौ समागच्छत आपयतो वै तावन्योन्यस्य काममापयिता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते तद्वा एतदनुज्ञाक्षरं यद्धि किञ्चानुजानात्योमित्येव तदाहैषो एव समृद्धिर्यदनुज्ञा समर्द्धयिता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते तेनेयं

त्रयी विद्या वर्तत ओमित्याश्रावयत्योमिति श॑ꣳसत्योमित्युद्गायत्येतस्यैवाक्षरस्यापचित्यै महिम्ना रसेन तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद नाना तु विद्या चाविद्या च यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति खल्वेतस्यैवाक्षरस्यो-पव्याख्यानं भवति ॥ तृतीयस्य प्रथमः खण्डः ॥ १ ॥ देवासुरा ह वै यत्र संयेतिर उभये प्राजापत्यास्तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिभविष्याम इति ते ह नासिक्यं प्राणमुद्गीथमुपासाञ्चक्रिरे तꣳहासुराः पाप्मना विविधुस्तस्मात्तेनोभयं जिघ्रति सुरभि च दुर्गन्धि च पाप्मना ह्येष विद्धोऽथ ह वाचमुद्गीथमुपासाञ्चक्रिरे ताꣳहासुराः पाप्मना विविधुस्तस्मात्तयोभयं वदति सत्यं चानृतं च पाप्मना ह्येषा विद्धाथ ह चक्षुरुद्गीथमुपा-साञ्चक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात्तेनोभयं पश्यति दर्शनीयं चादर्शनीयं च

पाप्मना ह्येतद्विद्धमथ ह श्रोत्रमुद्गीथमुपासाञ्चक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात्ते-
नोभयꣳ शृणोति श्रवणीयं चाश्रवणीयं च पाप्मना ह्येतद्विद्धमथ ह मन उद्गीथमुपासां
चक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात्तेनोभयꣳसङ्कल्पयते सङ्कल्पनीयं चासङ्कल्पनीयं
च पाप्मना ह्येतद्विद्धमथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे तꣳहासुरा ऋत्वा
विदध्वंसुर्यथाश्मानमाखणमृत्वा विध्वꣳसेतैवं यथाश्मानमाखणमृत्वा विध्वꣳसत एवꣳहैव
स विध्वꣳसते य एवंविदि पापं कामयते यश्चैनमभिदासति स एषोऽश्माखणो नैवैतेन
सुरभि न दुर्गन्धि विजानात्यपहतपाप्मा ह्येष तेन यदश्नाति यत्पिबति तेनेतरान्प्राणान-
वत्येतमु एवान्ततोऽवित्त्वोत्क्रामति व्याददात्येवान्तत इति तꣳहाङ्गिरा उद्गीथमुपासां
चक्र एतमु एवाङ्गिरसं मन्यन्तेऽङ्गानां यद्रसस्तेन तꣳह बृहस्पतिरुद्गीथमुपासां चक्र एत-

मु एव बृहस्पतिं मन्यन्ते वाग्घि बृहती तस्या एष पतिस्तेन त᳖ँ हायास्य उद्गीथमुपासां चक्र एतमु एवायास्यं मन्यन्त आस्याद्यदयते तेन त᳖ँ ह बको दाल्भ्यो विदाञ्चकार स ह नैमिषीयानामुद्गाता बभूव स ह स्मैभ्यः कामानागायत्यागाता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्त इत्यध्यात्मम् ॥ तृतीयस्य द्वितीयः खण्डः ॥ २ ॥

अथाधिदैवतं य एवासौ तपति तमुद्गीथमुपासीतोद्यन्वा एष प्रजाभ्य उद्गायत्युद्य᳖ँस्तमो-भयमपहन्त्यपहन्ता ह वै भयस्य तमसो भवति य एवं वेद समान उ एवायं चासौ चोष्णोऽयमुष्णोऽसौ स्वर इतीममाचक्षते स्वर इति प्रत्यास्वर इत्यमुं तस्माद्वा एतमिम-ममुं चोद्गीथमुपासीताथ खलु व्यानमेवोद्गीथमुपासीत यद्वै प्राणिति स प्राणो यदपानिति सोऽपानोऽथ यः प्राणापानयोः सन्धिः स व्यानो यो व्यानः सा वाक्तस्मादप्राणन्नन-

पानन्वाचमभिव्याहरति या वाक्सर्क्तस्मादप्राणन्ननपानन्नृचमभिव्याहरति यर्क्तत्साम तस्मादप्राणन्ननपानन्त्साम गायति यत्साम स उद्गीथस्तस्मादप्राणन्ननपानन्नुद्गायत्यतो यान्यन्यानि वीर्यवन्ति कर्माणि यथाग्नेर्मन्थनमाजेः सरणं दृढस्य धनुष आयमनमप्राणन्ननपानꣳस्तानि करोत्येतस्य हेतोर्व्यानमेवोद्गीथमुपासीताथ खल्वूद्गीथाक्षराण्युपासीतोद्गीथ इति प्राण एवोत्प्राणेन ह्युत्तिष्ठति वाग्गीर्वाचो ह गिर इत्याचक्षतेऽन्नं थमन्ने हीदꣳसर्वꣳस्थितं द्यौरेवोदन्तरिक्षं गीः पृथिवी थमादित्य एवोद्वायुर्गीरग्निस्थꣳसामवेद एवोद्यजुर्वेदो गीर्ऋग्वेदस्थं दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतान्येवं विद्वानुद्गीथाक्षराण्युपास्त उद्गीथ इत्यथ खल्वाशीः समृद्धिरुपसरणानीत्युपासीत येन साम्ना स्तोष्यन्त्स्यात्तत्सामोपधावेद्यस्यामृचि तामृचं यदार्षेयं तमृषिं यां देव-

तामभिष्टोष्यन्त्स्यात्तां देवतामुपधावेद्येनच्छन्दसा स्तोष्यन्त्स्यात्तच्छन्द उपधावेद्येन स्तोमेन स्तोष्यमाणः स्यात्त ँ स्तोममुपधावेद्यां दिशमभिष्टोष्यन्त्स्यात्तां दिशमुपधावे-दात्मानमन्तत उपसृत्य स्तुवीत कामं ध्यायन्नप्रमत्तोऽभ्यासो ह यदस्मै स कामः समृद्ध्येत यत्कामः स्तुवीतेति यत्कामः स्तुवीतेति ॥ तृतीयस्य तृतीयः खण्डः ॥ ३ ॥

ओमित्येतदक्षरमुद्गीथमुपासीतोमिति ह्युद्गायति तस्योपव्याख्यानं देवा वै मृत्योर्बिभ्यत-स्त्रयीं विद्यां प्राविश ँ स्ते छन्दोभिरच्छादयन्यदेभिरच्छादय ँ स्तच्छन्दसां छन्दस्त्वं तानु तत्र मृत्युर्यथा मत्स्यमुदके परिपश्येदेवं पर्यपश्यदृचि साम्नि यजुषि ते नु विदित्वोर्ध्वा ऋचः साम्नो यजुषः स्वरमेव प्राविशन्यदा वा ऋचमाप्नोत्योमित्येवातिस्वरत्येव ँ सा-मैवं यजुरेष उ स्वरो यदेतदक्षरमेतदमृतमभयं तत्प्रविश्य देवा अमृता अभया अभव-

न्तस य एतदेवं विद्वानक्षरं प्रणौत्येतदेवाक्षर ँ स्वरममृतमभयं प्रविशति तत्प्रविश्य यद-मृता देवास्तदमृतो भवति ॥ तृतीयस्य चतुर्थः खण्डः ॥ ४ ॥ अथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथ इत्यसौ वा आदित्य उद्गीथ एष प्रणव ॐमिति ह्येष स्वरन्नेत्ये-तमु एवाहमभ्यगासिषं तस्मान्मम त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच रश्मी ँ स्त्वं पर्यावर्त्तयाद्बहवो वैते भविष्यन्तीत्यधिदैवतमथाध्यात्मं य एवायं मुख्यः प्राणस्त-मुद्गीथमुपासीतोमिति ह्येष स्वरन्नेत्येतमु एवाहमभ्यगासिषं तस्मान्मम त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच प्राणा ँ स्त्वं भूमानमभिगायताद्बहवो वै मे भविष्यन्तीत्यथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथ इति होतृषदनाद्धैवापि दुरुद्गीथमनुस-माहरतीत्यनुसमाहरतीति ॥ तृतीयस्य पञ्चमः खण्डः ॥ ५ ॥ इयमेवर्गग्निः साम तदे-

तदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते इयमेव साग्निरमस्तत्सामान्त-
रिक्षमेवर्ग्वायुः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयतेऽन्तरि-
क्षमेव सा वायुरमस्तत्साम द्यौरेवर्गादित्यः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मा-
दृच्यध्यूढꣳ साम गीयते द्यौरेव सादित्योऽमस्तत्साम नक्षत्राण्येवर्क्चन्द्रमाः साम तदे-
तदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते नक्षत्राण्येव सा चन्द्रमा अम-
स्तत्सामाथ यदेतदादित्यस्य शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णं तत्साम तदेतदेत-
स्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयतेऽथ यदेवैतदादित्यस्य शुक्लं भाः सैव
साथ यन्नीलं परः कृष्णं तदमस्तत्सामाथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते
हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवम-

क्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद तस्यर्क्च साम च गेष्णौ तस्मादुद्गीथस्तस्मात्त्वेवोद्गातैतस्य हि गाता स एष ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां चेत्यधिदैवतम् ॥ तृतीयस्य षष्ठः खण्डः ॥ ६ ॥ अथाध्यात्मं वागेवर्क्प्राणः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते वागेव सा प्राणोऽमस्तत्साम चक्षुरेवर्गात्मा साम तदे-तदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते चक्षुरेव सात्मामस्तत्साम श्रोत्रमेवर्ङ्मनः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते श्रोत्र-मेव सा मनोऽमस्तत्सामाथ यदेतदक्ष्णः शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णं तत्साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयतेऽथ यदेवैतदक्ष्णः शुक्लं

भाः सैव साथ यन्नीलं परः कृष्णं तदमस्तत्सामाथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते सैवर्क्तत्साम तदुक्थं तद्यजुस्तद्ब्रह्म तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णा यन्नाम तन्नाम स एष य चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां चेति तद्य इमे वीणायां गायन्त्येतं ते गायन्ति तस्मात्ते धनसनयोऽथ य एतदेवं विद्वान्त्साम गायत्युभौ स गायति सोऽमुनैव स एष ये चामुष्मात्पराञ्चो लोकास्ता ँश्चाप्नोति देवकामा ँश्चाथानेनैव ये चैतस्मादर्वाञ्चो लोकास्ता ँश्चाप्नोति मनुष्यकामा ँश्च तस्मादु हैवंविदुद्गाता ब्रूयात्कं ते काममागायानीत्येष ह्येव कामागानस्येष्टे य एवं विद्वान्त्साम गायति साम गायति ॥ तृतीयस्य सप्तमः खण्डः ॥ ७ ॥ त्रयो होद्गीथे कुशला बभूवुः शिलकः शालावत्यश्चैकितायनो दाल्भ्यः प्रवाहणो जैवलिरिति ते होचु-

रुद्गीथे वै कुशलाः स्मो हन्तोद्गीथे कथा वदाम इति तथेति ह समुपविविशुः स ह प्रवाहणो जैवलिरुवाच भगवन्तावग्रे वदतां ब्राह्मणयोर्वदतोर्वाच॰श्रोष्यामीति स ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाच हन्त त्वा पृच्छानीति पृच्छेति होवाच का साम्नो गतिरिति स्वर इति होवाच स्वरस्य का गतिरिति प्राण इति होवाच प्राणस्य का गतिरित्यन्नमिति होवाचान्नस्य का गतिरित्याप इति होवाचापां का गतिरित्यसौ लोक इति होवाच अमुष्य लोकस्य का गतिरिति न स्वर्गं लोकमतिनयेदिति होवाच स्वर्गं वयं लोक॰सामाभिसं॰स्थापयामः स्वर्गस॰स्ताव॰हि सामेति त॰ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाचाप्रतिष्ठितं वै किल ते दाल्भ्य साम यस्त्वेतर्हि ब्रूयान्मूर्द्धा ते विपतिष्यतीति मूर्द्धा ते विपतेदिति हन्ताहमेतद्भगवत्तो वेदानीति

विद्धीति होवाचामुष्य लोकस्य का गतिरित्ययं लोक इति होवाचास्य लोकस्य का गतिरिति न प्रतिष्ठां लोकमतिनयेदिति होवाच प्रतिष्ठां वयं लोक ँसामाभिस ँस्थापयामः प्रतिष्ठा स ँस्ताव ँहि सामेति त ँह प्रवाहणो जैवलिरुवाचान्तवद्वै किल ते शालावत्य साम यस्त्वेतर्हि ब्रूयान्मूर्द्धा ते विपतिष्यतीति मूर्द्धा ते विपतेदिति हन्ताहमेतद्भगवत्तो वेदानीति विद्धीति होवाच ॥ तृतीयस्याष्टमः खण्डः ॥ ८ ॥ अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणं स एष परोवरीयानुद्गीथः स एषोऽनन्तः परोवरीयो हास्य भवति परोवरीयसो ह लोकाञ्जयति य एतदेवंविद्वान्परोवरीया ँसमुद्गीथमुपास्ते त ँहैतमतिधन्वा शौनक उदरशाण्डिल्यायोक्त्वोवाच यावत्त

एनं प्रजायामुद्गीथं वेदिष्यन्ते परोवरीयो हैभ्यस्तावदस्मिँल्लोके जीवनं भविष्यति तथामुष्मिँल्लोके ऽक इति स य एतमेवं विद्वानुपास्ते परोवरीय एव हास्यास्मिँल्लोके जीवनं भवति तथामुष्मिँल्लोके लोक इति लोके लोक इति ॥ तृतीयस्य नवमः खण्डः ॥ ९ ॥ मटचीहतेषु कुरुष्वाटिक्या सह जाययोषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास स हेभ्यं कुल्माषान्खादन्तं बिभिक्षे तꣳहोवाच ने ऽन्ये विद्यन्ते यच्च ये म इम उपनिहिता इत्येतेषां मे देहीति होवाच तानस्मै प्रददौ हन्तानुपानमित्युच्छिष्टं वै मे पीतꣳस्यादिति होवाच न स्विदेतेऽप्युच्छिष्टा इति न वा अजीविष्यमिमानखादन्निति होवाच कामो म उदपानमिति स ह खादित्वातिशेषाञ्जायाया आजहार साग्र एव सुभिक्षा बभूव तान्प्रतिगृह्य निदधौ स ह प्रातः सञ्जिहान उवाच

यद्धूतान्नस्य लभेमहि लभेमहि धनमात्रा ऽऽराजासौ यक्ष्यते स मा सर्वैरार्त्विज्यैर्वृ-
णीतेति तं जायोवाच हन्त पत इम एव कुल्माषा इति तान्खादित्वामुं यज्ञं वित-
तमेयाय तत्रोद्गातॄनास्तावे स्तोष्यमाणानुपोपविवेश स ह प्रस्तोतारमुवाच प्रस्तोतर्या
देवता प्रस्तावमन्वायत्ता तां चेदविद्वान्प्रस्तोष्यसि मूर्द्धा ते विपतिष्यतीत्येवमेवोद्गा-
तारमुवाचोद्गातर्या देवतोद्गीथमन्वायत्ता तां चेदविद्वानुद्गास्यसि मूर्द्धा ते विपतिष्यतीत्ये-
वमेव प्रतिहर्तारमुवाच प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता तां चेदविद्वान्प्रतिहरिष्य-
सि मूर्द्धा ते विपतिष्यतीति ते ह समारतास्तूष्णीमासाञ्चक्रिरे ॥ तृतीयस्य दशमः खण्डः
॥ १० ॥ अथ हैनं यजमान उवाच भगवन्तं वा अहं विविदिषाणीत्युषस्तिरस्मि
चाक्रायण इति होवाच स होवाच भगवन्तं वा अहमेभिः सर्वैरार्त्विज्यैः पर्यैशिषं

भगवतो वा अहमवित्यान्यानवृषि भगवाꣳस्त्वेव मे सर्वैरार्त्विज्यैरिति तथेत्यथ तर्ह्येत एव समतिसृष्टाः स्तुवतां यावत्त्वेभ्यो धनं दद्यास्तावन्मम दद्या इति तथेति ह यज-मान उवाचाथ हैनं प्रस्तोतोपससाद प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान्प्रस्तोष्यसि मूर्द्धा ते विपतिष्यतीति मा भगवानवोचत्कतमा सा देवतेति प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता तां चेदविद्वान्प्रास्तोष्यो मूर्द्धा ते व्यपतिष्यत्तथोक्तस्य मयेत्यथ हैनमुद्गातोपससादोद्गातर्या देवतोद्गीथमन्वायत्ता तां चेदविद्वानुद्गास्यासि मूर्द्धा ते विप-तिष्यतीति मा भगवानवोचत्कतमा सा देवतेत्यादित्य इति होवाच सर्वाणि ह वा इमानि भूतान्यादित्यमुच्चैःसन्तं गायन्ति सैषा देवतोद्गीथमन्वायत्ता तां चेदविद्वानुद-

गास्यो मूर्द्धा ते व्यपतिष्यत्तथोक्तस्य मयेत्यथ हैनं प्रतिहर्तोपससाद प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता तां चेदविद्वान्प्रतिहरिष्यसि मूर्द्धा ते विपतिष्यतीति मा भगवान्-वोचत्कतमा सा देवतेत्यन्नमिति होवाच सर्वाणि ह वा इमानि भूतान्यन्नमेव प्रति-हरमाणानि जीवन्ति सैषा देवता प्रतिहारमन्वायत्ता तां चेदविद्वान्प्रत्यहरिष्यो मूर्द्धा ते व्यपतिष्यत्तथोक्तस्य मयेति तथोक्तस्य मयेति ॥ तृतीयस्यैकादशः खण्डः ॥ ११ ॥

अथातः शौव उद्गीथस्तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेयः स्वाध्यायमुद्वव्राज तस्मै श्वा श्वेतः प्रादुर्बभूव तमन्ये श्वान उपसमेत्योचुरन्नं नो भगवानागायत्वशनायाम वा इति तान्होवाचेहैव मा प्रातरुपसमीयातेति तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेयः प्रति-पालयाञ्चकार ते ह यथैवेदं बहिष्पवमानेन स्तोष्यमाणाः स ँ रब्धाः सर्पन्तीत्येवमास-

सृपुस्ते ह समुपविश्य हिंचक्रुः। ओ३मदा३मों३पिबा३मों३देवो वरुणः प्रजापतिः सविता२ऽन्नमिहा२ऽहरदन्नपते२ऽन्नमिहाहरा२ऽऽहरो ३ मिति॥ इति द्वादशः खण्डः ॥ १ २ ॥
अयं वाव लोको हाउकारो वायुर्हाइकारश्चन्द्रमा अथकार आत्मेहकारोऽग्निरीकार आदित्य ऊकारो निहव एकारो विश्वेदेवा औहोइकारः प्रजापतिर्हिङ्कारः प्राणः स्वरोऽन्नं या वाग्विराडनिरुक्तस्त्रयोदशस्तोभः सञ्चरो हुङ्कारो दुग्धेऽस्मै वाग्दोहं यो वाचोदोहोऽन्नवानन्नादो भवति य एतामेवꣳसाम्नामुपनिषदं वेदोपनिषदं वेद इति॥ इति तृतीयस्य त्रयोदशः खण्डः ॥१३॥ इति छान्दोग्योपनिषद्ब्राह्मणे प्रथमः प्रपाठकः समाप्तः॥१॥
ॐ समस्तस्य खलु साम्न उपासनꣳसाधु यत्खलु साधु तत्सामेत्याचक्षते यदसाधु तदसामेति तदुताप्याहुः साम्नैनमुपागादिति साधुनैनमुपागादित्येव तदाहुरसाम्नैनमुपागा-

दित्यसाधुनैनमुपागादित्येव तदाहुरथोताप्याहुः साम नो बतेति यत्साधु भवति साधु बतेत्येव तदाहुरसाम नो बतेति यदसाधु भवत्यसाधु बतेत्येव तदाहुः स य एतदेवं विद्वान्साधु सामेत्युपास्तेऽभ्याशो ह यदेन ँसाधवो धर्मा आ च गच्छेयुरुप च नमेयुः ॥ चतुर्थस्य प्रथमः खण्डः ॥ १ ॥ लोकेषु पञ्चविध ँसामोपासीत पृथिवी हिङ्कारोऽग्निः प्रस्तावोऽन्तरिक्षमुद्गीथ आदित्यः प्रतिहारो द्यौर्निधनमित्यूर्ध्वेष्वथावृत्तेषु द्यौर्हिङ्कार आदित्यः प्रस्तावोऽन्तरिक्षमुद्गीथोऽग्निः प्रतिहारः पृथिवी निधनं कल्पन्ते हास्मै लोका ऊर्ध्वाश्चावृत्ताश्च य एतदेवंविद्वाँल्लोकेषु पञ्चविध ँसामोपास्ते ॥ चतुर्थस्य द्वितीयः खण्डः ॥ २ ॥ वृष्टौ पञ्चविध ँसामोपासीत पुरो वातो हिङ्कारो मेघो जायते स प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहार उद्गृह्णाति तन्निधनं वर्षति हास्मै वर्षयति ह य

एतदेवं विद्वान्वृष्टौ पञ्चविधꣳसामोपास्ते ॥ चतुर्थस्य तृतीयः खण्डः ॥३॥ सर्वास्वप्सु पञ्चविधꣳसामोपासीत मेघो यत्सम्प्लवते स हिङ्कारो यद्वर्षति स प्रस्तावो याः प्राच्यः स्यन्दन्ते स उद्गीथो याः प्रतीच्यः स प्रतिहारः समुद्रो निधनं न हाप्सु प्रैत्यप्सु-मान्भवति य एतदेवं विद्वान्त्सर्वास्वप्सु पञ्चविधꣳसामोपास्ते ॥ इति चतुर्थः खण्डः ॥ ४ ॥ ऋतुषु पञ्चविधꣳसामोपासीत वसन्तो हिङ्कारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शर-त्प्रतिहारो हेमन्तो निधनं कल्पन्ते हास्मा ऋतव ऋतुमान्भवति य एतदेवं विद्वानृतुषु पञ्चविधꣳसामोपास्ते ॥ इति पञ्चमः खण्डः ॥ ५ ॥ पशुषु पञ्चविधꣳ सामोपासी-ताजा हिङ्कारोऽवयः प्रस्तावो गाव उद्गीथोऽश्वाः प्रतिहारः पुरुषो निधनं भवन्ति हास्य पशवः पशुमान्भवति य एतदेवं विद्वान्पशुषु पञ्चविधꣳसामोपास्ते ॥ इति षष्ठः

खण्डः ॥ ६ ॥ प्राणेषु पञ्चविधं परोवरीयः सामोपासीत प्राणो हिङ्कारो वाक्प्रस्तावश्च-क्षुरुद्गीथः श्रोत्रं प्रतिहारो मनो निधनं परोवरीया ँसि वैतानि परोवरीयो हास्य भवति परोवरीयसो ह लोकाञ्जयति य एतदेवं विद्वान्प्राणेषु पञ्चविधं परोवरीयः सामो-पास्त इति तु पञ्चविधस्य ॥ इति सप्तमः खण्डः ॥ ७ ॥ अथ सप्तविधस्य वाचि सप्त-विध ँसामोपासीत यत्किञ्च वाचो हुं ३ इति स हिङ्कारो यत्प्रेति स प्रस्तावो यदेति स आदिर्यदुदिति स उद्गीथो यत्प्रतीति स प्रतिहारो यदुपेति स उपद्रवो यन्नीति त-न्निधनं दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतदेवं विद्वान्वाचि सप्तविध ँसामोपास्ते ॥ इत्यष्टमः खण्डः॥ ८ ॥ अथ खल्वमुमादित्य ँसप्तविध ँसामो-पासीत सर्वदा समस्तेन साम मां प्रति मां प्रतीति सर्वेण समस्तेन साम तस्मिन्निमानि

सर्वाणि भूतान्यन्वायत्तानीति विद्यात्तस्य यत्पुरोदयात्स हिङ्कारस्तदस्य पशवोऽन्वायत्ता-
स्तस्मात्ते हिङ्कुर्वन्ति हिङ्कारभाजिनो ह्येतस्य साम्नोऽथ यत्प्रथमोदिते स प्रस्तावस्तदस्य
मनुष्या अन्वायत्तास्तस्मात्ते प्रस्तुतिकामाः प्रशꣳसाकामाः प्रस्तावभाजिनो ह्येतस्य साम्नो-
ऽथ यत्सङ्गववेलाया ꣳस आदिस्तदस्य वया ꣳस्यन्वायत्तानि तस्मात्तान्यन्तरिक्षेऽनारम्बणा-
न्यादायात्मानं परिपतन्त्यादिभाजीनि ह्येतस्य साम्नोऽथ यत्सम्प्रति मध्यन्दिने स उद्गीथ-
स्तदस्य देवा अन्वायत्तास्तस्मात्ते सत्तमाः प्राजापत्यानामुद्गीथभाजिनो ह्येतस्य साम्नोऽथ
यदूर्ध्वं मध्यन्दिनात्प्रागपराह्णात्स प्रतिहारस्तदस्य गर्भा अन्वायत्तास्तस्मात्ते प्रतिहृता
नावपद्यन्ते प्रतिहारभाजिनो ह्येतस्य साम्नोऽथ यदूर्ध्वमपराह्णात्प्रागस्तमयात्स उपद्रव-
स्तदस्यारण्या अन्वायत्तास्तस्मात्ते पुरुषं दृष्ट्वा कक्षꣳ श्वभ्रमित्युपद्रवन्त्युपद्रवभाजिनो

ह्येतस्य साम्नोऽथ यत्प्रथमास्तमिते तन्निधनं तदस्य पितरोऽन्वायत्तास्तस्मात्तान्निदधति निधनभाजिनो ह्येतस्य साम्न एवं खल्वमुमादित्यꣳ सप्तविधꣳ सामोपास्ते ॥ इति नवमः खण्डः ॥ ९ ॥ अथ खल्वात्मसम्मितमतिमृत्यु सप्तविधꣳ सामोपासीत हिङ्कार इति त्र्यक्षरं प्रस्ताव इति त्र्यक्षरं तत्सममादिरिति द्व्यक्षरं प्रतिहार इति चतुरक्षरं तत इहैकं तत्सममुद्गीथ इति त्र्यक्षरमुपद्रव इति चतुरक्षरं त्रिभिस्त्रिभिः समं भवत्यक्षरमतिशिष्यते त्र्यक्षरं तत्समं निधनमिति त्र्यक्षरं तत्सममेव भवति तानि ह वा एतानि द्वाविꣳशतिरक्षराण्येकविꣳशत्यादित्यमाप्नोत्येकविꣳशो वा इतोऽसावादित्यो द्वाविꣳशेन परमादित्याज्जयति तन्नाकं तद्विशोकमाप्नोतीहादित्यस्य जयं परो हास्यादित्यजयाज्जयो भवति य एतदेवं विद्वानात्मसम्मितमतिमृत्यु सप्तविधꣳ सामोपास्ते सामोपास्ते ।

इति दशमः खण्डः ॥ १० ॥ मनो हिङ्कारो वाक्प्रस्तावश्चक्षुरुद्गीथः श्रोत्रं प्रतिहारः प्राणो निधनमेतद्गायत्रं प्राणेषु प्रोतं स य एवमेतद्गायत्रं प्राणेषु प्रोतं वेद प्राणी भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या महामनाः स्यात्तद्व्रतम् ॥ इत्येकादशः खण्डः ॥ ११ ॥ अभिमन्थति स हिङ्कारो धूमो जायते स प्रस्तावो ज्वलति स उद्गीथोऽङ्गारा भवन्ति स प्रतिहार उपशाम्यति तन्निधनꣳसꣳशाम्यति तन्निधनमेतद्रथन्तरमग्नौ प्रोतं स य एवमेतद्रथन्तरमग्नौ प्रोतं वेद ब्रह्मवर्चस्यन्नादो भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या न प्रत्यङ्ङग्निमाचामेन्न निष्ठीवेत्तद्व्रतम् ॥ इति द्वादशः खण्डः ॥ १२ ॥ उपमन्त्रयते स हिङ्कारो ज्ञपयते स प्रस्तावः स्त्रिया सह शेते स उद्गीथः प्रतिस्त्री सह शेते

स प्रतिहारः कालं गच्छति तन्निधनं पारं गच्छति तन्निधनमेतद्वामदेव्यं मिथुने प्रोतं स य एवमेतद्वामदेव्यं मिथुने प्रोतं वेद मिथुनी भवति मिथुनान्मिथुनात्प्रजायते सर्व-मायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या न काञ्चन परिहरेत्तद्व्र-तम् ॥ इति त्रयोदशः खण्डः ॥ १३ ॥ उद्यन्हिङ्कार उदितः प्रस्तावो मध्यन्दिन उद्गीथोऽपराह्णः प्रतिहारोऽस्तं यन्निधनमेतद्बृहदादित्ये प्रोतं स य एवमेतद्बृहदादित्ये प्रोतं वेद तेजस्व्यन्नादो भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या तपन्तं न निन्देत्तद्व्रतम् ॥ इति चतुर्दशः खण्डः ॥ १४ ॥ अभ्राणि सम्प्ल-वन्ते स हिङ्कारो मेघो जायते स प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहार उद्गृह्णाति तन्निधनमेतद्वैरूपं पर्जन्ये प्रोतं स य एवमेतद्वैरूपं पर्जन्ये प्रोतं

वेद विरूपाश्च सुरूपाश्च पशूनवरुन्धे सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या वर्षन्तं न निन्देत्तद्व्रतम् ॥ इति पञ्चदशःखण्डः ॥ १५ ॥ वसन्तो हिङ्कारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत्प्रतिहारो हेमन्तो निधनमेतद्वैराजमृतुषु प्रोतं स य एवमेतद्वैराजमृतुषु प्रोतं वेद विराजति प्रजया पशुभिर्ब्रह्मवर्चसेन सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्यर्तूंन्न निन्देत्तद्व्रतम् ॥ इति षोडशः खण्डः ॥ १६ ॥ पृथिवी हिङ्कारोऽन्तरिक्षं प्रस्तावो द्यौरुद्गीथो दिशः प्रतिहारः समुद्रो निधनमेताः शक्वर्यो लोकेषु प्रोताः स य एवमेताः शक्वर्यो लोकेषु प्रोता वेद लोकी भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या लोकान्न निन्देत्तद्व्रतम् ॥ इति सप्तदशः खण्डः ॥ १७ ॥ अजा हिङ्का-

रोऽवयः प्रस्तावो गाव उद्गीथोऽश्वाः प्रतिहारः पुरुषो निधनमेता रेवत्यः पशुषु प्रोताः स य एवमेता रेवत्यः पशुषु प्रोता वेद पशुमान्भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या पशून्न निन्देत्तद्व्रतम्॥ इत्यष्टादशः खण्डः॥ १८ ॥ लोम हिङ्कारस्त्वक्प्रस्तावो मा॰ँसमुद्गीथोऽस्थि प्रतिहारो मज्जा निधनमेतद्यज्ञायज्ञीयमङ्गेषु प्रोतं स य एवमेतद्यज्ञायज्ञीयमङ्गेषु प्रोतं वेदाङ्गी भवति नाङ्गेन विहूर्छति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या संवत्सरं मज्ज्ञो नाश्नीयात्तद्व्रतं मज्ज्ञो नाश्नीयादिति वा॥ इत्येकोनविंशः खण्डः॥ १९ ॥ अग्निर्हिङ्कारो वायुः प्रस्ताव आदित्य उद्गीथो नक्षत्राणि प्रतिहारश्चन्द्रमा निधनमेतद्राजनं देवतासु प्रोतं स य एवमेतद्राजनं देवतासु प्रोतं वेदैतासामेव देवताना॰ँसलोकता॰ँसार्ष्टिता॰ँसायुज्यं गच्छति

सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या ब्राह्मणान्न निन्देत्तद्व्रतम् ॥ इति विंशः खण्डः ॥ २० ॥ त्रयी विद्या हिङ्कारस्त्रय इमे लोकाः स प्रस्तावोऽग्निर्वायुरादित्यः स उद्गिथो नक्षत्राणि वया ँसि मरीचयः स प्रतिहारः सर्पा गन्धर्वाः पितरस्तन्निधनमेतत्साम सर्वस्मिन्प्रोतं स य एवमेतत्साम सर्वस्मिन्प्रोतं वेद सर्व ँह भवति तदेष श्लोको याति पञ्चधा त्रीणि तेभ्यो न ज्यायः परमन्यदस्ति यस्तद्वेद स वेद सर्व ँसर्वा दिशो बलिमस्मै हरन्ति सर्वमस्मीत्युपासीत तद्व्रतं तद्व्रतम् ॥ इत्येकविंशः खण्डः ॥ २१ ॥ विनर्दिसाम्नो वृणे पशव्यमित्यग्नेरुद्गीथोऽनिरुक्तः प्रजापतेर्निरुक्तः सोमस्य मृदु श्लक्ष्णं वायोः श्लक्ष्णं बलवदिन्द्रस्य क्रौञ्चं बृहस्पतेरपध्वान्तं वरुणस्य तान्त्सर्वानेवोपसेवेत वारुणं त्वेव वर्जयेदमृतत्वं देवेभ्य अगायानीत्यागायेत्स्वधां

पितृभ्य आशां मनुष्येभ्यस्तृणोदकं पशुभ्यः स्वर्गं लोकं यजमानायान्नमात्मन आगा-
यानीत्येतानि मनसा ध्यायन्नप्रमत्तः स्तुवीत सर्वे स्वरा इन्द्रस्यात्मानः सर्व ऊष्माणः
प्रजापतेरात्मानः सर्वे स्पर्शा मृत्योरात्मानस्तं यदि स्वरेषूपालभेतेन्द्रꣳशरणं प्रपन्नोऽ-
भूवं स त्वा प्रतिवक्ष्यतीत्येनं ब्रूयादथ यद्येनमूष्मसूपालभेत प्रजापतिꣳशरणं प्रपन्नो-
ऽभूवं स त्वा प्रतिपेक्ष्यतीत्येनं ब्रूयादथ यद्येनꣳस्पर्शेषूपालभेत मृत्युꣳशरणं प्रपन्नोऽ
भूवं स त्वा प्रतिधक्ष्यतीत्येनं ब्रूयात्सर्वे स्वरा घोषवन्तो बलवन्तो वक्तव्या इन्द्रे बलं
ददानीति सर्व ऊष्माणो अग्रस्ता निरस्ता विवृत्ता वक्तव्याः प्रजापतेरात्मानं परि-
ददानीति सर्वे स्पर्शा लेशेनानभिनिहिता वक्तव्या मृत्योरात्मानं परिहराणीति ॥ इति
द्वाविंशः खण्डः ॥ २२ ॥ त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव

द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्त्सर्व एते पुण्यलोका भवन्ति ब्रह्मसꣲस्थोऽमृतत्वमेति प्रजापतिर्लोकानभ्यतपत्तेभ्योऽभितप्तेभ्य-स्त्रयी विद्या सम्प्रास्रवत्तामभ्यतपत्तस्या अभितप्ताया एतान्यक्षराणि सम्प्रास्रवन्त भूर्भुवः स्वरिति तान्यभ्यतपत्तेभ्योऽभितप्तेभ्य ओꣳकारः सम्प्रास्रवत्तद्यथा शङ्कुना सर्वाणि पर्णानि सन्तृणान्येवमोङ्कारेण सर्वा वाक्सन्तृणा ओꣳकार एवेदꣲसर्वमोङ्कार एवेदꣲस-र्वम् ॥ इति त्रयोविंशः खण्डः ॥ २३ ॥ ब्रह्मवादिनो वदन्ति यद्वसूनां प्रातःसवनꣲ रुद्राणां माध्यन्दिनꣲसवनमादित्यानां च विश्वेषां च देवानां तृतीयसवनं क्व तर्हि यज-मानस्य लोक इति स यस्तं न विद्यात्कथं कुर्यादथ विद्वान् कुर्यात्पुरा प्रातरनुवाक-स्योपाकरणाज्जघनेन गार्हपत्यस्योदङ्मुख उपविश्य स वासवꣲसामाभिगायति लो ३

कद्वारमपावार्णू २३३ पश्येम त्वा वय ँरा ३३३३ऽ३ हुं ३ आ २३३ जा ३ यो ३ आ १२४५ इत्यथ जुहोति नमोऽग्नये पृथिवीक्षिते लोकक्षिते लोकं मे यजमानाय विन्दैष वै यजमानस्य लोक एतास्म्यत्र यजमानः परस्तादायुषः स्वाहाऽपजहि परिघमित्युक्त्वोत्तिष्ठति तस्मै वसवः प्रातःसवन ँसंप्रयच्छन्ति पुरा माध्यन्दिनस्य सवनस्योपाकरणाज्जघनेनाग्नीध्रीयस्योदङ्मुख उपविश्य स रौद्र ँसामाभिगायति लो ३ कद्वारमपावार्णू ३३ पश्येम त्वा वयं विरा ३३३२ हुं ३ आ ३३ जा ३ यो ३ आ २१११ इत्यथ जुहोति नमो वायवेऽन्तरिक्षक्षिते लोकक्षिते लोकं मे यजमानाय विन्दैष वै यजमानस्य लोक एतास्म्यत्र यजमानः परस्तादायुषः स्वाहाऽपजहि परिघमित्युक्त्वोत्तिष्ठति तस्मै रुद्रा माध्यन्दिन ँसवन ँसम्प्रयच्छन्ति पुरा तृतीयसवनस्योपाकरणाज्जघनेना-

हवनीयस्योदङ्मुख उपविश्य स आदित्यꣳस वैश्वदेवꣳसामाभिगायति लो ३ कद्वा-
रमपावा ३ र्णू ३ ३ पश्येम त्वा वयꣳस्वरा ३ १ २ १ हुं २ आ ३ ३ ३ जा ३ यो ३ आ
३ ४ ५ इत्यादित्यमथ वैश्वदेवं लो ३ कद्वारमपावा ३ र्णू ३ ३ पश्येम त्वा वयꣳसाम्ना ३ १ २
१ २ हुं ३ आ ३ ३ जा ३ यो ३ आ ३ ३ ३ ३ इत्यथ जुहोति नम आदित्येभ्यश्च विश्वेभ्यश्च देवेभ्यो
दिविक्षिद्भ्यो लोकक्षिद्भ्यो लोकं मे यजमानाय विन्दतैष वै यजमानस्य लोक एता-
स्म्यत्र यजमानः परस्तादायुषः स्वाहाऽपहतपरिघमित्युक्त्वोत्तिष्ठति तस्मा आदित्याश्च
विश्वे च देवास्तृतीयसवनꣳसम्प्रयच्छन्त्येष ह वै यज्ञस्य मात्रां वेद य एवं वेद य
एवं वेद ॥ इति चतुर्विंशः खण्डः ॥ २४ ॥ इति द्वितीयप्रपाठकः ॥ २ ॥ ॐ ॥ असौ वा
आदित्यो देवमधु तस्य द्यौरेव तिरश्चीनवꣳशोऽन्तरिक्षमपूपो मरीचयः पुत्रास्तस्य ये प्राञ्चो

रश्मयस्ता एवास्य प्राच्यो मधुनाड्य ऋच एव मधुकृत ऋग्वेद एव पुष्पं ता अमृता आपस्ता वा एता ऋच एतमृग्वेदमभ्यतप१ँस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्य१ँरसोऽजायत तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य रोहित१ँरूपम् ॥ इति प्रथमः खण्डः ॥ १ ॥ अथ येऽस्य दक्षिणा रश्मयस्ता एवास्य दक्षिणा मधुनाड्यो यजू१ँष्येव मधुकृतो यजुर्वेद एव पुष्पं ता अमृता आपस्तानि वा एतानि यजू१ँष्येतं यजुर्वेदमभ्यतप१ँस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्य१ँरसोऽजायत तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य शुक्ल१ँरूपम् ॥ इति द्वितीयः खण्डः ॥ २ ॥ अथ येऽस्य प्रत्यञ्चो रश्मयस्ता एवास्य प्रतीच्यो मधुनाड्यः सामान्येव मधुकृतः सामवेद एव पुष्पं ता अमृता आपस्तानि वा एतानि सामान्येत१ँसामवेदमभ्य-

तप ँ स्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्य ँ रसोऽजायत तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य कृष्ण ँ रूपम् ॥ इति तृतीयः खण्डः ॥ ३ ॥ अथ येऽस्योदञ्चो रश्मयस्ता एवास्योदीच्यो मधुनाड्योऽथर्वाङ्गिरस एव मधुकृत इतिहासपुराणं पुष्पं ता अमृता आपस्ते वा एतेऽथर्वाङ्गिरस एतदितिहासपुराणमभ्यतप ँ स्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्य ँ रसोऽजायत तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य परं कृष्ण ँ रूपम् ॥ इति चतुर्थः खण्डः ॥ ४ ॥ अथ येऽस्योर्ध्वा रश्मयस्ता एवास्योर्ध्वा मधुनाड्यो गुह्या एवादेशा मधुकृतो ब्रह्मैव पुष्पं ता अमृता आपस्ते वा एते गुह्या आदेशा एतद्ब्रह्माभ्यतप ँ स्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्य ँ रसोऽजायत तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादि-

त्यस्य मध्ये क्षोभत इव तें वा एते रसाना ँ रसा वेदा हि रसास्तेषामेते रसास्तानि वा एतान्यमृतानाममृतानि वेदा ह्यमृतास्तेषामेतान्यमृतानि ॥ इति पञ्चमः खण्डः ॥ ५ ॥

तद्यत्प्रथमममृतं तद्वसव उपजीवन्त्यग्निना मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति स य एतदेवममृतं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स य एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता वसूनामेव तावदाधिपत्य ँ स्वाराज्यं पर्येता ॥ इति षष्ठः खण्डः ॥ ६ ॥ अथ यद्द्वितीयममृतं तद्रुद्रा उपजीवन्तीन्द्रेण मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति त एतदेवरूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति स य एतदेवममृतं वेद रुद्राणामेवैको भूत्वे-

न्द्रेणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्तावद्दक्षिणत उदेतोत्तरतोऽस्तमेता रुद्राणामेव तावदाधिपत्यꣳस्वाराज्यं पर्येता ॥ इति सप्तमः खण्डः ॥ ७ ॥ अथ यत्तृतीयममृतं तदादित्या उपजीवन्ति वरुणेन मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति स य एतदेवममृतं वेदादित्यानामेवैको भूत्वा वरुणेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति स यावदादित्यो दक्षिणत उदेतोत्तरतोऽस्तमेता द्विस्तावत्पश्चादुदेता पुरस्तादस्तमेतादित्यानामेव तावदाधिपत्यꣳस्वाराज्यं पर्येता ॥ इत्यष्टमः खण्डः ॥ ८ ॥ अथ यच्चतुर्थममृतं तन्मरुत उपजीवन्ति सोमेन मुखेन न वै देवा

अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति त एतदेव रूपमभिसंविशन्त्येतस्माद्रू-
पादुद्यन्ति स य एतदेवममृतं वेद मरुतामेवैको भूत्वा सोमेनैव मुखेनैतदेवामृतं दृष्ट्वा
तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति स यावदादित्यः पश्चादुदेता पुर-
स्तादस्तमेता द्विस्तावदुत्तरत उदेता दक्षिणतोऽस्तमेता मरुतामेव तावदाधिपत्यꣳ
स्वाराज्यं पर्येता ॥ इति नवमः खण्डः ॥ ९ ॥ अथ यत्पञ्चमममृतं तत्साध्या उपजी-
वन्ति ब्रह्मणा मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति त एतदेव
रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति स य एतदेवममृतं वेद साध्यानामेवैको भूत्वा ब्रह्म-
णैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति स यावदा-
दित्य उत्तरत उदेता दक्षिणतोऽस्तमेता द्विस्तावदूर्ध्वमुदेतार्वागस्तमेता साध्यानामेव ताव-

दाधिपत्य ँस्वाराज्यं पर्येता ॥ इति दशमः खण्डः ॥ १० ॥ अथ तत उर्ध्व उदेत्य नैवोदेता नास्तमेतैकल एव मध्ये स्थाता तदेष श्लोको न वै तत्र न निम्लोच नोदियाय कदाचन । देवास्तेनाह ँसत्येन मा विराधिषि ब्रह्मणेति न ह वा अस्मा उदेति न निम्लोचाति सकृद्दिवा हैवास्मै भवति य एतामेवं ब्रह्मोपनिषदं वेद तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्यस्तद्धैतदुद्दालकायारुणये ज्येष्ठाय पुत्राय पिता ब्रह्म प्रोवाचेदं वाव तज्ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात् प्राणाय्याय वान्तेवासिने नान्यस्मै कस्मैचन यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यादेतदेव ततो भूय इत्येतदेव ततो भूय इति ॥ इत्येकादशः खण्डः ॥ ११ ॥ गायत्री वा इद ँसर्वं भूतं यदिदं किञ्च वाग्वै गायत्री वाग्वा इद ँसर्वं भूतं गायति च त्रायते च या वै सा गायत्रीयं वाव सा येयं पृथिव्यस्या ँ

हीद ँ सर्वं भूतं प्रतिष्ठितमेतामेव नातिशीयते या वै सा पृथिवीयं वाव सा यदिदम-स्मिन्पुरुषे शरीरमस्मिन्हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते यद्वैतत्पुरुषे शरी-रमिदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे हृदयमस्मिन्हीमे प्राणाः प्रतिष्ठिता एतदेव नाति-शीयन्ते सैषा चतुष्पदा षड्विधा गायत्री तदेतदृचाभ्यनूक्तं तावानस्य महिमा ततो ज्याया ँ श्च पुरुषः। पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवीति यद्वै तद्ब्रह्मेतीदं वाव तद्योऽयं बहिर्द्धा पुरुषादाकाशो यो वै स बहिर्द्धा पुरुषादाकाशोऽयं वाव स योऽय-मन्तःपुरुष आकाशो यो वै सोऽन्तःपुरुष आकाशोऽयं वाव स योऽयमन्तर्हृदय आकाशस्तदेतत्पूर्णमप्रवर्ति पूर्णमप्रवर्तिनी ँ श्रियं लभते य एवं वेद॥ इति द्वादशः खण्डः ॥ १२ ॥ तस्य ह वा एतस्य हृदयस्य पञ्च देवसुषयः स योऽस्य प्राङ्सुषिः

स प्राणस्तच्चक्षुः स आदित्यस्तदेतत्तेजोऽन्नाद्यमित्युपासीत तेजस्व्यन्नादो भवति य एवं वेदाथ योऽस्य दक्षिणः सुषिः स व्यानस्तच्छ्रोत्रँ स चन्द्रमास्तदेतच्छ्रीश्च यशश्चेत्युपासीत श्रीमान्यशस्वी भवति य एवं वेदाथ योऽस्य प्रत्यङ्सुषिः सोऽपानः सा वाक्सोऽग्निस्तदेतद्ब्रह्मवर्चसमन्नाद्यमित्युपासीत ब्रह्मवर्चस्यन्नादो भवति य एवं वेदाथ योऽस्योदङ्सुषिः स समानस्तन्मनः स पर्जन्यस्तदेतत्कीर्तिश्च व्युष्टिश्चेत्युपासीत कीर्तिमान्व्युष्टिमान्भवति य एवं वेदाथ योऽस्योर्ध्वः सुषिः स उदानः स वायुः स आकाशस्तदेतदोजश्च महश्चेत्युपासीतौजस्वी महस्वान्भवति य एवं वेद त वा एते पञ्च ब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपाः स य एतानेवं पञ्च ब्रह्मपुरुषान्स्वर्गस्य लोकस्य द्वारपान्वेदास्य कुले वीरो जायते प्रतिपद्यते स्वर्गं लोकं य एतानेवं पञ्च ब्रह्मपुरुषा-

न्स्वर्गस्य लोकस्य द्वारपान्वेदाथ यदतः परोदिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे ज्योतिस्तस्यैषा दृष्टिर्यत्रैतदस्मिञ्छरीरे स ँ स्पर्शेनोष्णिमानं विजानाति तस्यैषा श्रुतिर्यत्रैतत्कर्णावपि गृह्य निनदमिव नदथुरिवाग्नेरिव ज्वलत उपशृणोति तदेतद्दृष्टं च श्रुत चेत्युपासीत चक्षुष्यः श्रुतो भवति य एवं वेद य एवं वेद ॥ इति त्रयोदशः खण्डः ॥ १३ ॥ सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीताथ खलु क्रतुमयः पुरुषो यथा क्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादर एषम आत्मान्तर्हृदयेऽणीयान्व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा एष

म आत्मान्तर्हृदये ज्यायान्पृथिव्या ज्यायांनन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादर एष म आत्मा-न्तर्हृदय एतद्ब्रह्मैतमितः प्रेत्याभिसम्भवितास्मीति यस्य स्यादद्धा न विचिकित्साऽस्तीति ह स्माह शाण्डिल्यः शाण्डिल्यः ॥ इति चतुर्दशः खण्डः ॥ १४ ॥ अन्तरिक्षोदरः कोशो भूमिबुध्नो न जीर्यति दिशो ह्यस्य स्रक्तयो द्यौरस्योत्तरं बिलꣳस एष कोशो वसुधानस्तस्मिन्विश्वमिदꣳश्रितं तस्य प्राची दिग्जुहूर्नाम सहमाना नाम दक्षिणा राज्ञी नाम प्रतीची सुभूता नामोदीची तासां वायुर्वत्सः स य एतमेवं वायुं दिशां वत्सं वेद न पुत्ररोदꣳरोदिति सोऽहमेतमेवं वायुं दिशां वत्सं वेद मा पुत्ररोदꣳरुदमरिष्टं कोशं प्रपद्येऽमुनामुनामुना प्राणं प्रपद्येऽमुनामुनामुना भूः प्रपद्येऽमुनामुनामुना भुवः प्रपद्येऽ-

मुनामुनामुना स्वः प्रपद्येऽमुनामुनामुना स यदवोचं प्राणं प्रपद्य इति प्राणो वा इद ँ सर्वं भूतं यदिदं किञ्च तमेव तत्प्रापत्स्यथ यदवोचं भूः प्रपद्य इति पृथिवीं प्रपद्येऽन्तरिक्षं प्रपद्ये दिवं प्रपद्य इत्येव तदवोचमथ यदवोचं भुवः प्रपद्य इत्यग्निं प्रपद्ये वायुं प्रपद्य आदित्यं प्रपद्य इत्येव तदवोचमथ यदवोच ँ स्वः प्रपद्य इत्यृग्वेदं प्रपद्ये यजुर्वेदं प्रपद्ये सामवेदं प्रपद्य इत्येव तदवोचं तदवोचं ॥ इति पञ्चदशः खण्डः ॥ १५ ॥

पुरुषो वाव यज्ञस्तस्य यानि चतुर्विं ँ शतिवर्षाणि तत्प्रातःसवनं चतुर्विं ँ शत्यक्षरा गायत्री गायत्रं प्रातःसवनं तदस्य वसवोऽन्वायत्ताः प्राणा वाव वसव एते हीद ँ सर्वं वासयन्ति तं चेदेतस्मिन्वयसि किञ्चिदुपतपेत्स ब्रुयात्प्राणा वसव इदं मे प्रातःसवनं माध्यन्दिन ँ सवनमनुसन्तनुतेति माहं प्राणानां वसूनां मध्ये यज्ञो विलोप्सीयेत्यु-

60

द्धैव तत एत्यगदो ह भवत्यथ यानि चतुश्चत्वारिꣳशद्वर्षाणि तन्माध्यन्दिनꣳसवनं चतुश्चत्वारिꣳशदक्षरा त्रिष्टुप्त्रैष्टुभं माध्यन्दिनꣳसवनं तदस्य रुद्रा अन्वायत्ताः प्राणा वाव रुद्रा एते हीदꣳसर्वꣳरोदयन्ति तं चेदेतस्मिन्वयसि किञ्चिदुपतपेत्स ब्रूयात्प्राणा रुद्रा इदं मे माध्यन्दिनꣳसवनं तृतीयसवनमनुसन्तनुतेति माहं प्राणानाꣳरुद्राणां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो ह भवत्यथ यान्यष्टाचत्वारिꣳशद्वर्षाणि तृतीयसवनमष्टाचत्वारिꣳशदक्षरा जगती जागतं तृतीयसवनं तदस्यादित्या अन्वायत्ताः प्राणा वावादित्या एते हीदꣳसर्वमाददते तं चेदेतस्मिन्वयसि किञ्चिदुपतपेत्स ब्रूयात्प्राणा आदित्या इदं मे तृतीयसवनमायुरनुसन्तनुतेति माहं प्राणानामादित्यानां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो हैव भवत्येतद्ध स्म वै तद्विद्वानाह

महीदास ऐतरेयः स किं म एतदुपतपसि योऽहमनेन न प्रेष्यामीति स ह षोडशं वर्षशतमजीवत्प्र ह षोडशं वर्षशतं जीवति य एवं वेद ॥ इति षोडशः खण्डः ॥ १६ ॥

स यदशिशिषति यत्पिपासति यन्न रमते ता अस्य दीक्षा अथ यदश्नाति यत्पिबति यद्रमते तदुपसदैरेत्यथ यद्धसति यज्जक्षति यन्मैथुनं चरति स्तुतशस्त्रैरेव तदेत्यथ यत्तपो दानमार्जवमहिꣳसा सत्यवचनमिति ता अस्य दक्षिणास्तस्मादाहुः सोष्यत्यसोष्टेति पुनरुत्पादनमेवास्य तन्मरणमेवास्यावभृथस्तद्धैतद्घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाचाऽपिपास एव स बभूव सोऽन्तवेलायामेतत्त्रयं प्रतिपद्येताक्षितमस्यच्युतमसि प्राणसꣳशितमसीति तत्रैते द्वे ऋचौ भवत आदित्प्रत्नस्य रेतसो उद्वयं तमसस्परि ज्योतिः पश्यन्त उत्तरꣳस्वः पश्यन्त उत्तरं देवं देवत्रा सूर्यमगन्मज्ज्योतिरुत्तममिति

ज्योतिरुत्तममिति ॥ इति सप्तदशः खण्डः ॥ १७ ॥ मनो ब्रह्मेत्युपासीतेत्यध्यात्मम-थाधिदैवतमाकाशो ब्रह्मेत्युभयमादिष्टं भवत्यध्यात्मं चाधिदैवतं च तदेतच्चतुष्पाद्ब्रह्म-वाक्पादः प्राणः पादश्चक्षुः पादः श्रोत्रं पाद इत्यध्यात्ममथाधिदैवतमग्निः पादो वायुः पाद आदित्यः पादो दिशः पाद इत्युभयमेवादिष्टं भवत्यध्यात्मं चैवाधिदैवतं च वागेव ब्रह्मणश्चतुर्थः पादः सोऽग्निना ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद प्राण एव ब्रह्मणश्चतुर्थः पादः स वायुना ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद चक्षुरेव ब्रह्मणश्चतुर्थः पादः स आदित्येन ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद श्रोत्रमेव ब्रह्मणश्चतुर्थः पादः स

दिग्भिर्ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ इत्यष्टादशः खण्डः ॥ १८ ॥ आदित्यो ब्रह्मेत्यादेशस्तस्योपव्याख्यानमस-देवेदमग्र आसीत्तत्सदासीत्तत्समभवत्तदाण्डं निरवर्तत तत्संवत्सरस्य मात्रामशयत तन्निरभिद्यत ते आण्डकपाले रजतं च सुवर्णं चाभवतां तद्यद्रजतꣳसेयं पृथिवी यत्सु-वर्णꣳसा द्यौर्यज्जरायु ते पर्वता यदुल्बꣳस मेघो नीहारो या धमनयस्ता नद्यो यद्वा-स्तेयमुदकꣳस समुद्रोऽथ यत्तदजायत सोऽसावादित्यस्तं जायमानं घोषा उलूलवोऽनू-दतिष्ठन्त सर्वाणि च भूतानि सर्वे च कामास्तस्मात्तस्योदयं प्रति प्रत्यायनं प्रति घोषा उलूलवोऽनुतिष्ठन्ति सर्वाणि च भूतानि सर्वे चैव कामाः स य एतमेवं विद्वानादित्यं ब्रह्मेत्युपास्तेऽभ्याशो ह यदेनꣳसाधवो घोषा आ च गच्छेयुरुप च निम्रेडेरन्निम्रेडेरन् ॥

70

इत्येकोनविंशः खण्डः ॥ १९ ॥ इति छान्दोग्योपनिषदि तृतीयः प्रपाठकः ॥ ३ ॥ ॐ ॥ जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस स ह सर्वत आवसथान्मापयाञ्चक्रे सर्वत एव मेऽत्स्यन्तीत्यथ ह ह॑ꣳसा निशायामतिपेतुस्तद्धैव॑ꣳह ॑ꣳसो ह॑ꣳसमभ्युवाद हो होयि भल्लाक्ष भल्लाक्ष जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततं तन्मा प्रसाङ्क्षीस्तत्त्वा मा प्रधाक्षीरिति तमु ह परः प्रत्युवाच कं वर एनमेतत्सन्त॑ꣳसयुग्वानमिव रैक्कमात्थेति यो नु कथ॑ꣳसयुग्वा रैक्क इति यथा कृतायविजितायाधरेयाः संयन्त्येवमेन॑ꣳसर्वं तदभिसमेति यत्किञ्च प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद स मयैतदुक्त इति यदु ह जानश्रुतिः पौत्रायण उपशुश्राव स ह सञ्जिहान एव क्षत्तारमुवाचाङ्गारे ह सयुग्वानमिव

रैक्कमात्थेति यो नु कथ॰सयुग्वा रैक्क इति यथा कृतायविजितायाधरेयाः संयन्त्येवमेन॰सर्वं तदभिसमेति यत्किञ्च प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद स मयैतदुक्त इति स ह क्षत्ताऽन्विष्य नाविदमिति प्रत्येयाय त॰होवाच यत्रारे ब्राह्मणस्यान्वेषणा तदेनमर्च्छेति सोऽधस्ताच्छकटस्य पामानं कषमाणमुपोपविवेश त॰हाभ्युवाद त्वं नु भगवः सयुग्वा रैक्क इत्यह॰ह्यरा ३ इति ह प्रतिजज्ञे स ह क्षत्ताविदमिति प्रत्येयाय ॥ इति प्रथमः खण्डः ॥ १ ॥ तदु ह जानश्रुतिः पौत्रायणः षट्शतानि गवां निष्कमश्वतरीरथं तदादाय प्रतिचक्रमे त॰हाभ्युवाद रैक्वेमानि षट्शतानि गवामयं निष्कोऽयमश्वतरीरथो नु म एतां भगवो देवता॰शाधि यां देवतामुपास्स इति तमु ह परः प्रत्युवाचाह हारे त्वा शूद्र तवैव सह गोभिरस्त्विति

तदु ह पुनरेव जानश्रुतिः पौत्रायणः सहस्रं गवां निष्कमश्वतरीरथं दुहितरं तदादाय प्रतिचक्रमे त ᳪ हाभ्युवाद रैक्वेद ᳪ सहस्रं गवामयं निष्कोऽयमश्वतरीरथ इयं जायायं ग्रामो यस्मिन्नास्सेऽन्वेव मा भगवः शाधीति तस्या ह मुखमुपोद्गृह्णन्नुवाचाजहारेमाः शूद्रानेनैव मुखेनालापयिष्यथा इति ते हैते रैक्वपर्णा नाम महावृषेषु यत्रास्मा उवास तस्मै होवाच ॥ इति द्वितीयः खण्डः ॥ २ ॥ वायुर्वाव संवर्गो यदा वा अग्निरुद्वायति वायुमेवाप्येति यदा सूर्योऽस्तमेति वायुमेवाप्येति यदा चन्द्रोऽस्तमेति वायुमेवाप्येति यदाप उच्छुष्यन्ति वायुमेवापियन्ति वायुर्ह्येवैतान्त्सर्वान्त्संवृङ्क्त इत्यधिदैवतमथाध्यात्मं प्राणो वाव संवर्गः स यदा स्वपिति प्राणमेव वागप्येति प्राणं चक्षुः प्राण ᳪ श्रोत्रं प्राणं मनः प्राणो ह्येवैतान्त्सर्वान्त्संवृङ्क्त इति तौ वा एतौ द्वौ संवर्गौ वायुरेव देवेषु प्राणः

प्राणेष्वथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे तस्मा उ ह न ददतुः स होवाच महात्मनश्चतुरो देव एकः कः स जगार भुवनस्य गोपास्तं कापेय नाभिपश्यन्ति मर्त्या अभिप्रतारिन्बहुधा वसन्तं यस्मै वा एतदन्नं तस्मा एतन्न दत्तमिति तदु ह शौनकः कापेयः प्रतिमन्वानः प्रत्येयायात्मा देवानां जनिता प्रजाना ँ हिरण्यद ँ ष्ट्रो बभसोऽनसूरिर्महान्तमस्य महिमानमाहुरनद्यमानो यदनन्नमत्तीति वै वयं ब्रह्मचारिन्नेदमुपास्महे दत्तास्मै भिक्षामिति तस्मा उ ह ददुस्ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृतं तस्मात्सर्वासु दिक्ष्वन्नमेव दशकृत ँ सैषा विराडन्नादी तयेद ँ सर्वं दृष्ट ँ सर्वमस्येदं दृष्टं भवत्यन्नादो भवति य एवं वेद य एवं वेद ॥ इति तृतीयः खण्डः ॥३॥ सत्यकामो ह जाबालो जबालां मातरमामन्त्रयाञ्चक्रे ब्रह्मचर्यं

72

भवति विवत्स्यामि किङ्गोत्रोऽहमस्मीति सा हैनमुवाच नाहमेतद्वेद तात यद्गोत्रस्त्व-
मसि बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साहमेतन्न वेद यद्गोत्रस्त्वमसि
जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसि स सत्यकाम एव जाबालो ब्रवीथा
इति स ह हारिद्रुमतं गौतममेत्योवाच ब्रह्मचर्यं भगवति वत्स्याम्युपेयां भगवन्तमिति
तꣳहोवाच किङ्गोत्रो नु सोम्यासीति स होवाच नाहमेतद्वेद भो यद्गोत्रोऽहमस्म्यपृच्छं
मातरꣳसा मा प्रत्यब्रवीद्बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साहमेतन्नवेद
यद्गोत्रस्त्वमसि जबाला तु नामाऽहमस्मि सत्यकामो नाम त्वमसीति सोऽहꣳसत्य-
कामो जाबालोऽस्मि भो इति तꣳहोवाच नैतदब्राह्मणो विवक्तुमर्हति समिधꣳसोम्या-
हरोप त्वा नेष्ये न सत्यादगा इति तमुपनीय कृशानामबलानां चतुःशता गा निरा-

कृत्योवाचेमाः सोम्यानुसंव्रजेति ता अभिप्रस्थापयन्नुवाच नासहस्रेणावर्तयेति स ह वर्षगणं प्रोवास ता यदा सहस्रꣳसम्पेदुः ॥ इति चतुर्थः खण्डः ॥ ४ ॥ अथ हैनमृषभोऽभ्युवाद सत्यकाम ३ इति भगव इति ह प्रतिशुश्राव प्राप्ताः सोम्य सहस्रꣳस्मः प्रापय न आचार्यकुलं ब्रह्मणश्च ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच प्राची दिक्कला प्रतीची दिक्कला दक्षिणा दिक्कलोदीची दिक्कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणः प्रकाशवान्नाम स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते प्रकाशवानस्मिँल्लोके भवति प्रकाशवतो ह लोकाञ्जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते ॥ इति पञ्चमः खण्डः ॥ ५ ॥ अग्निष्टे पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार ता यत्राभि सायं बभूवु-

स्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेःप्राङुपोपविवेश तमग्निरभ्यु-
वाद सत्यकाम ३ इति भगव इति प्रतिशुश्राव ब्रह्मणः सोम्य ते पादं ब्रवाणीति
ब्रवीतु मे भगवानिति तस्मै होवाच पृथिवी कलाऽन्तरिक्षं कला द्यौः कला समुद्रः
कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणोऽनन्तवान्नाम स य एतमेवं विद्वाꣳश्चतुष्कलं
पादं ब्रह्मणोऽनन्तवानित्युपास्तेऽनन्तवानस्मिँल्लोके भवत्यनन्तवतो ह लोकाञ्जयति य
एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्ते ॥ इति षष्ठः खण्डः ॥ ६ ॥
हꣳसस्ते पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार ता यत्राभि सायं बभू-
वुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश तꣳहꣳस
उपनिपत्याभ्युवाद सत्यकाम ३ इति भगव इति ह प्रतिशुश्राव ब्रह्मणः सोम्य

ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाचाग्निः कला सूर्यः कला चन्द्रः कला विद्युत्कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणो ज्योतिष्मान्नाम स य एतमेवं विद्वा॰श्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते ज्योतिष्मानस्मिँल्लोके भवति ज्योतिष्मतो ह लोकाञ्जयति य एतमेवं विद्वा॰श्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते ॥ इति सप्तमः खण्डः ॥ ७ ॥ मद्गुष्टे पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार ता यत्राभि सायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश तं मद्गुरुपनिपत्याभ्युवाद सत्यकाम ३ इति भगव इति ह प्रतिशुश्राव ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच प्राणः कला चक्षुः कला श्रोत्रं कला मनः कलैष वै सोम्य चतुष्कलः पादो

ब्रह्मण आयतनवान्नाम स य एतमेवं विद्वाँश्चतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्त आयतनवानस्मिँल्लोके भवत्यायतनवतो ह लोकाञ्जयति य एतमेवं विद्वाँश्चतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्ते ॥ इत्यष्टमः खण्डः ॥ ८ ॥ प्राप हाचार्यकुलं तमाचार्योऽभ्युवाद सत्यकाम ३ इति भगव इति ह प्रतिशुश्राव ब्रह्मविदिव वै सोम्य भासि को नु त्वानुशशासेत्यन्ये मनुष्येभ्य इति ह प्रतिजज्ञे भगवाँस्त्वेव मे कामे ब्रुयाच्छ्रुतँह्येव मे भगवद्दृशेभ्य आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापयतीति तस्मै हैतदेवोवाचात्र ह न किञ्चन वीयायेति वीयायेति ॥ इति नवमः खण्डः ॥ ९ ॥ उपकोसलो ह वै कामलायनः सत्यकामे जाबाले ब्रह्मचर्यमुवास तस्य ह द्वादशवर्षाण्यग्नीन्परिचिचार स ह स्मान्यानन्तेवासिनः समावर्तयँस्तँह स्मैव न

समावर्तयति तं जायोवाच तप्तो ब्रह्मचारी कुशलमग्नीन्परिचचारीन्मा त्वाग्नयः परिप्र-
वोचन्प्रब्रूह्यस्मा इति तस्मै हाप्रोच्यैव प्रवासाञ्चक्रे स ह व्याधिनानशितुं दध्रे
तमाचार्यजायोवाच ब्रह्मचारिन्नशान किन्नु नाश्नासीति स होवाच बहव इमेऽस्मिन्पुरुषे
कामा नानात्यया व्याधिभिः प्रतिपूर्णोऽस्मि नाशिष्यामीत्यथ हाग्नयः समुदिरे तप्तो
ब्रह्मचारी कुशलं नः पर्यचारीद्धन्तास्मै प्रब्रवामेति तस्मै होचुः प्राणो ब्रह्म कं ब्रह्म
खं ब्रह्मेति स होवाच विजानाम्यहं यत्प्राणो ब्रह्म कं च तु खं च न विजानामीति ते
होचुर्यद्वाव कं तदेव खं यदेव खं तदेव कमिति प्राणं च हास्मै तदाकाशं चोचुः॥
इति दशमः खण्डः॥ १०॥ अथ हैनं गार्हपत्योऽनुशशास पृथिव्यग्निरन्नमादित्य इति
य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति स य एतमेवं विद्वानु-

पास्तेऽपहते पापकृत्या लोकी भवति सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्त उप वयं तं भुञ्जामोऽस्मिꣳश्च लोकेऽमुष्मिꣳश्च य एतमेवं विद्वानुपास्ते ॥ इत्येकादशः खण्डः ॥ ११ ॥ अथ हैनमन्वाहार्यपचनोऽनुशशासापो दिशो नक्षत्राणि चन्द्रमा इति य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्त उप वयं तं भुञ्जामोऽस्मिꣳश्च लोकेऽमुष्मिꣳश्च य एतमेवं विद्वानुपास्ते ॥ इति द्वादशः खण्डः ॥ १२ ॥ अथ हैनमाहवनीयोनुशशास प्राण आकाशो द्यौर्विद्युदिति य एष विद्युति पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः

क्षीयन्ते उप वयं तं भुञ्जामोऽस्मिꣳश्च लोकेऽमुष्मिꣳश्च य एतमेवं विद्वानुपास्ते ॥ इति त्रयोदशः खण्डः ॥ १३ ॥ ते होचुरुपकोसलैषा सोम्य तेऽस्मद्विद्यात्मविद्या चाचार्यस्तु ते गतिं वक्तेत्याजगाम हास्याचार्यस्तमाचार्योऽभ्युवादोपकोसल ३ इति भगव इति ह प्रतिशुश्राव ब्रह्मविद इव सोम्य ते मुखं भाति को नु त्वानुशशासेति को नु मानुशिष्याद्भो इतिहापेव निन्हुत इमे नूनमीदृशा अन्यादृशा इतीहाग्नीनभ्यूदे किं नु सोम्य किल तेऽवोचन्निती दमिति ह प्रतिजज्ञे लोकान्वाव किल सोम्य तेऽवोचन्नहं तु ते तद्वक्ष्यामि यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यत इति ब्रवीतु मे भगवानिति तस्मै होवाच ॥ इति चतुर्दशः खण्डः ॥ १४ ॥ य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तद्यद्यप्य-

स्मिन्त्सर्पिर्वोदकं वा सिञ्चन्ति वर्त्मनी एव गच्छत्येत१ँसंयद्वाम इत्याचक्षत एत१ँहि सर्वाणि वामान्यभिसंयन्ति सर्वाण्येनं वामान्यभिसंयन्ति य एवं वेद एष उ एव वामनीरेष हि सर्वाणि वामानि नयति सर्वाणि वामानि नयति य एवं वेदैष उ एव भामनीरेष हि सर्वेषु लोकेषु भाति सर्वेषु लोकेषु भाति य एवं वेदाथ यदु चैवास्मिञ्छव्यं कुर्वन्ति यदि च नार्चिषमेवाभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासा१ँस्तान्मासेभ्यः संवत्सर१ँसंवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते नावर्तन्ते ॥ इति पञ्चदशः खण्डः ॥

॥ १५ ॥ एष ह वै यज्ञो योऽयं पवत एष ह यन्निद१ँसर्वं पुनाति यदेष यन्निद१ँ

सर्वं पुनाति तस्मादेष एव यज्ञस्तस्य मनश्च वाक्च वर्तनी तयोरन्यतरां मनसा संस्करोति ब्रह्मा वाचा होताध्वर्युरुद्गातान्यतरांस यत्रोपाकृते प्रातरनुवाके पुरा परिधानीयाया ब्रह्मा व्यववदत्यन्यतरामेव वर्तनिंसंस्करोति हीयतेऽन्यतरा स यथैकपाद्व्रजन्रथो वैकेन चक्रेण वर्तमानो रिष्यत्येवमस्य यज्ञो रिष्यति यज्ञंरिष्यन्तं यजमानोऽनुरिष्यति स इष्ट्वा पापीयान्भवत्यथ यत्रोपाकृते प्रातरनुवाके न पुरा परिधानीयाया ब्रह्मा व्यववदत्युभे एव वर्तनी संस्कुर्वन्ति न हीयतेऽन्यतरा स यथोभयपाद्व्रजन्रथो वोभाभ्यां चक्राभ्यां वर्तमानः प्रतितिष्ठत्येवमस्य यज्ञः प्रतितिष्ठति यज्ञं प्रतितिष्ठन्तं यजमानोऽनुप्रतितिष्ठति स इष्ट्वा श्रेयान्भवति ॥ इति षोडशः खण्डः ॥ १६ ॥ प्रजापतिर्लोकानभ्यतपत्तेषां तप्यमानानांरसान्प्राबृहदग्निं पृथिव्या

वायुमन्तरिक्षादादित्यं दिवः स एतास्तिस्रो देवता अभ्यतपत्तासां तप्यमानाना॑ँरसा-न्प्राबृहदग्नेर्ऋचो वायोर्यजू॑ँषि सामान्यादित्यात्स एतां त्रयीं विद्यामभ्यतपत्तस्यास्तप्य-मानाया रसान्प्राबृहद्भूरित्यृग्भ्यो भुवरिति यजुर्भ्यः स्वरिति सामभ्यस्तद्यदृक्तो रिष्येद्भूः स्वाहेति गार्हपत्ये जुहुयादृचामेव तद्रसेनर्चां वीर्येणर्चां यज्ञस्य विरिष्ट॑ँस-न्दधात्यथ यदि यजुष्टो रिष्येद्भुवः स्वाहेति दक्षिणाग्नौ जुहुयाद्यजुषामेव तद्रसेन यजुषां वीर्येण यजुषां यज्ञस्य विरिष्ट॑ँसन्दधात्यथ यदि सामतो रिष्येत्स्वः स्वाहे-त्याहवनीये जुहुयात्साम्नामेव तद्रसेन साम्नां वीर्येण साम्नां यज्ञस्य विरिष्ट॑ँसन्द-धाति तद्यथा लवणेन सुवर्ण॑ँसन्दध्यात्सुवर्णेन रजत॑ँरजतेन त्रपु त्रपुणा सीस॑ँसीसेन लोहं लोहेन दारु दारु चर्मणैवमेषां लोकानामासां देवतानामस्यास्त्रय्या ॥ ७२ ॥

विद्याया वीर्येण यज्ञस्य विरिष्टꣳसन्दधाति भेषजकृतो ह वा एष यज्ञो यत्रैवंविद्ब्रह्मा भवत्येष ह वा उदक्प्रवणो यज्ञो यत्रैवंविद्ब्रह्मा भवत्येवंविदꣳह वा एषा ब्रह्माण-मनु गाथा यतो यत आवर्त्तते तत्तद्गच्छति मानवो ब्रह्मैवैक ऋत्विक्कुरूनश्वाभिर-क्षत्येवंविद्ध वै ब्रह्मा यज्ञं यजमानꣳसर्वाꣳश्चर्त्विजोऽभिरक्षति तस्मादेवंविदमेव ब्रह्माणं कुर्वीत नानेवंविदं नानेवंविदं ॥ १७ ॥ इति छान्दोग्योपनिषदि चतुर्थः प्रपाठकः समाप्तः ॥ ४ ॥ ॐ ॥ यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च यो ह वै वसिष्ठं वेद वसिष्ठो ह स्वानां भवति वाग्वाव वसिष्ठो यो ह वै प्रतिष्ठां वेद प्रति ह तिष्ठत्यस्मिꣳश्च लोकेऽमुष्मिꣳश्च चक्षुर्वाव प्रतिष्ठा यो ह वै सम्पदं वेद सꣳहास्मै कामाः पद्यन्ते दैवाश्च मानुषाश्च श्रोत्रं

छा० ७३ ॥

वाव सम्पद्यो ह वा आयतनं वेदायतन ँ ह स्वानां भवति मनो ह वा आयतनमथ ह प्राणा अह ँ श्रेयसि व्यूदिरेऽह ँ श्रेयानस्म्यह ँ श्रेयानस्मीति ते ह प्राणाः प्रजापतिं पितरमेत्योचुर्भगवन्को नः श्रेष्ठ इति तान्होवाच यस्मिन्व उत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्येत स वः श्रेष्ठ इति सा ह वागुच्चक्राम सा संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथा कला अवदन्तः प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति प्रविवेश ह वाक्चक्षुर्होच्चक्राम तत्संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथान्धा अपश्यन्तः प्राणन्तः प्राणेन वदन्तो वाचा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति प्रविवेश ह चक्षुः श्रोत्र ँ होच्चक्राम तत्संवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जी-

७० प्र० ५ ॥ ७२ ॥

वितुमिति यथा बधिरा अशृण्वन्तः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा ध्याय-
न्तो मनसैवमिति प्रविवेश ह श्रोत्रं मनो होच्चक्राम तत्संवत्सरं प्रोष्य पर्येत्योवाच
कथमशकतर्त्ते मज्जीवितुमिति यथा बाला अमनसः प्राणन्तः प्राणेन वदन्तो वाचा
पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेणैवमिति प्रविवेश ह मनोऽथ ह प्राण उच्चिक्रमिष्य-
न्त्स यथा सुहयः पड्वीशशङ्कून्त्सङ्खिदेदेवमितरान्प्राणान्त्समखिदत्त ँ हाभिसमेत्यो-
चुर्भगवन्नेधि त्वं नः श्रेष्ठोऽसि मोत्क्रमीरित्यथ हैनं वागुवाच यदहं वसिष्ठोऽस्मि त्वं
तद्वसिष्ठोऽसीत्यथ हैनं चक्षुरुवाच यदहं प्रतिष्ठास्मि त्वं तत्प्रतिष्ठासीत्यथ हैन ँ श्रोत्र-
मुवाच यदह ँ सम्पदस्मि त्वं तत्सम्पदसीत्यथ हैनं मन उवाच यदहमायतनमस्मि
त्वं तदायतनमसीति न वै वाचो न चक्षू ँ षि न श्रोत्राणि न मना ँ सीत्याचक्षते

79

प्राणा इत्येवाचक्षते प्राणो ह्येवैतानि सर्वाणि भवति ॥ इति प्रथमः खण्डः ॥ १ ॥ स होवाच किं मेऽन्नं भविष्यतीति यत्किञ्चिदिदमा श्वभ्य आ शकुनिभ्य इति होचुस्तद्वा एतदनस्यान्नमनो ह वै नाम प्रत्यक्षं न ह वा एवंविदि किञ्चनानन्नं भवतीति स होवाच किं मे वासो भविष्यतीत्याप इति होचुस्तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति लम्भुको ह वासो भवत्यनग्नो ह भवति तद्धैतत्सत्यकामो जाबालो गोश्रुतये वैयाघ्रपद्यायोक्त्वोवाच यद्यप्येनच्छुष्काय स्थाणवे ब्रूयाज्जायेरन्नेवास्मिञ्छाखाः प्ररोहेयुः पलाशानीत्यथ यदि महज्जिगमिषेदमावास्यायां दीक्षित्वा पौर्णमास्या ँ रात्रौ सर्वौषधस्य मन्थं दधिमधुनोरुपमथ्य ज्येष्ठाय श्रेष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेद्वसिष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत्प्रतिष्ठायै स्वाहेत्यग्नावाज्यस्य

हुत्वा मन्थे सम्पातमवनयेत्सम्पदे स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेदाय-
तनाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेदथ प्रतिसृप्याञ्जलौ मन्थमाधाय
जपत्यमो नामास्यमा हि ते सर्वमिद ँसं हि ज्येष्ठः श्रेष्ठो राजाधिपतिः स मा ज्यैष्ठ्य ँश्रै-
ष्ठ्य ँराज्यमाधिपत्यं गमयत्वहमेवेद ँसर्वमसानीत्यथ खल्वेतयर्चा पच्छ आचाम-
ति तत्सवितुर्वृणीमह इत्याचामति वयं देवस्य भोजनमित्याचामति श्रेष्ठ ँसर्वधातममि-
त्याचामति तुरं भगस्य धीमहीति सर्वं पिबति निर्णिज्य क ँसं चमसं वा पश्चादग्नेः
संविशति चर्मणि वा स्थण्डिले वा वाचंयमोऽप्रसाहः स यदि स्त्रियं पश्येत्समृद्धं
कर्मेति विद्यात्तदेष श्लोको यदा कर्मसु काम्येषु स्त्रिय ँस्वप्नेषु पश्यति समृद्धिं तत्र
जानीयात्तस्मिन्त्स्वप्ननिदर्शने तस्मिन्त्स्वप्ननिदर्शने ॥ इति द्वितीयः खण्डः ॥ २ ॥

श्वेतकेतुर्हारुणेयः पञ्चालानाꣳसमितिमेयाय तꣳह प्रवाहणो जैबलिरुवाच कुमारानु त्वाशिषत्पितेत्यनु हि भगव इति वेत्थ यदितोऽधि प्रजाः प्रयन्तीति न भगव इति वेत्थ यथा पुनरावर्त्तन्ता३ इति न भगव इति वेत्थ पथोर्देवयानस्य पितृयाणस्य च व्यावर्त्तना३ इति न भगव इति वेत्थ यथासौ लोको न सम्पूर्यता३ इति न भगव इति वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति नैव भगव इत्यथ नु किमनुशिष्टोऽवोचथा यो हीमानि न विद्यात्कथꣳसोऽनुशिष्टो ब्रवीतेति स हायस्तः पितुरर्द्धमेयाय तꣳहोवाचाननुशिष्य वाव किल मा भगवानब्रवीदनु त्वाशिषमिति पञ्च मा राजन्यबन्धुः प्रश्नानप्राक्षीत्तेषां नैकं च नाशकं विवक्तुमिति स होवाच यथा मा त्वं तदैतानवदो यथाहमेषां नैकं च न वेद यद्यहमिमानवेदिष्यं कथं ते नावक्ष्यमिति स ह गौतमो राज्ञोऽर्द्धमेयाय तस्मै

ह प्रातायार्हाञ्चकार स ह प्रातः सभाग उदेयाय तꣳहोवाच मानुषस्य भगवन्गौतम वित्तस्य वरं वृणीथा इति स होवाच तवैव राजन्मानुषं वित्तं यामेव कुमारस्यान्ते वाचमभाषथास्तामेव मे ब्रूहीति स ह कृच्छ्री बभूव तꣳह चिरं वसेत्याज्ञापयाञ्चकार तꣳहोवाच यथा मा त्वं गौतमावदो यथेयं न प्राक्त्वत्तः पुरा विद्या ब्राह्मणान्गच्छति तस्मादु सर्वेषु लोकेषु क्षत्रस्यैव प्रशासनमभूदिति तस्मै होवाच ॥ इति तृतीयः खण्डः ॥ ३ ॥ असौ वाव लोको गौतमाग्निस्तस्यादित्य एव समिद्रश्मयो धूमोऽहरर्चिश्चन्द्रमा अङ्गारा नक्षत्राणि विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा सम्भवति ॥ इति चतुर्थः खण्डः ॥ ४ ॥ पर्जन्यो वाव गौतमाग्निस्तस्य वायुरेव समिदभ्रं धूमो विद्युदर्चिरशनिरङ्गारा ह्रादुनयो विस्फुलिङ्गा-

स्तस्मिन्नेतस्मिन्नग्नौ देवाः सोमꣳराजानं जुह्वति तस्या आहुतेर्वर्षꣳसम्भवति ॥ इति पञ्चमः खण्डः ॥ ५ ॥ पृथिवी वाव गौतमाग्निस्तस्याः संवत्सर एव समिदाकाशो धूमो रात्रिरर्चिर्दिशोऽङ्गारा अवान्तरदिशो विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा वर्षं जुह्वति तस्या आहुतेरन्नꣳसम्भवति ॥ इति षष्ठः खण्डः ॥ ६ ॥ पुरुषो वाव गौतमाग्निस्तस्य वागेव समित्प्राणो धूमो जिह्वार्चिश्चक्षुरङ्गाराः श्रोत्रं विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ-देवा अन्नं जुह्वति तस्या आहुते रेतः सम्भवति ॥ इति सप्तमः खण्डः ॥ ७ ॥ योषा वाव गौतमाग्निस्तस्या उपस्थ एव समिद्यदुपमन्त्रयते स धूमो योनिरर्चिर्यदन्तः करोति तेऽङ्गारा अभिनन्दा विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेर्गर्भः सम्भवति ॥ इत्यष्टमः खण्डः ॥ ८ ॥ इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भव-

न्तीति स उल्बावृतो गर्भो दश वा मासानन्तः शयित्वा यावद्वाथ जायते स जातो यावदायुषं जीवति तं प्रेतं दिष्टमितोऽग्नय एव हरन्ति यत एवेतो यतः सम्भूतो भवति ॥ इति नवमः खण्डः ॥ ९ ॥ तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङ्केति मासाꣳस्तान्मासेभ्यः संवत्सरꣳसंवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयत्येष देवयानः पन्था इत्यथ य इमे ग्राम इष्टापूर्त्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद्यान्षड्दक्षिणैति मासाꣳस्तान्नैते संवत्सरमभिप्राप्नुवन्ति मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति तस्मिन्यावत्सम्पातमुषित्वाऽथैतमे-

वाध्वानं पुनर्निवर्त्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्तेऽतो वै खलु दुर्निष्प्रपतरं यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वाथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरञ्छ्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वाथैतयोः पथोर्न कतरेण च न तानीमानि क्षुद्राण्यसकृदावर्त्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीय॑ꣳस्थानं तेनासौ लोको न सम्पूर्यते तस्माज्जुगुप्सेत तदेष श्लोकः स्तेनो हिरण्यस्य सुरां पिब॑ꣳश्च गुरोस्तल्पमावसन्ब्रह्महा चैते पतन्ति चत्वारः पञ्चम-

आचर ँस्तैरित्यथ ह य एतानेवं पञ्चाग्नीन्वेद न सह तैरप्याचरन्पाप्मना लिप्यते शुद्धः पूतः पुण्यलोको भवति य एवं वेद य एवं वेद ॥ इति दशमः खण्डः ॥ १० ॥

प्राचीनशाल औपमन्यवः सत्ययज्ञः पौलुषिरिन्द्रद्युम्नो भाल्लवेयो जनः शार्कराक्ष्यो बुडिल आश्वतराश्विस्ते हैते महाशाला महाश्रोत्रियाः समेत्य मीमा ँसाञ्चक्रुः को नु आत्मा किं ब्रह्मेति ते ह सम्पादयाञ्चक्रुरुद्दालको वै भगवन्तोऽयमारुणिः सम्प्रतीममात्मानं वैश्वानरमध्येति त ँहन्ताभ्यागच्छामेति त ँहाभ्याजग्मुः स ह सम्पादयाञ्चकार प्रक्ष्यन्ति मामिमे महाशाला महाश्रोत्रियास्तेभ्यो न सर्वमिव प्रतिपत्स्ये हन्ताहमन्यमभ्यनुशासानीति तान्होवाचाश्वपतिर्वै भगवन्तोऽयं कैकेयः सम्प्रतीममात्मानं वैश्वानरमध्येति त ँहन्ताभ्यागच्छामेति त ँहाभ्याजग्मुस्तेभ्यो ह प्राप्तेभ्यः पृथगर्हाणि

कारयाञ्चकार स ह प्रातः सञ्जिहान उवाच न मे स्तेनो जनपदे न कदर्यो न मद्यपो नानाहिताग्निर्नाविद्वान्न स्वैरी स्वैरिणी कुतो यक्ष्यमाणो वै भगवन्तोऽहमस्मि यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद्भगवद्भ्यो दास्यामि वसन्तु मे भगवन्त इति ते होचुर्येन हैवार्थेन पुरुषश्चरेत्तꣳहैव वदेदात्मानमेवेमं वैश्वानरꣳसम्प्रत्यध्येषि तमेव नो ब्रूहीति तान्होवाच प्रातर्वः प्रतिवक्तास्मीति ते ह समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे तान्हानुपनीयैवैतदुवाच ॥ इत्येकादशः खण्डः ॥ ११ ॥ औपमन्यव कं त्वमात्मानमुपास्स इति दिवमेव भगवो राजन्निति होवाचैष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्तव सुतं प्रसुतमासुतं कुले दृश्यतेऽत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते मूर्द्धा त्वेष

आत्मन इति होवाच मूर्धा ते व्यपतिष्यद्यन्मां नागमिष्य इति ॥ इति द्वादशः खण्डः ॥ १२॥ अथ होवाच सत्ययज्ञं पौलुषिं प्राचीनयोग्य कं त्वमात्मानमूपास्स इत्यादित्यमेव भगवो राजन्निति होवाचैष वै विश्वरूप आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्तव बहु विश्वरूपं कुले दृश्यते प्रवृत्तोऽश्वतरीरथो दासीनिष्कोऽत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते चक्षुष्ट्वेतदात्मन इति होवाचान्धोऽभविष्यद्यन्मां नागमिष्य इति ॥ इति त्रयोदशः खण्डः ॥ १३ ॥ अथ होवाचेन्द्रद्युम्नं भाल्लवेयं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इति वायुमेव भगवो राजन्निति होवाचैष वै पृथग्वर्त्मात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वां पृथग्बलय आयन्ति पृथग्रथश्रेणयोऽनुयन्त्यत्स्यन्नं पश्यसि प्रियमत्त्यन्नं

पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते प्राणस्त्वेष आत्मन इति होवाच प्राणस्त उदक्रमिष्यद्यन्मां नागमिष्य इति ॥ इति चतुर्दशः खण्डः ॥ १४ ॥ अथ होवाच जनꣳशार्कराक्ष्य कं त्वमात्मानमुपास्स इत्याकाशमेव भगवो राजन्निति होवाचैष वै बहुल आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वं बहुलोऽसि प्रजया च धनेन चात्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते सन्देहस्त्वेष आत्मन इति होवाच सन्देहस्ते व्यशीर्यद्यन्मां नागमिष्य इति ॥ इति पञ्चदशः खण्डः ॥ १५ ॥ अथ होवाच बुडिलमाश्वतराश्विं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इत्यप एव भगवो राजन्निति होवाचैष वै रयिरात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मा-

त्त्व ँरयिमान्पुष्टिमानस्यत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते बस्तिस्त्वेष आत्मन इति होवाच बस्तिस्ते व्यभेत्स्यद्यन्मां नागमिष्य इति ॥ इति षोडशः खण्डः ॥ १६ ॥ अथ होवाचोद्दालकमारुणिं गौतम कं त्वमात्मानमुपास्स इति पृथिवीमेव भगवो राजन्निति होवाचैष वै प्रतिष्ठात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वं प्रतिष्ठितोऽसि प्रजया च पशुभिश्चात्स्यन्नं पश्यसि प्रियमत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते पादौ त्वेतावात्मन इति होवाच पादौ ते व्यम्लास्येतां यन्मां नागमिष्य इति ॥ इति सप्तदशः खण्डः ॥ १७ ॥ तान्होवाचैते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वाँसोऽन्नमत्थ यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं

वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा सन्देहो बहुलो बस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः ॥ इत्यष्टादशः खण्डः ॥ १८ ॥ तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयꣳस यां प्रथमामाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वाहेति प्राणस्तृप्यति प्राणे तृप्यति चक्षुस्तृप्यति चक्षुषि तृप्यत्यादित्यस्तृप्यत्यादित्ये तृप्यति द्यौस्तृप्यति दिवि तृप्यत्यां यत्किञ्च द्यौश्चादित्यश्चाधितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ इत्येकोनविंशः खण्डः ॥ १९ ॥ अथ यां द्वितीयां जुहुयात्तां जुहुयाद्व्यानाय स्वाहेति व्यानस्तृप्यति व्याने तृप्यति श्रोत्रं तृप्यति

श्रोत्रे तृप्यति चन्द्रमास्तृप्यति चन्द्रमसि तृप्यति दिशस्तृप्यन्ति दिक्षु तृप्यतीषु यत्किञ्च दिशश्च चन्द्रमाश्चाधितिष्ठन्ति तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ इति विंशः खण्डः ॥ २० ॥ अथ यां तृतीयां जुहुयात्तां जुहुयादपानाय स्वाहेत्यपानस्तृप्यत्यपाने तृप्यति वाक्तृप्याति वाचि तृप्यत्यामग्निस्तृप्यत्यग्नौ तृप्यति पृथिवी तृप्यति पृथिव्यां तृप्यत्यां यत्किञ्च पृथिवी चाग्निश्चाधितिष्ठतस्तत्तृप्याति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ इत्येकविंशः खण्डः ॥ २१ ॥ अथ यां चतुर्थीं जुहुयात्तां जुहुयात्समानाय स्वाहेति समानस्तृप्यति समाने तृप्यति मनस्तृप्याति मनासि तृप्यति पर्जन्यस्तृप्यति पर्जन्ये तृप्यति विद्युत्तृप्यति विद्युति तृप्यत्यां यत्किञ्च विद्युच्च पर्जन्यश्चाधितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं

ता०छा० उ० प्र० ५

तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ इति द्वाविंशः खण्डः ॥२२॥ अथ यां पञ्चमीं जुहुयात्तां जुहुयादुदानाय स्वाहेत्युदानस्तृप्यत्युदाने तृप्यति वायुस्तृप्यति वायौ तृप्यत्याकाशस्तृप्यत्याकाशे तृप्यति यत्किञ्च वायुश्चाकाशश्चाधितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ इति त्रयोविंशः खण्डः ॥ २३ ॥ स य इदमविद्वानग्निहोत्रं जुहोति यथाङ्गारानपोह्य भस्मनि जुहुयात्तादृक्तत्स्यादथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवꣳहास्य सर्वे पाप्मानः प्रदूयन्ते य एतदेवं विद्वानग्निहोत्रं जुहोति तस्मादु हैवंविद्यद्यपि चण्डालायोच्छिष्टं प्रयच्छेदात्मनि हैवास्य तद्वैश्वानरे हुतꣳस्यादिति तदेष श्लोको यथेह क्षुधिता बाला मातरं पर्युपासत एवꣳ

सर्वाणि भूतान्यग्निहोत्रमुपासत इत्यग्निहोत्रमुपासत इति ॥ इति चतुर्विंशः खण्डः ॥ २४ ॥ इति छान्दोग्योपनिषत्सु पञ्चमः प्रपाठकः ॥ ॐतत्सत् ॥ ॥ ॐ ॥ श्वेत-केतुर्हारुणेय आस तꣳह पितोवाच श्वेतकेतो वस ब्रह्मचर्यं न वै सोम्यास्मत्कुली-नोऽननूच्य ब्रह्मबन्धुरिव भवतीति स ह द्वादशवर्ष उपेत्य चतुर्विꣳशतिवर्षः सर्वा-न्वेदानधीत्य महामना अनूचानमानी स्तब्ध एयाय तꣳह पितोवाच श्वेतकेतो यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽस्युत तमादेशमप्राक्ष्यो येनाश्रुतꣳश्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति कथं नु भगवः स आदेशो भवतीति यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातꣳस्याद्वाचारम्भणं विकारो नामधेयं मृत्ति-केत्येव सत्यं यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातꣳस्याद्वाचारम्भणं

विकारो नामधेयं लोहमित्येव सत्यं यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णा-
यसं विज्ञातꣳस्याद्वाचारम्भणं विकारो नामधेयं कृष्णायसमित्येव सत्यमेवꣳसोम्य
स आदेशो भवतीति न वै नूनं भगवन्तस्त एतदवेदिषुर्यद्ध्येतदवेदिष्यन्कथं मे
नावक्ष्यन्निति भगवाꣳस्त्वेवमेतद्ब्रवीत्विति तथा सोम्येति होवाच ॥ इति प्रथमः खण्डः
॥ १ ॥ सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तद्धैक आहुरसदेवेदमग्र आसीदेक-
मेवाद्वितीयं तस्मादसतः सज्जायेत कुतस्तु खलु सोम्यैवꣳस्यादिति होवाच कथमसतः
सज्जायेतेति सत्त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहु स्यां प्रजायेयेति
तत्तेजोऽसृजत तत्तेज ऐक्षत बहु स्यां प्रजायेयेति तदपोऽसृजत तस्माद्यत्रक्वच शोचति
स्वेदते वा पुरुषस्तेजस एव तदध्यापो जायन्ते ता आप ऐक्षन्त बह्व्यः स्याम प्रजा-

येमहीति ता अन्नमसृजन्त तस्माद्यत्रक्व च वर्षति तदेव भूयिष्ठमन्नं भवत्यद्भ्य एव तदध्यन्नाद्यं जायते ॥ इति द्वितीयः खण्डः ॥ २ ॥ तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्त्याण्डजं जीवजमुद्भिज्जमिति सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति सेयं देवतेमास्तिस्रो देवता अनेनैव जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोत्तासां त्रिवृतं त्रिवृतमेकैकामकरोद्यथा नु खलु सोम्येमास्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति ॥ इति तृतीयः खण्डः ॥ ३ ॥ यदग्ने रोहित९रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादग्नेरग्नित्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यं यदादित्यस्य रोहित९रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां

यत्कृष्णं तदन्नस्यापागादादित्यादादित्यत्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यं यच्चन्द्रमसो रोहित ऽ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागाच्चन्द्राच्चन्द्रत्वं वाचारम्भणं विकारो नामधेयं त्रीणिरूपाणीत्येव सत्यं यद्विद्युतो रोहित ऽ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागाद्विद्युतो विद्युत्त्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यमेतद्ध स्म वै तद्विद्वा ऽस आहुः पूर्वे महाशाला महाश्रोत्रिया न नोऽद्य कश्चनाश्रुतममतमविज्ञातमुदाहरिष्यतीति ह्येभ्यो विदाञ्चक्रुर्यदु रोहितमिवाभूदिति तेजसस्तद्रूपमिति तद्विदाञ्चक्रुर्यदु शुक्लमिवाभूदित्यपा ऽरूपमिति तद्विदाञ्चक्रुर्यदु कृष्णमिवाभूदित्यन्नस्य रूपमिति तद्विदाञ्चक्रुर्यद्विज्ञातमेवाभूदित्येतासामेव देवताना ऽसमास इति तद्विदाञ्चक्रुर्यथा नु खलु सोम्येमास्तिस्रो

देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति ॥ इति चतुर्थः खण्डः ॥ ४ ॥ अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मा॰सं योऽणिष्ठस्तन्मन आपः पीतास्त्रेधा विधीयन्ते तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति यो मध्यमस्तल्लोहितं योऽणिष्ठः स प्राणस्तेजोऽशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तदस्थि भवति यो मध्यमः स मज्जा योऽणिष्ठः सा वागन्नमय॰हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ इति पञ्चमः खण्डः ॥ ५ ॥ दध्नः सोम्य मथ्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तत्सर्पिर्भवत्येवमेव खलु सोम्यान्नस्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तन्मनो भवत्यपा॰सोम्य पीयमानानां योऽणिमा स ऊर्ध्वः

89

समुदीषति स प्राणो भवति तेजसः सोम्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति सा वाग्भवत्यन्नमय ँ हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ इति षष्ठः खण्डः ॥ ६ ॥ षोडशकलः सोम्य पुरुषः पञ्चदशाहानि माशीः काममपः पिबापोमयः प्राणो न पिबतो विच्छेत्स्यत इति सह पञ्चदशाहानि नाशाथ हैनमुपससाद किं ब्रवीमि भो इत्यृचः सोम्य यजू ँ षि सामानीति स होवाच न वै मा प्रतिभान्ति भो इति त ँ होवाच यथा सोम्य महतोऽभ्याहितस्यैकोऽङ्गारः खद्योतमात्रः परिशिष्टः स्यात्तेन ततोऽपि न बहु दहेदेव ँ सोम्य ते षोडशानां कलानामेका कलातिशिष्टा स्यात्तयैतर्हि वेदान्नानुभवस्यशानाथ मे विज्ञास्यसीति स हाशाथ हैनमुपससाद त ँ ह यत्किञ्च पप्रच्छ सर्व ँ ह प्रतिपेदे त ँ होवाच

यथा सोम्य महतोऽभ्याहितस्यैकमङ्गारं खद्योतमात्रं परिशिष्टं तं तृणैरुपसमाधाय प्रज्वा-
लयेत्तेन ततोऽपि बहु दहेदेव ᳪसोम्य ते षोडशानां कलानामेका कलातिशिष्टाभूत्सा-
न्नेनोपसमाहिता प्राज्वालीत्तयैतर्हि वेदाननुभवस्यन्नमय ᳪहि सोम्य मन आपोमयः
प्राणस्तेजोमयी वागिति तद्धास्य विजज्ञाविति विजज्ञाविति ॥ इति सप्तमः खण्डः ॥
७ ॥ उद्दालको हारुणिः श्वेतकेतुं पुत्रमुवाच स्वप्नान्तं मे सोम्य विजानीहीति यत्रै-
तत्पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति तस्मादेन ᳪ
स्वपितीत्याचक्षते स्व ᳪह्यपीतो भवति स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पति-
त्वान्यत्रायतनमलब्ध्वा बन्धनमेवोपश्रयत एवमेव खलु सोम्य तन्मनो दिशं दिशं
पतित्वान्यत्रायतनमलब्ध्वा प्राणमेवोपश्रयते प्राणबन्धन ᳪहि सोम्य मन इत्यशना-

पिपासे मे सोम्य विजानीहीति यत्रैतत्पुरुषोऽशिशिषति नामाप एव तदशितं नयन्ते तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तदप आचक्षतेऽशनायेति तत्रैतच्छुङ्गमुत्पतित॰सोम्य विजानीहि नेदममूलं भविष्यतीति तस्य क्व मूल॰स्यादन्यत्रान्नादेवमेव खलु सोम्यान्नेन शुङ्गेनापो मूलमन्विच्छाद्भिः सोम्य शुङ्गेन तेजो मुलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठा अथ यत्रैतत्पुरुषः पिपासति नाम तेज एव तत्पीतं नयते तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तत्तेज आचष्ट उदन्येति तत्रैतदेव शुङ्गमुत्पतित॰सोम्य विजानीहि नेदममूलं भविष्यतीति तस्य क्व मूल॰स्यादन्यत्राद्भ्योऽद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदा-

यतनाः सत्प्रतिष्ठा यथा तु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तदुक्तं पुरस्तादेव भवत्यस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाᳬस य एषोऽणिमैतदात्म्यमिदᳬसर्वं तत्सत्यᳬस आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ इत्यष्टमः खण्डः ॥ ८ ॥ यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणाᳬरसान्त्समवहारमेकताᳬरसं गमयन्ति ते यथा तत्र न विवेकं लभन्तेऽमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सोम्येमाः सर्वाः प्रजाः सति सम्पद्य न विदुः सति सम्पद्यामह इति त इह व्याघ्रो वा सिᳬहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दᳬशो वा मशको वा यद्यद्भवन्ति

तदा भवन्ति स य एषोऽणिमैतदात्म्यमिदꣳसर्वं तत्सत्यꣳस आत्मा तत्त्वमसिश्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ इति नवमः खण्डः ॥ ९ ॥ इमाः सोम्य नद्यः पुरस्तात्प्राच्यः स्यन्दन्ते पश्चात्प्रतीच्यस्ताः समुद्रात्समुद्रमेवापियन्ति समुद्र एव भवन्ति ता यथा तत्र न विदुरियमहमस्मीयमहमस्मीत्येवमेव खलु सोम्येमाः सर्वाः प्रजाः सत आगम्य न विदुः सत आगच्छामह इति त इह व्याघ्रो वा सिꣳहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दꣳशो वा मशको वा यद्यद्भवन्ति तदा भवन्ति स य एषोऽणिमैतदात्म्यमिदꣳसर्वं तत्सत्यꣳस आत्मा तत्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ इति दशमः खण्डः ॥ १० ॥ अस्य सोम्य महतो वृक्षस्य यो मूलेऽभ्याह-

न्याज्जीवन्स्रवेद्यो मध्येऽभ्याहन्याज्जीवन्स्रवेद्योऽग्रेऽभ्याहन्याज्जीवन्स्रवेत्स एष जीवे-
नात्मनानुप्रभूतः पेपीयमानो मोदमानस्तिष्ठत्यस्य यदेकाꣳशाखां जीवो जहात्यथ
सा शुष्यति द्वितीयां जहात्यथ सा शुष्यति तृतीयां जहात्यथ सा शुष्यति सर्वं
जहाति सर्वः शुष्यत्येवमेव खलु सोम्य विद्धीति होवाच जीवापेतं वाव किलेदं
म्रियते न जीवो म्रियत इति स य एषोऽणिमैतदात्म्यमिदꣳसर्वं तत्सत्यꣳस आत्मा
तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच
॥ इत्येकादशः खण्डः ॥ ११ ॥ न्यग्रोधफलमत आहरेतीदं भगव इति भिन्धीति
भिन्नं भगव इति किमत्र पश्यसीत्यण्व्य इवेमा धाना भगव इत्यासामङ्गैकां
भिन्धीति भिन्ना भगव इति किमत्र पश्यसीति न किञ्चन भगव इति तꣳहोवाच यं

92

वै सोम्यैतमणिमानं न निभालयस एतस्य वै सोम्यैषोऽणिम्न एवं महान्यग्रोधस्तिष्ठति श्रद्धत्स्व सोम्येति स य एषोऽणिमैतदात्म्यमिद ँ सर्वं तत्सत्य ँ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ इति द्वादशः खण्डः ॥ १२ ॥ लवणमेतदुदकेऽवधायाथ मा प्रातरुपसीदथा इति स ह तथा चकार त ँ होवाच यद्दोषा लवणमुदकेऽबाधा अङ्ग तदाहरेति तद्धावमृश्य न विवेद यथा विलीनमेवाङ्गास्यान्तादाचामेति कथमिति लवणमिति मध्यादाचामेति कथमिति लवणमित्यंतादाचामेति कथमिति लवणमित्यभिप्राश्यैनदथ मोपसीदथा इति तद्ध तथा चकार तच्छश्वत्संवर्त्तते त ँ होवाचात्र वाव किल सत्सोम्य न निभालयसेऽत्रैव किलेति स य एषोऽणिमैतदात्म्यमिद ँ सर्वं तत्सत्य ँ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव

मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ इति त्रयोदशः खण्डः ॥ १३ ॥ यथा सोम्य पुरुषं गन्धारेभ्योऽभिनद्धाक्षमानीय तं ततोऽतिजने विसृजेत्स यथा तत्र प्राङ्वोदङ्वाधराङ्वा प्रध्मायिताभिनद्धाक्ष आनीतोऽभिनद्धाक्षो विसृष्टस्तस्य यथाभिनहनं प्रमुच्य प्रब्रूयादेतां दिशं गन्धारा एतां दिशं व्रजेति स ग्रामाद्ग्रामं पृच्छन्पण्डितो मेधावी गन्धारानेवोपसम्पद्येतैवमेवेहाचार्यवान्पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्य इति स य एषोऽणिमैतदात्म्यमिद॰ सर्वं तत्सत्य॰ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ इति चतुर्दशः खण्डः ॥ १४ ॥ पुरुष॰ सोम्योतोपतापिनं ज्ञातयः पर्युपासते जानासि मां जानासि मामिति तस्य यावन्न वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः

परस्यां देवतायां तावज्जानात्यथ यदास्य वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायामथ न जानाति स य एषोऽणिमैतदात्म्यमिद ँ सर्वं तत्सत्य ँ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ इति पञ्चदशः खण्डः ॥ १५ ॥ पुरुष ँ सोम्योत हस्तगृहीतमानयन्त्यपहार्षीत्स्तेयमकार्षीत्परशुमस्मै तपतेति स यदि तस्य कर्त्ता भवति तत एवानृतमात्मानं कुरुते सोऽनृताभिसन्धोऽनृतेनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स दह्यतेऽथ हन्यतेऽथ यदि तस्याकर्त्ता भवति तत एव सत्यमात्मानं कुरुते स सत्याभिसन्धः सत्येनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स न दह्यतेऽथ मुच्यते स यथा तत्र नादाह्येतैतदात्म्यमिद ँ सर्वं तत्सत्य ँ स आत्मा तत्त्वमसि श्वेतकेतो इति तद्धास्य

विजज्ञाविति विजज्ञाविति ॥ इति षोडशः खण्डः ॥ १६ ॥ इति छान्दोग्योपनिषत्सु षष्ठः प्रपाठकः ॥ ६ ॥ ॐ ॥ अधीहि भगव इति होपससाद सनत्कुमारं नारदस्त॰ होवाच यद्वेत्थ तेन मोपसीद ततस्त ऊर्ध्वं वक्ष्यामीति स होवाचर्ग्वेदं भगवोऽध्येमि यजुर्वेद॰ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्य॰ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्या॰ सर्प-देवजनविद्यामेतद्भगवोऽध्येमि सोऽहं भगवो मन्त्रविदेवास्मि नात्मविच्छ्रुत॰ ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवाञ्छोकस्य पारं तारयत्विति त॰ होवाच यद्वै किञ्चैतदध्यगीष्ठा नामैवैतन्नाम वा ऋग्वेदो यजुर्वेदः सामवेद आथर्वणश्चतुर्थ इतिहासपुराणः पञ्चमो वेदानां वेदः पित्र्यो राशिर्दैवो निधि-

र्वाकोवाक्यमेकायनं देवविद्या ब्रह्मविद्या भूतविद्या क्षत्रविद्या नक्षत्रविद्या सर्पदेवजनविद्या नामैवैतन्नामोपास्स्वेति स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति यो नाम ब्रह्मेत्युपास्तेऽस्ति भगवो नाम्नो भूय इति नाम्नो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ इति प्रथमः खण्डः ॥ १ ॥ वाग्वाव नाम्नो भूयसी वाग्वा ऋग्वेदं विज्ञापयति यजुर्वेदꣳसामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यꣳ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳसर्पदेवजनविद्यां दिवं च पृथिवीं च वायुं चाकाशं चापश्च तेजश्च देवाꣳश्च मनुष्याꣳश्च पशुꣳश्च वयाꣳसि च तृणवनस्पतीञ्छ्वापदान्याकीटपतङ्गपिपीलकं धर्मं चाधर्मं च सत्यं चानृतं च साधु चासाधु च हृदयज्ञं चाहृदयज्ञं च यद्वै वाङ्नाभविष्यन्न धर्मो

नाधर्मो व्यज्ञापयिष्यंन्न सत्यं नानृतं न साधु नासाधु न हृदयज्ञो नाहृदयज्ञो वागेवैतत्सर्वं विज्ञापयति वाचमुपास्स्वेति स यो वाचं ब्रह्मेत्युपास्ते यावद्वाचो गतं तत्रास्य यथाकाम-चारो भवति यो वाचं ब्रह्मेत्युपास्तेऽस्ति भगवो वाचो भूय इति वाचो वाव भूयो-ऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ इति द्वितीयः खण्डः ॥ २ ॥ मनो वाव वाचो भूयो यथा वै द्वे वामलके द्वे वा कोले द्वौ वाक्षौ मुष्टिरनुभवत्येवं वाचं च नाम च मनो-ऽनुभवति स यदा मनसा मनस्यति मन्त्रानधीयीयेत्यथाधीते कर्माणि कुर्वीयेत्यथ कुरुते पुत्रा९श्च पशू९श्चेच्छेयेत्यथेच्छत इमं च लोकममुं चेच्छेयेत्यथेच्छते मनो ह्यात्मा मनो हि लोको मनो हि ब्रह्म मन उपास्स्वेति स यो मनो ब्रह्मेत्युपास्ते यावन्मनसो गतं तत्रास्य यथाकामचारो भवति यो मनो ब्रह्मेत्युपास्तेऽस्ति भगवो मनसो भूय इति

95

मनसो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ इति तृतीयः खण्डः ॥ ३ ॥



सङ्कल्पो वाव मनसो भूयान्यदा वै सङ्कल्पयतेऽथ मनस्यत्यथ वाचमीरयति तामु नाम्नीरयति नाम्नि मन्त्रा एकं भवन्ति मन्त्रेषु कर्माणि तानि ह वैतानि सङ्कल्पैकायनानि सङ्कल्पात्मकानि सङ्कल्पे प्रतिष्ठितानि समक्लृपतां द्यावापृथिवी समकल्पेतां वायुश्चाकाशं च समकल्पतामापश्च तेजश्च तेषा ᳪं संक्लृप्त्यै बर्ष ᳪं सङ्कल्पते वर्षस्य संक्लृप्त्या अन्न ᳪं सङ्कल्पतेऽन्नस्य संक्लृप्त्यै प्राणाः सङ्कल्पन्ते प्राणाना ᳪं संक्लृप्त्यै मन्त्राः सङ्कल्पन्ते मन्त्राणा ᳪं संक्लृप्त्यै कर्माणि सङ्कल्पन्ते कर्मणा ᳪं संक्लृप्त्यै लोकः सङ्कल्पते लोकस्य संक्लृप्त्यै सर्व ᳪं सङ्कल्पते स एष सङ्कल्पः सङ्कल्पमुपास्स्वेति स यः सङ्कल्पं ब्रह्मेत्युपास्ते क्लृप्तान्वै स लोकान्ध्रुवान्ध्रुवः प्रतिष्ठितान्प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिध्यति ॥ ९० ॥

यावत्सङ्कल्पस्य गतं तत्रास्य यथाकामचारो भवति यः सङ्कल्पं ब्रह्मेत्युपास्तेऽस्ति भगवः सङ्कल्पाद्भूय इति सङ्कल्पाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ इति चतुर्थः खण्डः ॥ ४ ॥ चित्तं वाव सङ्कल्पाद्भूयो यदा वै चेतयतेऽथ सङ्कल्पयतेऽथ मनस्यत्यथ वाचमीरयति तामु नाम्नीरयति नाम्नि मन्त्रा एकं भवन्ति मन्त्रेषु कर्माणि तानि ह वा एतानि चित्तैकायनानि चित्तात्मानि चित्ते प्रतिष्ठितानि तस्माद्यद्यपि बहुविदचित्तो भवति नायमस्तीत्येवैनमाहुर्यदयं वेद यद्वायं विद्वान्नेत्थमचित्तः स्यादित्यथ यद्यल्पविच्चित्तवान्भवति तस्मा एवोत शुश्रूषन्ते चित्तꣳह्येवैषामेकायनं चित्तमात्मा चित्तं प्रतिष्ठा चित्तमुपास्स्वेति स यश्चित्तं ब्रह्मेत्युपास्ते चित्तान्वै स लोकान्ध्रुवान्ध्रुवः प्रतिष्ठितान्प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिध्यति यावच्चित्तस्य गतं

तत्रास्य यथाकामचारो भवति यश्चित्तं ब्रह्मेत्युपास्तेऽस्ति भगवश्चित्ताद्भूय इति चित्ता-
द्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ इति पञ्चमः खण्डः ॥ ५ ॥ ध्यानं वाव
चित्ताद्भूयो ध्यायतीव पृथिवी ध्यायतीवान्तरिक्षं ध्यायतीव द्यौर्ध्यायन्तीवापो ध्यायन्तीव
पर्वता ध्यायन्तीव देवमनुष्यास्तस्माद्य इह मनुष्याणां महतां प्राप्नुवन्ति ध्यानापादाꣳ-
शा इवैव ते भवन्त्यथ येऽल्पाः कलहिनः पिशुना उपवादिनस्तेऽथ ये प्रभवो ध्याना-
पादाꣳशा इवैव ते भवन्ति ध्यानमुपास्वेति स यो ध्यानं ब्रह्मेत्युपास्ते यावद्ध्यानस्य
गतं तत्रास्य यथाकामचारो भवति यो ध्यानं ब्रह्मेत्युपास्तेऽस्ति भगवो ध्यानाद्भूय
इति ध्यानाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ इति षष्ठः खण्डः ॥ ६ ॥
विज्ञानं वाव ध्यानाद्भूयो विज्ञानेन वा ऋग्वेदं विजानाति यजुर्वेदꣳ सामवेदमाथर्वणं

चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्य१ँराशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्या१ँसर्पदेवजनविद्यां दिवं च पृथिवीं च वायुं चाकाशं चापश्च तेजश्च देवा१ँश्च मनुष्या१ँश्च पशू१ँश्च वया१ँसि च तृणवनस्पतीञ्छ्वापदान्याकीटपतङ्गपिपीलकं धर्मं चाधर्मं च सत्यं चानृतं च साधु चासाधु च हृदयज्ञं चाहृदयज्ञं चान्नं च रसं चेमं च लोकममुं च विज्ञानेनैव विजानाति विज्ञानमुपास्वेति स यो विज्ञानं ब्रह्मेत्युपास्ते विज्ञानवतो वै स लोकाञ्ज्ञानवतोऽभिसिध्यति यावद्विज्ञानस्य गतं तत्रास्य यथाकामचारो भवति यो विज्ञानं ब्रह्मेत्युपास्तेऽस्ति भगवो विज्ञानाद्भूय इति विज्ञानाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ इति सप्तमः खण्डः ॥ ७ ॥ बलं वाव विज्ञानाद्भूयोऽपि ह शतं विज्ञानवतामेको बलवाना-

कम्पयते स यदा बली भवत्यथोत्थाता भवत्युत्तिष्ठन्परिचरिता भवति परिचरन्नुपसत्ता भवत्युपसीदन्द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्त्ता भवति विज्ञाता भवति बलेन वै पृथिवी तिष्ठति बलेनान्तरिक्षं बलेन द्यौर्बलेन पर्वता बलेन देवमनुष्या बलेन पशवश्च वयाꣳसि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपी-लकं बलेन लोकस्तिष्ठति बलमुपास्वेति स यो बलं ब्रह्मेत्युपास्ते यावद्बलस्य गतं तत्रास्य यथाकामचारो भवति यो बलं ब्रह्मेत्युपास्तेऽस्ति भगवो बलाद्भूय इति बलाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ इत्यष्टमः खण्डः ॥ ८ ॥

अन्नं वाव बलाद्भूयस्तस्माद्यद्यपि दश रात्रीर्नाश्नीयाद्यद्यु ह जीवेदथवाद्रष्टाश्रोतामन्ता-बोद्धाकर्त्ताविज्ञाता भवत्यथान्नस्याये द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा

भवति कर्त्ता भवति विज्ञाता भवत्यन्नमुपास्वेति स योऽन्नं ब्रह्मेत्युपास्तेऽन्नवतो वै स लोकान्पानवतोऽभिसिध्यति यावदन्नस्य गतं तत्रास्य यथाकामचारो भवति योऽन्नं ब्रह्मेत्युपास्तेऽस्ति भगवोऽन्नाद्भूय इत्यन्नाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवी-त्विति ॥ इति नवमः खण्डः ॥ ९ ॥ आपो वा अन्नाद्भूयस्तस्माद्यदा सुवृष्टिर्न भवति व्याधीयन्ते प्राणा अन्नं कनीयो भविष्यतीत्यथ यदा सुवृष्टिर्भवत्यानन्दिनः प्राणा भव-न्त्यन्नं बहु भविष्यतीत्याप एवेमा मूर्त्ता येयं पृथिवी यदन्तरिक्षं यद्द्यौर्यत्पर्वता यद्देवम-नुष्या यत्पशवश्च वयाꣳसि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलकमाप एवेमा मूर्त्ता अप उपास्वेति स योऽपो ब्रह्मेत्युपास्त आप्नोति सर्वान्कामाꣳस्तृप्तिमान्भवति यावदपां गतं तत्रास्य यथाकामचारो भवति योऽपो ब्रह्मेत्युपास्तेऽस्ति भगवोऽद्भ्यो भूय

इत्यद्भ्यो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ इति दशमः खण्डः ॥ १० ॥
तेजो वा अद्भ्यो भूयस्तद्वा एतद्वायुमुपगृह्याकाशमभितपति तदाहुर्निशोचति नितपति
वर्षिष्यति वा इति तेज एव तत्पूर्वं दर्शयित्वाथापः सृजते तदेतदूर्ध्वाभिश्च तिरश्चीभिश्च
विद्युद्भिराह्रादाश्चरन्ति तस्मादाहुर्विद्योतते स्तनयति वर्षिष्यति वा इति तेज एव तत्पूर्वं
दर्शयित्वाथापः सृजते तेज उपास्स्वेति स यस्तेजो ब्रह्मेत्युपास्ते तेजस्वी वै स तेजस्वतो
लोकान्भास्वतोऽपहततमस्कानभिसिध्यति यावत्तेजसो गतं तत्रास्य यथाकामचारो भवति
यस्तेजो ब्रह्मेत्युपास्तेऽस्ति भगवस्तेजसो भूय इति तेजसो वाव भूयोऽस्तीति तन्मे भग-
वान्ब्रवीत्विति ॥ इत्येकादशः खण्डः ॥ ११ ॥ आकाशो वाव तेजसो भूयानाकाशे
वै सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राण्यग्निराकाशेनाह्वयत्याकाशेन शृणोत्याकाशेन प्रति-

शृणोत्याकाशे रमत आकाशे न रमत आकाशे जायत आकाशमभिजायत आकाश-
मुपास्वेति स य आकाशं ब्रह्मेत्युपास्त आकाशवतो वै स लोकान्प्रकाशवतोऽसम्बा-
धानुरुगायवतोऽभिसिध्यति यावदाकाशस्य गतं तत्रास्य यथाकामचारो भवति य
आकाशं ब्रह्मेत्युपास्तेऽस्ति भगव आकाशाद्भूय इत्याकाशाद्वाव भूयोऽस्तीति तन्मे
भगवान्ब्रवीत्विति॥ इति द्वादशः खण्डः ॥ १२ ॥ स्मरो वा आकाशाद्भूयस्तस्माद्यद्यपि
बहव आसीरन्न स्मरन्तो नैव ते कश्चन शृणुयुर्न मन्वीरन्न विजानीरन्यदा वाव ते
स्मरेयुरथ शृणुयुरथ मन्वीरन्नथ विजानीरन्त्स्मरेण वै पुत्रान्विजानाति स्मरेण पशून्त्स्म-
रमुपास्वेति स यः स्मरं ब्रह्मेत्युपास्ते यावत्स्मरस्य गतं तत्रास्य यथाकामचारो भवति
यः स्मरं ब्रह्मेत्युपास्तेऽस्ति भगवः स्मराद्भूय इति स्मराद्वाव भूयोऽस्तीति तन्मे भग-

वान्ब्रवीत्विति ॥ इति त्रयोदशः खण्डः ॥ १३ ॥ आशा वाव स्मराद्भूयस्याशेद्धो वै स्मरो मन्त्रानधीते कर्माणि कुरुते पुत्राꣳश्च पशूꣳश्चेच्छत इमं च लोकममुं चेच्छत आशामुपास्वेति स य आशां ब्रह्मेत्युपास्ते आशयास्य सर्वे कामाः समृध्यन्त्यमोघा हास्याशिषो भवन्ति यावदाशाया गतं तत्रास्य यथाकामचारो भवति य आशां ब्रह्मे-त्युपास्तेऽस्ति भगव आशाया भूय इत्याशाया वाव भूयोऽस्तीति तन्मे भगवान्ब्रवी-त्विति ॥ इति चतुर्दशः खण्डः ॥ १४ ॥ प्राणो वा आशाया भूयान्यथा वा अरा नाभौ समर्पिता एवमस्मिन्प्राणे सर्वꣳसमर्पितं प्राणः प्राणेन याति प्राणः प्राणं ददाति प्राणाय ददाति प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्यः प्राणो ब्राह्मणः स यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं वाचार्यं वा ब्राह्मणं वा

किञ्चिद्भृशमिव प्रत्याह धिक्त्वास्त्वित्येवैनमाहुः पितृहा वै त्वमसि मातृहा वै त्वमसि भ्रातृहा वै त्वमसि स्वसृहा वै त्वमस्याचार्यहा वै त्वमसि ब्राह्मणहा वै त्वमसीत्यथ यद्यप्येनानुत्क्रान्तप्राणाञ्छूलेन समासं व्यतिसन्दहेन्नैवैनं ब्रूयुः पितृहासीति न मातृ-हासीति न भ्रातृहासीति न स्वसृहासीति नाचार्यहासीति न ब्राह्मणहासीति प्राणो ह्येवैतानि सर्वाणि भवति स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति तं चेद्ब्रूयुरतिवाद्यसीत्यतिवाद्यस्मीति ब्रूयान्नापह्नुवीत ॥ इति पञ्चदशः खण्डः ॥ १५ ॥

एष तु वा अतिवदति यः सत्येनातिवदति सोऽहं भगवः सत्येनातिवदानीति सत्यं त्वेव विजिज्ञासितव्यमिति सत्यं भगवो विजिज्ञास इति ॥ इति षोडशः खण्डः ॥१६॥

यदा वै विजानात्यथ सत्यं वदति नाविजानन्सत्यं वदति विजानन्नेव सत्यं वदति

विज्ञानं त्वेव विजिज्ञासितव्यमिति विज्ञानं भगवो विजिज्ञास इति ॥ इति सप्तदशः खण्डः ॥ १७ ॥ यदा वै मनुतेऽथ विजानाति नामत्वा विजानाति मत्वैव विजानाति मतिस्त्वेव विजिज्ञासितव्येति मतिं भगवो विजिज्ञास इति ॥ इत्यष्टादशः खण्डः ॥ १८ ॥ यदा वै श्रद्दधात्यथ मनुते नाश्रद्दधन्मनुते श्रद्दधदेव मनुते श्रद्धा त्वेव विजिज्ञासितव्येति श्रद्धां भगवो विजिज्ञास इति ॥ इत्येकोनविंशः खण्डः ॥ १९ ॥ यदा वै निस्तिष्ठत्यथ श्रद्दधाति नानिस्तिष्ठञ्छ्रद्दधाति निस्तिष्ठन्नेव श्रद्दधाति निष्ठा त्वेव विजिज्ञासितव्येति निष्ठां भगवो विजिज्ञास इति ॥ इति विंशः खण्डः ॥ २० ॥ यदा वै करोत्यथ निस्तिष्ठति नाकृत्वा निस्तिष्ठति कृत्वैव निस्तिष्ठति कृतिस्त्वेव विजिज्ञासितव्येति कृतिं भगवो विजिज्ञास इति ॥ इत्येकविंशः खण्डः ॥ २१ ॥ यदा वै सुखं

लभतेऽथ करोति नासुखं लब्ध्वा करोति सुखमेव लब्ध्वा करोति सुखं त्वेव विजिज्ञासितव्यमिति सुखं भगवो विजिज्ञास इति ॥ इति द्वाविंशः खण्डः ॥ २२ ॥ यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्य इति भूमानं भगवो विविज्ञास इति ॥ इति त्रयोविंशः खण्डः ॥ २३ ॥ यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमाथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यꣳस भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि यदि वा न महिम्नीति गोअश्वमिह महिमेत्याचक्षते हस्तिहिरण्यं दासभार्यं क्षेत्राण्यायतनानीति नाहमेवं ब्रवीमि ब्रवीमीति ह होवाचान्यो ह्यन्यस्मिन्प्रतिष्ठित इति ॥ इति चतुर्विंशः खण्डः ॥२४॥ स एवाधस्तात्स उपरिष्टात्स

पश्चात्स पुरस्तात्स दक्षिणतः स उत्तरतः स एवेद ँ सर्वमित्यथातोऽहङ्कारादेश एवाह-
मेवाधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादहं दक्षिणतोऽहमुत्तरतोऽहमेवेद ँ सर्वमित्य-
थात आत्मादेश एवात्मैवाधस्तादात्मोपरिष्टादात्मा पश्चादात्मा पुरस्तादात्मा दक्षिणत
आत्मोत्तरत आत्मैवेद ँ सर्वमिति स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्म-
रतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो
भवत्यथ येऽन्यथातो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति तेषा ँ सर्वेषु लोकेष्वका-
मचारो भवति ॥ इति पञ्चविंशः खण्डः ॥ २५ ॥ तस्य ह वा एतस्यैवं पश्यत एवं
मन्वानस्यैवं विजानत आत्मतः प्राण आत्मत आशात्मतः स्मर आत्मत आकाश
आत्मतस्तेज आत्मत आप आत्मत आविर्भावतिरोभावावात्मतोऽन्नमात्मतो बलमा-

त्मतो विज्ञानमात्मतो ध्यानमात्मतश्चित्तमात्मतः सङ्कल्प आत्मतो मन आत्मतो वागा-
त्मतो नामात्मतो मन्त्रा आत्मतः कर्माण्यात्मत एवेदꣳसर्वमिति तदेष श्लोको न
पश्यो मृत्युं पश्यति न रोगं नोत दुःखताꣳसर्वꣳह पश्यः पश्यति सर्वमाप्नोति सर्वश
इति स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा चैव पुनश्चैकादश स्मृतः
शतं च दश चैकश्च सहस्राणि च विꣳशतिराहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा
स्मृतिः स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षस्तस्मै मृदितकषायाय तमसस्पारं दर्शयति
भगवान्त्सनात्कुमारस्तꣳस्कन्द इत्याचक्षते तꣳस्कन्द इत्याचक्षते ॥ इति षड्विंशः खण्डः
॥ २६ ॥ इति सप्तमः प्रपाठकः ॥ ७ ॥ ॐ ॥ अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं
वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमिति

सा०छा०
॥ ९७ ॥

उ०
प्र० ८

तं चेद्ब्रूयुर्यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमिति स ब्रूयाद्यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन्त्समाहितमिति तं चेद्ब्रूयुरस्मिꣳश्चेदिदं ब्रह्मपुरे सर्वꣳसमाहितꣳसर्वाणि च भूतानि सर्वे च कामा यदैनज्जरा वाप्नोति प्रध्वꣳसते वा किं ततोऽतिशिष्यत इति स ब्रूयान्नास्य जरयैतज्जीर्यति न वधेनास्य हन्यत एतत्सत्यं ब्रह्मपुरमस्मिन्कामाः समाहिता एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पो यथा ह्येवेह प्रजा अन्वाविशन्ति यथानुशासनं यं यमन्तमभिकामा भवन्ति यं जनपदं यं

॥ ९७ ॥

क्षेत्रभागं तं तमेवोपजीवन्ति तद्यथेह कर्मजितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः क्षीयते तद्य इहात्मानमननुविद्य व्रजन्त्येताꣳश्च सत्यान्कामाꣳस्तेषाꣳसर्वेषु लोकेष्वकामचारो भवत्यथ य इहात्मानमनुविद्य व्रजन्त्येताꣳश्च सत्यान्कामाꣳस्तेषाꣳ सर्वेषु लोकेषु कामचारो भवति ॥ इति प्रथमः खण्डः ॥ १ ॥ स यदि पितृलोक-कामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति तेन पितृलोकेन सम्पन्नो महीयतेऽथ यदि मातृलोककामो भवति सङ्कल्पादेवास्य मातरः समुत्तिष्ठन्ति तेन मातृलोकेन सम्पन्नो महीयतेऽथ यदि भ्रातृलोककामो भवति सङ्कल्पादेवास्य भ्रातरः समुत्तिष्ठन्ति तेन भ्रातृलोकेन सम्पन्नो महीयतेऽथ यदि स्वसृलोककामो भवति सङ्कल्पादेवास्य स्वसारः समुत्तिष्ठन्ति तेन स्वसृलोकेन सम्पन्नो महीयतेऽथ यदि सखिलोककामो

भवति सङ्कल्पादेवास्य सखायः समुत्तिष्ठन्ति तेन सखिलोकेन सम्पन्नो महीयतेऽथ
यदि गन्धमाल्यलोककामो भवति सङ्कल्पादेवास्य गन्धमाल्ये समुत्तिष्ठतस्तेन गन्धमा-
ल्यलोकेन सम्पन्नो महीयतेऽथ यद्यन्नपानलोककामो भवति सङ्कल्पादेवास्यान्नपाने
समुत्तिष्ठतस्तेनान्नपानलोकेन सम्पन्नो महीयतेऽथ यदि गीतवादित्रलोककामो भवति
सङ्कल्पादेवास्य गीतवादित्रे समुत्तिष्ठतस्तेन गीतवादित्रलोकेन सम्पन्नो महीयतेऽथ
स्त्रीलोककामो भवति सङ्कल्पादेवास्य स्त्रियः समुत्तिष्ठन्ति तेन स्त्रीलोकेन सम्पन्नो
महीयते यं यमन्तमभिकामो भवति यं कामं कामयते सोऽस्य सङ्कल्पादेव समुत्तिष्ठति
तेन सम्पन्नो महीयते ॥ इति द्वितीयः खण्डः ॥ २ ॥ त इमे सत्याः कामा अनृता-
पिधानास्तेषाꣳसत्यानाꣳसतामनृतमपिधानं यो यो ह्यस्येतः प्रैति न तमिह दर्शनाय

लभतेऽथ ये चास्येह जीवा ये च प्रेता यच्चान्यदिच्छन्न लभते सर्वं तदत्र गत्वा विन्दतेऽत्र ह्यस्यैते सत्याः कामा अनृतापिधानास्तद्यथापि हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्म-लोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः स वा एष आत्मा हृदि तस्यैतदेव निरुक्तꣳ हृद्ययमिति तस्माद्धृदयमहरहर्वा एवंवित्स्वर्गं लोकमेत्यथ य एष सम्प्रसादोऽस्माच्छ-रीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाचैतद-मृतमभयमेतद्ब्रह्मेति तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति तानि ह वा एतानि त्रीण्यक्षराणि सतियमिति तद्यत्सत्तदमृतमथ यत्ति तन्मर्त्यमथ यद्यं तेनोभे यच्छति यदने-नोभे यच्छति तस्माद्यमहरहर्वा एवंवित्स्वर्गं लोकमेति ॥ इति तृतीयः खण्डः॥ ३ ॥ अथ

सा०छा०

॥ ९९ ॥

उ०

प्र० ८

य आत्मा स सेतुर्विधृतिरेषा लोकानामसम्भेदाय नैत ँ सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृत ँ सर्वे पाप्मानोऽतो निवर्त्तन्तेऽपहतपाप्मा ह्येष ब्रह्मलोक-स्तस्माद्वा एत ँ सेतुं तीर्त्वान्धः सन्ननन्धो भवति विद्धः सन्नविद्धो भवत्युपतापी सन्न-नुपतापी भवति तस्माद्वा एत ँ सेतुं तीर्त्वापि नक्तमहरेवाभिनिष्पद्यते सकृद्विभातो ह्येवैष ब्रह्मलोकस्तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकस्ते-षा ँ सर्वेषु लोकेषु कामचारो भवति ॥ इति चतुर्थः खण्डः ॥ ४ ॥ अथ यद्यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येव यो ज्ञाता तं विन्दतेऽथ यदिष्टमित्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येवेष्ट्वात्मानमनुविन्दतेऽथ यत्सत्त्रायणमित्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येव सत आत्मनस्त्राणं विन्दतेऽथ यन्मौनमित्याचक्षते ब्रह्मचर्यमेव तद्ब्र-

॥ ९९ ॥

ह्मचर्येण ह्येवात्मानमनुविद्य मनुतेऽथ यदनाशकायनमित्याचक्षते ब्रह्मचर्यमेव तदेष
ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दतेऽथ यदरण्यायनमित्याचक्षते ब्रह्मचर्यमेव
तदरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि तदैरं मदीय ँ सरस्तदश्वत्थः
सोमसवनस्तदपराजिता पूर्ब्रह्मणः प्रभुविमित ँ हिरण्मयं तद्य एवैतावरं च ण्यं चार्णवौ
ब्रह्मलोके ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकस्तेषा ँ सर्वेषु लोकेषु कामचारो
भवति ॥ इति पञ्चमः खण्डः ॥ ५ ॥ अथ या एता हृदयस्य नाड्यस्ताः पिङ्गलस्या-
णिम्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्येत्यसौ वा आदित्यः पिङ्गल एष
शुक्ल एष नील एष पीत एष लोहितस्तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमं
चामुं चैवमेवैता आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चामुं चामुष्मादादित्यात्प्र-

तायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ता-स्तद्यत्रैतत्सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु सृप्तो भवति तं न कश्चन पाप्मा स्पृशति तेजसा हि तदा सम्पन्नो भवत्यथ यत्रैतदबलिमानं नीतो भवति तमभित असीना आहुर्जानासि मां जानासि मामिति स यावदस्माच्छरीराद-नुत्क्रान्तो भवति तावज्जानात्यथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमा-क्रमते स ओमिति वा होद्वा मीयते स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छत्येतद्वै खलु लोकद्वारं विदुषां प्रपदनं निरोधोऽविदुषां तदेष श्लोकः शतं चैका च हृदयस्य नाड्य-स्तासां मूर्धानमभिनिःसृतैका तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भव-न्त्युत्क्रमणे भवन्ति ॥ इति षष्ठः खण्डः ॥ ६ ॥ य आत्मापहतपाप्मा

विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वा ꣳश्च लोकानाप्नोति सर्वा ꣳश्च कामान्यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच तद्धोभये देवासुरा अनुबुबुधिरे ते होचुर्हन्त तमा-त्मानमन्विच्छामो यमात्मानमन्विष्य सर्वा ꣳश्च लोकानाप्नोति सर्वा ꣳश्च कामानिती-न्द्रो हैव देवानामभिप्रवव्राज विरोचनोऽसुराणां तौ हासंविदानावेव समित्पाणी प्रजा-पतिसकाशमाजग्मतुस्तौ ह द्वात्रि ꣳशतं वर्षाणि ब्रह्मचर्यमूषतुस्तौ ह प्रजापतिरुवाच किमिच्छन्ताववास्तमिति तौ होचतुर्य आत्मापहतपाप्मा विजरो विमृत्युर्विशोकोऽविजि-घत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वा ꣳश्च लोकानाप्नोति सर्वा ꣳश्च कामान्यस्तमात्मानमनुविद्य विजानातीति भगवतो वचो

यामापः पुरुषवाचो भूत्वा समुत्थाय वदन्ती ३ इति नेति हैवोवाच चेत्थो देवयानस्य वा पथः प्रतिपदं पितृयाणस्य वा यत्कृत्वा देवयानं वा पन्थानं प्रतिपद्यन्ते पितृयाणं वापि हि न ऋषेर्वचः श्रुतं द्वे सृती अशृणवं पितॄणामहं देवानामुत मर्त्यानां ताभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरं मातरं चेति नाहमत एकंचन वेदेति होवाच ॥ २ ॥ अथैनं वसत्योपमन्त्रयाञ्चक्रेऽनादृत्य वसतिं कुमारः प्रदुद्राव स आजगाम पितरं तꣳहोवाचेति वाव किल नो भवान्पुरानुशिष्टानवोचदिति कथꣳसुमेध इति पञ्च मा प्रश्नान्राजन्यबन्धुरप्राक्षीत्ततो नैकंचन वेदेति कतमे त इतीम इति ह प्रतीकान्युदाजहार ॥ ३ ॥ स होवाच तथा नस्त्वं तात जानीथाः यथा यदहं किंचन वेद सर्वमहं तत्तुभ्यमवोचं प्रेहि तु तत्र प्रतीत्य ब्रह्मचर्यं वत्स्याव इति भवानेव गच्छ-

त्विति स आजगाम गौतमो यत्र प्रवाहणस्य जैबलेरास तस्मा आसनमाहृत्योदकमाहा-रयाञ्चकाराथ हास्मा अर्घ्यं चकार त१होवाच वरं भवते गौतमाय दद्म इति ॥ ४ ॥ स होवाच प्रतिज्ञातो म एष वरो यां तु कुमारस्यान्ते वाचमभाषथास्तां मे ब्रूहीति ॥ ५ ॥ स होवाच दैवेषु वै गौतमो तद्वरेषु मानुषाणां ब्रूहीति ॥ ६ ॥ स होवाच विज्ञायते हास्ति हिरण्यस्यापात्तं गोअश्वानां दासीनां प्रवाराणां परिधानस्य मा नो भवान्बहोरनन्तस्यापर्यन्तस्याभ्यवदान्योऽभूदिति स वै गौतम तीर्थेनेच्छासा इत्युपै-म्यहं भवन्तमिति वाचा ह स्म वै पूर्व उपयान्ति स होपायनकीर्त्त्या उवास ॥ ७ ॥ स होवाच तथा नस्त्वं गौतम मापराधास्तव च पितामहा यथेयं विद्येतः पूर्वं न क-स्मि१श्च न ब्राह्मण उवास तां त्वहं तुभ्यं वक्ष्यामि को हि त्वैवं ब्रुवन्तमर्हति

प्रत्याख्यातुमिति ॥ ८ ॥ असौ वै लोकोऽग्निर्गौतम तस्यादित्य एव समिद्र-
श्मयो धूमोऽहरर्चिर्दिशोऽङ्गारा अवान्तरदिशो विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः
श्रद्धां जुह्वति तस्या आहुत्यै सोमो राजा सम्भवति ॥ ९ ॥ पर्जन्यो वाग्नि-
र्गौतम तस्य संवत्सर एव समिदभ्राणि धूमो विद्युदर्चिरशनिरङ्गारा ह्रादुनयो
विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः सोम ँ राजानं जुह्वति तस्या आहुत्यै वृष्टिः
सम्भवति ॥ १० ॥ अयं वै लोकोऽग्निर्गौतम तस्य पृथिव्येव समिदग्निर्धूमो रात्रिर-
र्चिश्चन्द्रमाङ्गारा नक्षत्राणि विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा वृष्टिं जुह्वति तस्या
आहुत्या अन्न ँ सम्भवति ॥ ११ ॥ पुरुषो वाग्निर्गौतम तस्य व्यात्तमेव समित्प्राणो
धूमो वागर्चिश्चक्षुरङ्गाराः श्रोत्रं विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति तस्या

आहुत्यै रेतः सम्भवति ॥ १२ ॥ योषा वा अग्निर्गौतम तस्या उपस्थ एव समिल्लो-
मानि धूमो योनिरर्चिर्यदन्तःकरोति तेऽङ्गारा अभिनन्दा विस्फुलिङ्गास्तस्मिन्नेतस्मि-
न्नग्नौ देवा रेतो जुह्वति तस्या आहुत्यै पुरुषः सम्भवति स जीवति यावज्जीवत्यथ
यदा म्रियते ॥ १३ ॥ अथैनमग्नये हरन्ति तस्याग्निरेवाग्निर्भवति समित्समिद्धूमो धू-
मोऽर्चिरर्चिरङ्गारा अङ्गारा विस्फुलिङ्गा विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः पुरुषं
जुह्वति तस्या आहुत्यै पुरुषो भास्वरवर्णः सम्भवति ॥ १४ ॥ ते य एवमेतद्विदुर्ये
चामी अरण्ये श्रद्धाᳪसत्यमुपासते तेऽर्चिरभिसम्भवान्ति अर्चिषोऽहरह्न आपूर्यमाणप-
क्षमापूर्यमाणपक्षाद्यान्षण्मासानुदङ्ङादित्य एति मासेभ्यो देवलोकं देवलोकादादित्य-
मादित्याद्वैद्युतं तान्वैद्युतान्पुरुषो मानस एत्य ब्रह्मलोकान्गमयाति तेषु ब्रह्मलोकेषु

पराः परावतो वसन्ति तेषां न पुनरावृत्तिः ॥ १५ ॥ अथ ये यज्ञेन दानेन तपसा लोकाञ्जयन्ति ते धूममभिसम्भवन्ति धूमाद्रात्रिᳪरात्रेरपक्षीयमाणपक्षमपक्षीयमाणपक्षा-द्यान्षण्मासान्दक्षिणादित्य एति मासेभ्यः पितृलोकं पितृलोकाच्चन्द्रं ते चन्द्रं प्राप्यान्नं भवन्ति ताᳪस्तत्र देवा यथा सोमᳪराजानमाप्यायस्वापक्षीयस्वेत्येवमेनाᳪस्तत्र भक्ष-यन्ति तेषां यदा तत्पर्यवैत्यथेममेवाकाशमभिनिष्पद्यन्त आकाशाद्वायुं वायोर्वृष्टिं वृष्टेः पृथिवीं ते पृथिवीं प्राप्यान्नं भवन्ति ते पुनः पुरुषाग्नौ हूयन्ते ततो योषाग्नौ जायन्ते लोकान्प्रत्युत्थायिनस्त एवमेवानुपरिवर्त्तन्तेऽथ य एतौ पन्थानौ न वि-दुस्ते कीटाः पतङ्गा यदिदं दन्दशूकं ॥ १६ ॥ अष्टमस्य द्वितीयं ब्राह्मणं ॥ २ ॥

स यः कामयेत महत्प्राप्नुयामित्युदगयन आपूर्यमाणपक्षस्य पुण्याहे द्वादशाहमुपस-

द्रती भूत्वा औदुम्बरे कꣳसे चमसे वा सर्वौषधं फलानीति सम्भृत्य परिसमूह्य परि-लिप्याग्निमुपसमाधाय परिस्तीर्यावृताज्यꣳसꣳस्कृत्य पुꣳसा नक्षत्रेण मन्थꣳसन्नीय जुहोति यावन्तो देवास्त्वयि जातवेदस्तिर्यञ्चो घ्नन्ति पुरुषस्य कामान्तेभ्योऽहं भाग-धेयं जुहोमि ते मा तृप्ताः सर्वैः कामैस्तर्पयन्तु स्वाहा या तिरश्ची निपद्यतेऽहं विध-रणी इति तां त्वा घृतस्य धारया यजे सꣳराधनीमहꣳस्वाहा ॥ १ ॥ ज्येष्ठाय स्वाहा श्रेष्ठाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति प्राणाय स्वाहा वसिष्ठायै स्वाहेत्य-ग्नौ हुत्वा मन्थे सꣳस्रवमवनयति वाचे स्वाहा प्रतिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे स-ꣳस्रवमवनयति चक्षुषे स्वाहा सम्पदे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति श्रो-त्राय स्वाहायतनाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति मनसे स्वाहा प्रजात्यै

स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति रेतसे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमव-
नयति ॥ २ ॥ अग्नये स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति सोमाय स्वाहेत्यग्नौ
हुत्वा मन्थे सꣳस्रवमवनयति भूः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भुवः
स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति स्वः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवन-
यति भुर्भूवः स्वः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ब्रह्मणे स्वाहेत्यग्नौ हुत्वा मन्थे
सꣳस्रवमवनयति क्षत्राय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयाति भूताय स्वाहेत्यग्नौ
हुत्वा मन्थे सꣳस्रवमवनयति भविष्यते स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति
विश्वाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति सर्वाय स्वाहेत्यग्नौ हुत्वा मन्थे स-
ꣳस्रवमवनयति प्रजापतये स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ॥ ३ ॥ अथैन-

मभिमृशति भ्रमदसि ज्वलदसि पूर्णमसि प्रस्तब्धमस्येकसभमसि हिङ्कृतमसि हिङ्क्रिय-
माणमस्युद्गीथमसि उद्गीयमानमसि श्रावितमसि प्रत्याश्रावितमस्यार्द्रे सन्दीप्तमसि वि-
भूरसि प्रभूरस्यन्नमसि ज्योतिरसि निधनमसि संवर्गोऽसीति ॥ ४ ॥ अथैनमुद्यच्छत्याम-
ꣳस्याम ꣳहि ते महि स हि राजेशानोऽधिपतिः स मा ꣳराजेशानोऽधिपतिं करोत्विति
॥ ५ ॥ अथैनमाचामति तत्सवितुर्वरेण्यं मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः मा-
र्ध्वीर्नः सन्त्वोषधीर्भूः स्वाहा भर्गो देवस्य धीमहि मधु नक्तमुतोषसो मधुमत्पार्थिव ꣳ
रजः मधु द्यौरस्तु नः पिता भुवः स्वाहा धियो यो नः प्रचोदयान्मधुमान्नो वनस्प-
तिर्मधुमाँ ३ अस्तु सूर्यः माध्वीर्गावो भवन्तु नः स्वः स्वाहेति सर्वां च सावित्रीमन्वाह
सर्वाश्च मधुमतीरहमेवेद ꣳसर्वं भूयासं भूर्भुवः स्वः स्वाहेत्यन्तत आचम्य पाणी प्रक्षाल्य

जघनेनाग्निं प्राक्छिराः संविशति प्रातरादित्यमुपतिष्ठते दिशामेकपुण्डरीकमस्यहं मनुष्याणामेकपुण्डरीकं भूयासमिति यथेतमेत्य जघनेनाग्निमासीनो व॰ँशं जपति ॥ ६ ॥
त॰ँहैतमुद्दालक आरुणिर्वाजसनेयाय याज्ञवल्क्यायान्तेवासिन उक्त्वोवाचापि य एन॰ँ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ७ ॥ एतमु हैव वाजसनेयो याज्ञवल्क्यो मधुकाय पैङ्ग्यायान्तेवासिन उक्त्वोवाचापि य एन॰ँशुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ८ ॥ एतमु हैव मधुकः पैङ्ग्यश्चूलाय भागवित्तयेऽन्तेवासिन उक्त्वोवाचापि य एन॰ँशुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ९ ॥ एतमु हैव चूलो भागवित्तिर्जानकय आयस्थूणायान्तेवासिन उक्त्वोवाचापि य एन॰ँशुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पला-

शानीति ॥ १० ॥ एतमु हैव जानकिरायस्थूणः सत्यकामाय जाबालायान्तेवासिन उक्त्वोवाचापि य एन शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ११ ॥ एतमु हैव सत्यकामो जाबालोऽन्तेवासिभ्य उक्त्वोवाचापि य एन शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति तमेतं नापुत्राय वानन्तेवासिने वा ब्रूयात् ॥ १२ ॥ चतुरौदुम्बरो भवत्यौदुम्बरः स्रुव औदुम्बरश्चमस औदुम्बर इध्म औदुम्बर्या उपमन्थन्यौ दश ग्राम्याणि धान्यानि भवन्ति व्रीहियवास्तिलमाषा अणुप्रियङ्गवो गोधूमाश्च मसूराश्च खल्वाश्च खलकुलाश्च तान्पिष्टान्दधनि मधुनि घृत उपषिञ्चत्याज्यस्य जुहोति ॥ १३ ॥ इत्यष्टमस्य तृतीयं ब्राह्मणं ॥ ३ ॥ एषां वै भूतानां पृथिवी रसः पृथिव्या आपोऽपामोषधय ओषधीनां पुष्पाणि पुष्पाणां फलानि फलानां

पुरुषः पुरुषस्य रेतः ॥ १ ॥ स ह प्रजापतिरीक्षाञ्चक्रे हन्तास्मै प्रतिष्ठां कल्पयानीति स स्त्रियꣳससृजे ताꣳसृष्ट्वाध उपास्त तस्मात्स्त्रियमध उपासीत स एतं प्राञ्चं ग्रावाण-मात्मन एव समुदपारयत्तेनैनामभ्यसृजत् ॥ २ ॥ तस्या वेदिरुपस्थो लोमानि बर्हिश्च-र्माधिषवणे समिधो मध्यतस्तौ मुष्कौ स यावान्ह वै वाजपेयेन यजमानस्य लोको भवति तावानस्य लोको भवति य एवं विद्वानधोपहासं चरत्यासाꣳस्त्रीणाꣳसुकृतं वृङ्क्तेऽथ य इदमविद्वानधोपहासं चरत्यस्य स्त्रियः सुकृतं वृञ्जते ॥ ३ ॥ एतद्ध स्म वै तद्विद्वानुद्दालक आरुणिराहैतद्ध स्म वै तद्विद्वान्नाको मौद्गल्य आहैतद्ध स्म वै तद्विद्वा-न्कुमारहारित आह बहवो मर्या ब्राह्मणायना निरिन्द्रिया विसुकृतोऽस्माल्लोकात्प्रयन्ति य इदमविद्वाꣳसोऽधोपहासं चरन्तीति बहु वा इदꣳसुप्तस्य वा जाग्रतो वा रेतः

स्कन्दाति ॥ ४ ॥ तदभिमृषेदनु वा मन्त्रयेत यन्मेऽद्य रेतः पृथिवीमस्कान्त्सीद्यदोषधी-रप्यसरद्यदप इदमहं तद्रेत आददे पुनर्मामैत्विन्द्रियं पुनस्तेजः पुनर्भगः पुनरग्नि-र्धिष्ण्या यथास्थानं कल्पन्तामित्यनामिकाङ्गुष्ठाभ्यामादायान्तरेण स्तनौ वा भ्रुवौ वा निमृज्यात् ॥ ५ ॥ अथ यद्युदक आत्मानं परिपश्येत्तदभिमन्त्रयेत मयि तेज इन्द्रियं यशो द्रविणꣳसुकृतमिति श्रीर्ह वा एषा स्त्रीणां यन्मलोद्वासास्तन्मलोद्वाससं यशस्वि-नीमभिक्रम्योपमन्त्रयेत ॥ ६ ॥ सा चेदस्मै न दद्यात्काममेनामवक्रीणीयात्सा चेदस्मै नैव दद्यात्काममेनां यष्ट्या वा पाणिना वोपहत्यातिक्रामेदिन्द्रियेण ते यशसा यश आदद इत्ययशा एव भवति ॥ ७ ॥ सा चेदस्मै दद्यादिन्द्रियेण ते यशसा यश आ-दधामीति यशस्विनावेव भवतः ॥ ८ ॥ स यामिच्छेत्कामयेत मेति तस्यामर्थं निष्ठाय

मुखेन मुखꣳसन्धायोपस्थमस्या अभिमृश्य जपेदङ्गादङ्गात्सम्भवसि हृदयादधिजायसे स त्वमङ्ग कषायोऽसि दिग्धविद्धामिव मादयेमाममूं मयीति ॥ ९ ॥ अथ यामिच्छेन्न गर्भं दधीतेति तस्यामर्थं निष्ठाय मुखेन मुखꣳसन्धायाभिप्राण्यापान्यादिन्द्रियेण ते रेतसा रेत आदद इत्यरेता एव भवति ॥ १० ॥ अथ यामिच्छेद्दधीतेति तस्यामर्थं निष्ठाय मुखेन मुखꣳसन्धायापान्याभिप्राण्यादिन्द्रियेण ते रेतसा रेत आदधामीति गर्भिण्येव भवति ॥ ११ ॥ अथ यस्य जायायै जारः स्यात्तं चेद्द्विष्यादामपात्रेऽग्निमुपसमाधाय प्रतिलोमꣳशरबर्हिस्तीर्त्वा तस्मिन्नेताः शरभृष्टीः प्रतिलोमाः सर्पिषाक्ता जुहुयान्मम समिद्धेऽहौषीः प्राणापानौ त आददेऽसाविति मम समिद्धेऽहौषीः पुत्रपशूꣳस्त आददेऽसाविति मम समिद्धेऽहौषीरिष्टासुकृते त आददेऽसाविति मम समिद्धेऽहौषीराशा-

पराकाशौ त आददेऽसाविति स वा एष निरिन्द्रियो विसुकृदस्माल्लोकात्प्रैति यमेवं विद्वान्ब्राह्मणः शपति तस्मादेवंविच्छ्रोत्रियस्य द्वारेण नोपहासमिच्छेदुत ह्येवंवित्परो भवति ॥ १२ ॥ अथ यस्य जायामार्त्तवं विन्देत्त्र्यहं कꣳसेन पिबेदहतवासा नैनां वृषलो न वृषल्युपहन्यात्त्रिरात्रान्त आप्लुत्य व्रीहीनवघातयेत् ॥ १३ ॥ स य इच्छेत्पुत्रो मे शुक्लो जायेत वेदमनुब्रुवीत सर्वमायुरियादिति क्षीरौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥ १४ ॥ अथ य इच्छेत्पुत्रो मे कपिलः पिङ्गलो जायेत द्वौ वेदावनुब्रुवीत सर्वमायुरियादिति दध्यौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥ १५ ॥ अथ य इच्छेत्पुत्रो मे श्यामो लोहिताक्षो जायेत त्रीन्वेदाननुब्रुवीत सर्वमायुरियादित्युदौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥ १६ ॥

अथ य इच्छेद्दुहिता मे पण्डिता जायेत सर्वमायुरियादिति तिलौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥ १७ ॥ अथ य इच्छेत्पुत्रो मे पण्डितो विजिगीतः समितिङ्गमः शुश्रूषितां वाचं भाषिता जायेत सर्वान्वेदाननुब्रुवीत सर्वमायुरियादिति माꣳसौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवा औक्ष्णेन वा ऋषभेण वा ॥ १८ ॥ अथाभिप्रातरेव स्थालीपाकावृताज्यं चेष्टित्वा स्थालीपाकस्योपघातं जुहोत्यग्नये स्वाहानुमतये स्वाहा देवाय सवित्रे सत्यप्रसवाय स्वाहेति हुत्वोद्धृत्य प्राश्नाति प्राश्येतरस्याः प्रयच्छति प्रक्षाल्य पाणी उदपात्रं पूरयित्वा तेनैनां त्रिरभ्युक्षत्युत्तिष्ठातो विश्वावसोऽन्यामिच्छ प्रपूर्व्यां सञ्जायां पत्या सहेति ॥ १९ ॥ अथैनामभिपद्यतेऽमोऽहमस्मि सा त्वꣳसा त्वमस्यमोऽहं सामाहमस्मि ऋक्त्वं द्यौरहं पृथिवी त्वं तावेहि सꣳरभा-

वहै सह रेतो दधावहै पु ँसे पुत्राय वित्तय इति ॥ २० ॥ अथास्य ऊरू विहापयति विजिहीथां द्यावापृथिवी इति तस्यामर्थं निष्ठाय मुखेन मुख ँसन्धाय त्रिरेनामनुलोमामनुमार्ष्टि विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पि ँशतु आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते गर्भं धेहि सिनीवालि गर्भं धेहि पृथुष्टुके गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ ॥ २१ ॥ हिरण्मयी अरणी याभ्यां निर्मन्थतामश्विनौ तते गर्भं हवामहे दशमे मासि सूतवे यथाग्निगर्भा पृथिवी यथा द्यौरिन्द्रेण गर्भिणी वायुर्दिशां यथा गर्भ एवं गर्भं दधामि तेऽसाविति ॥ २२ ॥ सोष्यन्तीमद्भिरभ्युक्षति यथा वायुः पुष्करिणी ँसमिङ्गयति सर्वत एवा ते गर्भ एजतु सहावैतो जरायुणा इन्द्रस्यायं व्रजः कृतः सार्गलः सपरिश्रयः तमिन्द्र निर्जहि गर्भेण सावरा ँसहेति ॥ २३ ॥ जातेऽग्नि-

मुपसमाधायाङ्क आधाय कꣳसे पृषदाज्यꣳसन्नीय पृषदाज्यस्योपघातं जुहोत्यस्मिन्त्सहस्रं पुष्यासमेधमानः स्वे गृहे अस्योपसद्यां मा छैत्सीत्प्रजया च पशुभिश्च स्वाहा मयि प्राणाꣳस्त्वयि मनसा जुहोमि स्वाहा यत्कर्मणात्यरीरिचं यद्वा न्यूनमिहाकर अग्निष्ट-त्स्विष्टकृद्विद्वान्त्स्विष्टꣳसुहुतं करोतु नः स्वाहेति ॥ २४ ॥ अथास्य दक्षिणं कर्णमभि-निधाय वाग्वागिति त्रिरथ दधिमधुघृतꣳसन्नीयानन्तर्हितेन जातरूपेण प्राशयति भूस्ते दधामि भुवस्ते दधामि स्वस्ते दधामि भूर्भुवः स्वः सर्वं त्वयि दधामीति ॥ २५ ॥ अथास्य नाम करोति वेदोऽसीति तदस्य तद्गुह्यमेव नाम भवति ॥ २६ ॥ अथैनं मात्रे प्रदाय स्तनं प्रयच्छति यस्ते स्तनः शशयो यो मयोऽभूर्यो रत्नधा वसुविद्यः सुदत्रो येन विश्वा पुष्यासि वार्याणि सरस्वति तमिह धातवे करिति ॥ २७ ॥ अथास्य

मातरमभिमन्त्रयते इलासि मैत्रावरुणी वीरे वीरमजीजनत्सा त्वं वीरवती भव यास्मान्वीरवतोऽकरादिति तं वा एतमाहुरतिपिता बताभूरतिपितामहो बताभूः परमां बत काष्ठां प्रापच्छ्रिया यशसा ब्रह्मवर्चसेन य एवंविदो ब्राह्मणस्य पुत्रो जायत इति ॥ २८ ॥ इत्यष्टमस्य चतुर्थं ब्राह्मणं ॥ ४ ॥ अथ वꣳशः पौतिमाषीपुत्रः कात्यायनीपुत्रात्कात्यायनीपुत्रो गौतमीपुत्राद्गौतमीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्र औपस्वस्तीपुत्रादौपस्वस्तीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रः कात्यायनीपुत्रात्कात्यायनीपुत्रः कौशिकीपुत्रात्कौशिकीपुत्र आलम्बीपुत्राच्च वैयाघ्रपदीपुत्राच्च वैयाघ्रपदीपुत्रः काण्वीपुत्राच्च कापीपुत्राच्च कापीपुत्रः ॥ १ ॥ आत्रेयीपुत्रादात्रेयीपुत्रो गौतमीपुत्राद्गौतमीपुत्रो भारद्वाजीपुत्राद्भारद्वाजीपुत्रः पाराशरीपुत्रात्पाराशरीपुत्रो वात्सीपुत्राद्वात्सीपुत्रः

पाराशरीपुत्रात्पाराशरीपुत्रो वार्कारुणीपुत्राद्वार्कारुणीपुत्रो वार्कारुणीपुत्राद्वार्कारुणीपुत्र आर्त्तभागीपुत्रादार्त्तभागीपुत्रः शौङ्गीपुत्राच्छौङ्गीपुत्रःसाङ्कृतीपुत्रात्साङ्कृतीपुत्र आलम्बायनीपुत्रादालम्बायनीपुत्र आलम्बीपुत्रादालम्बीपुत्रो जायन्तीपुत्राज्जायन्तीपुत्रो माण्डूकायनीपुत्रान्माण्डूकायनीपुत्रो माण्डूकीपुत्रान्माण्डूकीपुत्रः शाण्डिलीपुत्राच्छाण्डिलीपुत्रो राथीतरीपुत्राद्राथीतरीपुत्रो भालुकीपुत्राद्भालुकीपुत्रः क्रौञ्चिकीपुत्राभ्यां क्रौञ्चिकीपुत्रौ वैदभृतीपुत्राद्वैदभृतीपुत्रः कार्शकेयीपुत्रात्कार्शकेयीपुत्रः प्राचीनयोगीपुत्रात्प्राचीनयोगीपुत्रः साञ्जीवीपुत्रात्साञ्जीवीपुत्रः प्राश्नीपुत्रादासुरिवासिनः प्राश्नीपुत्र आसुरायणादासुरायण आसुरेरासुरिः ॥ २ ॥ याज्ञवल्क्याद्याज्ञवल्क्य उद्दालकादुद्दालकोऽरुणादरुण उपवेशेरुपवेशिः कुश्रेः कुश्रिर्वाजश्रवसो वाजश्रवा जिह्वावतो वाध्योगाज्जिह्वावान्वा-

ध्योगोऽसिताद्वार्षगणादसितो वार्षगणो हरितात्कश्यपाद्धरितः कश्यपः शिल्पात्कश्यपाच्छिल्पः कश्यपः कश्यपान्नैध्रुवेः कश्यपो नैध्रुविर्वाचो वागम्भिण्या अम्भिण्यादित्यादादित्यानीमानि शुक्लानि यजूꣳषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते ॥ ३ ॥ समानमासाञ्जीवीपुत्रात्साञ्जीवीपुत्रो माण्डूकायनेर्माण्डूकायनिर्माण्डव्यान्माण्डव्यः कौत्सात्कौत्सो माहित्थेर्माहित्थिर्वामकक्षायणाद्वामकक्षायणः शाण्डिल्याच्छाण्डिल्यो वात्स्याद्वात्स्यः कुश्रेः कुश्रिर्यज्ञवचसो राजस्तम्बायनाद्यज्ञवचा राजस्तम्बायनस्तुरात्कावषेयात्तुरः कावषेयः प्रजापतेः प्रजापतिर्ब्रह्मणो ब्रह्म स्वयम्भु ब्रह्मणे नमः ॥ ४ ॥ इति द्वितीयानुवाकः ॥ इत्यष्टमस्य पञ्चमं ब्राह्मणं ॥ ५ ॥ इति धाजसनेयके बृहदारण्यकेऽष्टमोऽध्यायः॥ ८ ॥ उपनिषत्सु षष्ठोऽध्यायः समाप्तः ॥ इति बृहदारण्यकोपनिषत् ॥ १० ॥

कृष्णयजुर्वेदीयश्वेताश्वतरोपनिषत् ॥ ॐ सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै ॥ तेजस्विनावधीतमस्तु मा विद्विषावहै ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ ॐ ॥ ब्रह्मवादिनो वदन्ति । किं कारणं ब्रह्म कुतः स्म जाता जीवाम केन क्व च सम्प्रतिष्ठाः । अधिष्ठिताः कैन सुखेतरेषु वर्तामहे ब्रह्मविदो व्यवस्थां ॥ १ ॥ कालस्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यं । संयोग एषां न त्वात्मभावादात्माप्यनीशः सुखदुःखहेतोः ॥ २ ॥ ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढां । यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः ॥ ३ ॥ तमेकनेमिं त्रिवृत्तं षोडशान्तं शतार्धारं विंशति प्रत्यराभिः । अष्टकैः षड्भिर्विश्वरूपैकपाशं त्रिमार्गभेदं द्विनिमित्तैकमोहं ॥ ४ ॥ पञ्चस्रोतोम्बुं पञ्चयोन्युग्रवक्रां पञ्चप्राणोर्मिं पञ्चबुध्यादिमूलां ।

पञ्चावर्त्तां पञ्चदुःखौघवेगां पञ्चाशद्भेदां पञ्चपर्वामधीमः ॥ ५ ॥ सर्वाजीवे सर्वसंस्थे बृहन्ते तस्मिन्हंसो भ्राम्यते ब्रह्मचक्रे । पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति ॥६॥ उद्गीतमेतत्परमं तु ब्रह्म तस्मिंस्त्रयं सुप्रतिष्ठाऽक्षरं च । अत्रान्तरं ब्रह्मविदो विदित्वा लीना ब्रह्मणि तत्परा योनिमुक्ताः ॥ ७ ॥ संयुक्तमेतत्क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः। अनीशश्चात्मा बुध्यते भोक्तृभावाज्ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥ ८ ॥ ज्ञाज्ञौ द्वावजावीशानीशावजा ह्येका भोक्तृभोगार्थयुक्ता । अनन्तश्चात्मा विश्वरूपो ह्यकर्ता त्रयं यदा विन्दते ब्रह्ममेतत् ॥ ९ ॥ क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः । तस्याभिधानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः ॥१०॥ ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः । तस्याभिज्ञानात्तृतीयं देहभेदे वि-

श्चैश्वर्यं केवल आप्तकामः ॥ ११ ॥ एतज्ज्ञेयं नित्यमेवात्मसंस्थं नातःपरं वेदितव्यं हि किञ्चित् । भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत् ॥ १२ ॥ वह्नेर्यथा योनिगतस्य मूर्तिर्न दृश्यते नैव च लिङ्गनाशः । स भूय एवेन्धनयोनिगृह्यस्तद्वोभयं वै प्रणवेन देहे ॥ १३ ॥ स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिं । ध्याननिर्मथनाभ्यासाद्देवं पश्येन्निगूढवत् ॥ १४ ॥ तिलेषु तैलं दधनीव सर्पिरापः स्रोतःस्वरणीषु चाग्निः । एवमात्मात्मनि गृह्यतेऽसौ सत्येनैनं तपसा योऽनुपश्यति ॥ १५ ॥ सर्वव्यापिनमात्मानं क्षीरे सर्पिरिवार्पितं । आत्मविद्यातपोमूलं तद्ब्रह्मोपानिषत्परं तद्ब्रह्मोपनिषत्परामिति ॥ १६ ॥ इति श्वेताश्वतरोपनिषत्सु प्रथमोऽध्यायः ॥ १ ॥ ॐ ॥ युञ्जानः प्रथमं मनस्तत्त्वाय सविता धियः । अग्नेर्ज्योतिर्निचाय्य पृथिव्या अध्याभरत् ॥ १ ॥ युक्तेन मनसा वयं देवस्य

सवितुः सवे। सुवर्गेयाय शक्त्या ॥ २ ॥ युक्त्वाय मनसा देवान्त्सुवर्यतो धिया दिवं। बृहज्ज्योतिः करिष्यतः सविता प्रसुवाति तान् ॥ ३ ॥ युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः। वि होत्रा दधे वयुना विदेक इन्मही देवस्य सवितुः परिष्टुतिः ॥ ४ ॥ युजे वां ब्रह्म पूर्व्यं नमोभिर्विश्लोका यन्ति पथ्येव सूराः। शृण्वन्ति विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः ॥ ५ ॥ अग्निर्यत्राभिमथ्यते वायुर्यत्राऽभियुज्यते। सोमो यत्रातिरिच्यते तत्र सञ्जायते मनः ॥६॥ सवित्रा प्रसवेन जुषेत ब्रह्म पूर्व्यं॥ तत्र योनिं कृण्वसे न हि ते पूर्वमक्षिपत् ॥ ७ ॥ त्रिरुन्नतं स्थाप्य समं शरीरं हृदीन्द्रियाणि मनसा सन्निरुध्य। ब्रह्मोडुपेन प्रतरेत विद्वान्स्त्रोतांसि सर्वाणि भयावहानि ॥ ८ ॥ प्राणान्प्रपीड्येह स युक्तचेष्टः क्षीणे प्राणे नासिकयोच्छ्वसीत। दुष्टाश्व-

युक्तमिव वाहमेनं विद्वान्मनो धारयेताप्रमत्तः ॥ ९ ॥ समे शुचौ शर्करावह्निवालुका-
विवर्जिते शब्दजलाश्रयादिभिः । मनोऽनुकूले न तु चक्षुपीडने गुहानिवाताश्रयणे प्र-
योजयेत् ॥ १० ॥ नीहारधूमार्कानलानिलानां खद्योतविद्युत्स्फटिकशशिनां ॥ एतानि
रूपाणि पुरःसराणि ब्रह्मण्यभिव्यक्तिकराणि योगे ॥ ११ ॥ पृथ्व्याप्यतेजोऽनिलखे समु-
त्थिते पञ्चात्मके योगगुणे प्रवृत्ते । न तस्य रोगो न जरा न मृत्युः प्राप्तस्य योगाग्नि-
मयं शरीरं ॥ १२ ॥ लघुत्वमारोग्यमलोलुपत्वं वर्णप्रसादं स्वरसौष्टवं च । गंधः शुभो
मूत्रपुरीषमल्पं योगप्रवृत्तिं प्रथमां वदन्ति ॥ १३ ॥ यथैव बिम्बं मृदयोपलिप्तं तेजोमयं
भ्राजते तत्सुधातं । तद्वात्मतत्वं प्रसमीक्ष्य देही एकः कृतार्थो भवते वीतशोकः ॥ १४ ॥
यदात्मतत्त्वेन तु ब्रह्मतत्त्वं दीपोपमेनेह युक्तः प्रपश्येत् । अजं ध्रुवं सर्वतत्त्वैर्विशुद्धं

ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥ १५ ॥ एषो ह देवः प्रदिशोऽनु सर्वाः पूर्वो ह जातः स उ गर्भे अन्तः । स एव विजातः स जनिष्यमाणः प्रत्यङ्जनांस्तिष्ठति सर्वतोमुखः ॥ १६ ॥ यो देवोऽग्नौ योऽप्सु यो विश्वं भुवनमाविवेश । य ओषधीषु यो वनस्पतिषु तस्मै देवाय नमो नमः ॥ १७ ॥ इति श्वेताश्वतरोपनिषत्सु द्वितीयोऽध्यायः ॥ २ ॥

ॐ ॥ य एको जालवानीशत ईशनीभिः सर्वांल्लोकानीशत ईशनीभिः । य एवैक उद्भवे सम्भवे च य एतद्विदुरमृतास्ते भवन्ति ॥ १ ॥ एको हि रुद्रो न द्वितीयाय तस्थुर्य इमाल्लोकानीशत ईशनीभिः ॥ प्रत्यङ्जनांस्तिष्ठति सञ्चुकोचान्तकाले संसृज्य विश्वा भुवनानि गोपाः ॥ २ ॥ विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् । सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन्देव एकः ॥ ३ ॥ यो देवानां

प्रभवश्चोद्भवश्च विश्वाधिपो रुद्रो महर्षिः । हिरण्यगर्भं जनयामास पूर्वं स नो बुध्या शुभया संयुनक्तु ॥ ४ ॥ या ते रुद्र शिवा तनूरघोरापापकाशिनी । तया नस्तनुवा शन्तमया गिरिशन्ताभिचाकशीहि ॥ ५ ॥ यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे । शिवां गिरित्र तां कुरु मा हिꣳसीः पुरुषं जगत् ॥ ६ ॥ ततः परं ब्रह्म परं बृहन्तं यथा निकायं सर्वभूतेषु गूढं । विश्वस्यैकं परिवेष्टितारं ईशं तं ज्ञात्वामृता भवन्ति ॥ ७ ॥ वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् । तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥ ८ ॥ यस्मात्परं नापरमस्ति किंचिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वं ॥ ९ ॥ ततो यदुत्तरतरं तदरूपमनामयं । य एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति ॥१०॥ सर्वा-

ननशिरोग्रीवः सर्वभूतगुहाशयः। सर्वव्यापी स भगवान्तस्मात्सर्वगतः शिवः॥११॥ महान्प्रभुर्वै पुरुषः सत्वस्यैष प्रवर्त्तकः। सुनिर्मलामिमां प्राप्तिमीशानो ज्योतिरव्ययः ॥ १२ ॥ अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः। हृदामनीशो मनसाभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति ॥ १३ ॥ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । स भूमिं विश्वतो वृत्वात्यतिष्ठद्दशाङ्गुलं ॥ १४ ॥ पुरुष एवेदꣳसर्वं यद्भूतं यच्च भव्यं। उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ १५ ॥ सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखं । सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १६ ॥ सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितं। सर्वस्य प्रभुमीशानं सर्वस्य शरणं बृहत् ॥ १७ ॥ नवद्वारे पुरे देही हꣳसो लेलायते वहिः । वशी सर्वस्य लोकस्य स्थावरस्य चरस्य च ॥ १८ ॥ अपाणिपादो जवनो ग्र-

हीता पश्यत्यचक्षुः स शृणोत्यकर्णः । स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तं ॥ १९ ॥ अणोरणीयान्महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः । तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशं ॥ २० ॥ वेदाहमेतमजरं पुराणं सर्वात्मानं सर्वगतं विभुत्वात् । जन्मनिरोधं प्रवदन्ति यस्य ब्रह्मवादिनो हि प्रवदन्ति नित्यं ॥ २१ ॥ इतिश्वेताश्वतरोपनिषत्सु तृतीयोऽध्यायः॥ ३ ॥ ॐ ॥ य एको वर्णो बहुधा शक्तियोगाद्वर्णाननेकान्निहितार्थो दधाति । वि चैति चान्ते विश्वमादौ स देवः स नो बुद्ध्या शुभया संयुनक्तु ॥ १ ॥ तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः । तदेव शुक्रं तद्ब्रह्म तदापस्तत्प्रजापतिः ॥ २ ॥ त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी । त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुखः ॥ ३ ॥ नीलः पतङ्गो

हरितो लोहिताक्षस्तडिद्गर्भ ऋतवः समुद्राः। अनादिमत्त्वं विभुत्वेन वर्त्तसे यतो जातानि भुवनानि विश्वा ॥ ४ ॥ अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥ ५ ॥ द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति ॥ ६ ॥ समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः। जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥ ७ ॥ ऋचोऽक्षरे परमे व्योमन्यस्मिन्देवा अधि विश्वे निषेदुः। यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते ॥ ८ ॥ छन्दांसि यज्ञाः क्रतवो व्रतानि भूतं भव्यं यच्च वेदा वदन्ति। अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः ॥ ९ ॥ मायां तु प्रकृतिं

विद्यान्मायिनं तु महेश्वरं । तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥ १० ॥ यो योनिं योनिमधितिष्ठत्येको यस्मिन्निदं सं च वि चैति सर्वं । तमीशानं वरदं देवमीड्यं निचाय्येमां शान्तिमत्यन्तमेति ॥ ११ ॥ यो देवानां प्रभवश्चोद्भवश्च विश्वाधिपो रुद्रो महर्षिः । हिरण्यगर्भं पश्यत जायमानं स नो बुध्या शुभया संयुनक्तु ॥ १२ ॥ यो देवानामधिपो यस्मिल्लोका अधिश्रिताः । य ईशेऽस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥१३॥ सूक्ष्मातिसूक्ष्मं कलिलस्य मध्ये विश्वस्य स्रष्टारमनेकरूपं । विश्वस्यैकं परिवेष्टितारं ज्ञात्वा शिवं शान्तिमत्यन्तमेति ॥ १४ ॥ स एव काले भुवनस्य गोप्ता विश्वाधिपः सर्वभूतेषु गूढः । यस्मिन्युक्ता ब्रह्मर्षयो देवताश्च तमेवं ज्ञात्वा मृत्युपाशांश्छिनत्ति ॥ १५ ॥ घृतात्परं मण्डमिवातिसूक्ष्मं ज्ञात्वा शिवं सर्वभूतेषु गूढं । विश्वस्यैकं

परिवेष्टितारं ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥ १६ ॥ एष वेदो विश्वकर्मा महात्मा सदा
जनानां हृदये सन्निविष्टः । हृदा मनीषा मनसाभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति
॥ १७ ॥ यदातमस्तन्न दिवा न रात्रिन सन्न चासच्छिव एव केवलः । तदक्षरं तत्स-
वितुर्वरेण्यं प्रज्ञा च तस्मात्प्रसृता पुराणी ॥ १८ ॥ नैनमूर्ध्वं न तिर्यञ्चं न मध्ये प-
रिजग्रभत् । न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः ॥ १९ ॥ न सन्दृशे तिष्ठति
रूपमस्य न चक्षुषा पश्यति कश्चनैनं । हृदा हृदिस्थं मनसा य एनमेवं विदुरमृतास्ते
भवन्ति ॥ २० ॥ अजात इत्येवं कश्चिद्भीरुः प्रतिपद्यते । रुद्र यत्ते दक्षिणं मुखं तेन
मां पाहि नित्यं ॥ २१ ॥ मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अ-
श्वेषु रीरिषः । वीरान्मा नो रुद्र भामितोऽवधीर्हविष्मन्तः सदमि त्वा हवामहे

॥ २२ ॥ इति श्वेताश्वतरोपनिषत्सु चतुर्थोऽध्यायः ॥ ४ ॥ ॐ ॥ द्वे अक्षरे ब्रह्मपरे त्वनन्ते विद्याविद्ये निहिते यत्र गूढे । क्षरं त्वविद्या ह्यमृतं तु विद्या विद्याविद्ये ईशते यस्तु सोऽन्यः ॥ १ ॥ यो योनिं योनिमधितिष्ठत्येको विश्वानि रूपाणि योनीश्च सर्वाः । ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्त्ति जायमानं च पश्येत् ॥ २ ॥ एकैकं जालं बहुधा विकुर्वन्नस्मिन्क्षेत्रे संहरत्येष देवः । भूयः सृष्ट्वा यतयस्तथेशः सर्वाधिपत्यं कुरुते महात्मा ॥ ३ ॥ सर्वा दिश ऊर्ध्वमधश्च तिर्यक्प्रकाशयन्भ्राजते यद्व- नड्वान् । एवं स देवो भगवान्वरेण्यो योनिस्वभावानधितिष्ठत्येकः ॥ ४ ॥ यच्च स्वभावं पचति विश्वयोनिः पाच्यांश्च सर्वान्परिणामयेद्यः । सर्वमेतद्विश्वमधितिष्ठत्येको गुणांश्च सर्वान्विनियोजयेद्यः ॥ ५ ॥ तद्वेद गुह्योपनिषत्सु गूढं तद्ब्रह्मा वेदते ब्रह्मयोनिं । ये पू-

र्वे देवा ऋषयश्च तद्विदुस्ते तन्मया अमृता वै बभूवुः ॥ ६ ॥ गुणान्वयो यः फलकर्म-कर्त्ता कृतस्य तस्यैव स चोपभोक्ता । स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा प्राणाधिपः सञ्चरति स्वकर्मभिः ॥ ७ ॥ अङ्गुष्ठमात्रो रवितुल्यरूपः सङ्कल्पाहङ्कारसमन्वितो यः । बुद्धेर्गुणे-नात्मगुणेन चैव आराग्रमात्रोऽप्यपरोऽपि दृष्टः ॥ ८ ॥ वालाग्रशतभागस्य शतधा क-ल्पितस्य च । भागो जीवः स विज्ञेयः स चानन्त्याय कल्प्यते ॥ ९ ॥ नैव स्त्री न पु-मानेष न चैवायं नपुंसकः । यद्यच्छरीरमादत्ते तेन तेन स युज्यते ॥ १० ॥ सङ्कल्पन-स्पर्शनदृष्टिमोहैर्ग्रासाम्बुवृष्ट्यात्मविवृद्धजन्म । कर्मानुगान्यनुक्रमेण देही स्थानेषु रूपा-ण्यभिसम्प्रपद्यते ॥ ११ ॥ स्थूलानि सूक्ष्माणि बहूनि चैव रूपाणि देही स्वगुणैर्वृणोति । क्रियागुणैरात्मगुणैश्च तेषां संयोगहेतुरपरोऽपिदृष्टः ॥ १२ ॥ अनाद्यनन्तं कलिलस्य मध्ये

विश्वस्य स्रष्टारमनेकरूपं। विश्वस्यैकं परिवेष्टितारं ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥ १३ ॥
भावग्राह्यमनीडाख्यं भावाभावकरं शिवं। कलासर्गकरं देवं ये विदुस्ते जहुस्तनुं ॥ १४ ॥
इति श्वेताश्वतरोपनिषत्सु पञ्चमोऽध्यायः ॥ ५ ॥ ॐ॥ स्वभावमेके कवयो वदन्ति कालं
तथान्ये परिमुह्यमानाः। देवस्यैष महिमा तु लोके येनेदं भ्राम्यते ब्रह्मचक्रं ॥ १ ॥ येना-
वृतं नित्यमिदं हि सर्वं ज्ञः कालकालो गुणी सर्वविद्यः। तेनेशितं कर्म विवर्त्तते ह पृथ्व्या-
प्यतेजोऽनिलखानि चिन्त्यं ॥ २ ॥ तत्कर्म कृत्वा विनिवर्त्त्य भूयस्तत्त्वस्य तत्त्वेन समे-
त्य योगं। एकेन द्वाभ्यां त्रिभिरष्टभिर्वा कालेन चैवात्मगुणैश्च सूक्ष्मैः ॥ ३ ॥ आरभ्य क-
र्माणि गुणान्वितानि भावांश्च सर्वान्विनियोजयेद्यः। तेषामभावे कृतकर्मनाशः कर्मक्षये
याति स तत्त्वतोऽन्यः॥ ४॥ आदिः स संयोगनिमित्तहेतुः परस्त्रिकालादकलोऽपि दृष्टः।

तं विश्वरूपं भवभूतमीड्यं देवं स्वचित्तस्थमुपास्य पूर्वं ॥ ५ ॥ स वृक्षकालाकृतिभिः परोऽन्यो यस्मात्प्रपञ्चः परिवर्ततेऽयं। धर्मावहं पापनुदं भगेशं ज्ञात्वात्मस्थममृतं विश्वधाम ॥ ६ ॥ तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतं । पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यं ॥ ७ ॥ न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते। परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥ ८ ॥ न तस्य कश्चित्पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गं। स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः ॥ ९ ॥ यस्तूर्णनाभ इव तन्तुभिः प्रधानजैः स्वभावतः। देव एकः स्वमावृणोति स नो दधातु ब्रह्माव्ययं ॥ १० ॥ एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता

केवलो निर्गुणश्च ॥ ११ ॥ एको वशी निष्क्रियाणां बहूनामेकं बीजं बहुधायः करोति । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥ १२ ॥ नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् । तत्कारणं साङ्ख्ययोगाधिगम्यं ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥ १३ ॥ न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥ १४ ॥ एको हꣳसो भुवनस्यास्य मध्ये स एवाग्निः सलिले सन्निविष्टः । तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥ १५ ॥ स विश्वकृद्विश्वविदात्मयोनिर्ज्ञः कालकालो गुणी सर्वविद्यः । प्रधानक्षेत्रज्ञपतिर्गुणेशः सꣳसारमोक्षस्थितिबन्धहेतुः ॥ १६ ॥ स तन्मयो ह्यमृत ईशसंस्थो ज्ञः सर्वगो भुवनस्यास्य गोप्ता । य ईशेऽस्य

जगतो नित्यमेव नान्यो हेतुर्विद्यते ईशनाय ॥ १७ ॥ यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । त२ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥ १८ ॥ निष्कलं निष्क्रिय२शान्तं निरवद्यं निरञ्जनम् । अमृतस्य पर२सेतुं दग्धेन्धनमिवानलम् ॥ १९ ॥ यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति ॥ २० ॥ तपःप्रभावाद्देवप्रसादाच्च ब्रह्म ह श्वेताश्वतरोऽथ विद्वान् । अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसङ्घजुष्टम् ॥ २१ ॥ वेदान्ते परमं गुह्यं पुराकल्पे प्रचोदितम् । नाप्रशान्ताय दातव्यं नापुत्रायाशिष्याय वा पुनः ॥ २२ ॥ यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः प्रकाशन्ते महात्मन इति ॥ २३ ॥ इति श्वेताश्वतरोपनिषत्सु षष्ठोऽध्यायः ॥ ६ ॥

ॐ सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै ॥ तेजस्विनावधीतमस्तु मा विद्विषावहै ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ इति श्वेताश्वतरोपनिषत्समाप्ता ॥ १० ॥

अथ ब्रह्मबिन्दूपनिषत् ॥ अमृतबिन्दूपनिषद्वेद्यं यत्परमाक्षरम् । तदेव हि त्रिपाद्रामचन्द्राख्यं नः परा गतिः ॥ ॐ सह नाववत्विति शान्तिः ॥ ॐ मनो हि द्विविधं प्रोक्तं शुद्धं चाशुद्धमेव च । अशुद्धं कामसङ्कल्पं शुद्धं कामविवर्जितम् ॥ १ ॥ मन एव मनुष्याणां कारणं बन्धमोक्षयोः । बन्धाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतम् ॥ २ ॥ यतो निर्विषयस्यास्य मनसो मुक्तिरिष्यते । तस्मान्निर्विषयं नित्यं मनः कार्यं मुमुक्षुणा ॥ ३ ॥ निरस्तविषयासङ्गं सन्निरुद्धं मनो हृदि । यदा यात्युन्मनीभावं तदा तत्परमं पदम् ॥ ४ ॥ तावदेव निरोद्धव्यं यावद्धृदि गतं क्षयम् । एतज्ज्ञानं च मोक्षं च

अतोऽन्यो ग्रन्थविस्तरः ॥ ५ ॥ १ ॥ नैव चिन्त्यं न चाचिन्त्यमचिन्त्यं चिन्त्यमेव च । पक्षपातविनिर्मुक्तं ब्रह्म सम्पद्यते तदा ॥ ६ ॥ स्वरेण सन्धयेद्योगमस्वरं भावयेत्परम् । अस्वरेण हि भावेन भावो नाभाव इष्यते ॥ ७ ॥ तदेव निष्कलं ब्रह्म निर्विकल्पं निरञ्जनम् । तद्ब्रह्माहमिति ज्ञात्वा ब्रह्म सम्पद्यते ध्रुवम् ॥ ८ ॥ निर्विकल्पमनन्तं च हेतुदृष्टान्तवर्जितम् । अप्रमेयमनाद्यं च ज्ञात्वा च परमं शिवम् ॥ ९ ॥ न निरोधो न चोत्पत्तिर्न वन्द्यो न च शासनम् । न मुमुक्षा न मुक्तिश्च इत्येषा परमार्थता ॥ १० ॥ २ ॥ एक एवात्मा मन्तव्यो जाग्रत्स्वप्नसुषुप्तिषु । स्थानत्रयाद्व्यतीतस्य पुनर्जन्म न विद्यते ॥ ११ ॥ एक एव हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥ १२ ॥ घटसम्भृतमाकाशं लीयमाने घटे

यथा । घटो लीयेत नाकाशं तद्वज्जीवो घटोपमः ॥ १३ ॥ घटवद्विविधाकारं भिद्यमा-
नं पुनः पुनः । तद्भग्नं न च जानाति स जानाति च नित्यशः ॥ १४ ॥ शब्दमा-
यावृतो यावत्तावत्तिष्ठति पुष्करे । भिन्ने तमसि चैकत्वमेकमेवानुपश्यति ॥ १५ ॥ ३ ॥
शब्दाक्षरं परं ब्रह्म यस्मिन्क्षीणे यदक्षरम् । तद्विद्वानक्षरं ध्यायेद्यदीच्छेच्छान्तिमात्मनः
॥ १६ ॥ द्वे विद्ये वेदितव्ये तु शब्दब्रह्मपरं च यत् । शब्दब्रह्मणि निष्णातः परं
ब्रह्माधिगच्छति ॥ १७ ॥ ग्रन्थमभ्यस्य मेधावी ज्ञानविज्ञानतत्त्वतः । पलालमिव
धान्यार्थी त्यजेद्ग्रन्थमशेषतः ॥ १८ ॥ गवामनेकवर्णानां क्षीरस्याप्येकवर्णता । क्षीर-
वत्पश्यते ज्ञानं लिङ्गिनस्तु गवां यथा ॥ १९ ॥ घृतमिव पयसि निगूढं भूते भूते च
वसति विज्ञानम् । सततं मन्थयितव्यं मनसा मन्थानभूतेन ॥ २० ॥ ज्ञाननेत्रं समा-

दाय चरेद्ब्रह्मिमतः परम् । निष्कलं निर्मलं शान्तं तद्ब्रह्माहमिति स्मृतम् ॥ २१ ॥ सर्वं भूताधिवासं च यद्भूतेषु वसत्यधि । सर्वानुग्राहकत्वेन तदस्म्यहं वासुदेव तदस्म्यहं वासुदेव इति ॥ २२ ॥ ४ ॥ सहेति शान्तिः इत्यथर्ववेदे ब्रह्मबिन्दूपनिषत्समाप्ता ॥ ११ ॥

अथ कैवल्योपनिषत् ॥ कैवल्योपनिषद्वेद्यं कैवल्यानन्दतुन्दिलम् । कैवल्यगिरिजारामं स्वमात्रं कलयेऽन्वहम् ॥ ॐ सह नाववत्विति शान्तिः ॥ ॐ अथाश्वलायनो भगवन्तं परमेष्ठिनमुपसमेत्योवाच । अधीहि भगवन् ब्रह्मविद्यां वरिष्ठां सदा सद्भिः सेव्यमानां निगूढाम् । यथा चिरात्सर्व्वपापं व्यपोह्य परात्परं पुरुषं याति विद्वान् ॥ १ ॥ तस्मै स होवाच पितामहश्च श्रद्धाभक्तिध्यानयोगादवैहि । न कर्म्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः ॥ २ ॥ परेण नाकं निहितं गुहायां विभ्राजते यद्य-

तयो विशन्ति । वेदान्तविज्ञानसुनिश्चितार्थाः सन्यासयोगाद्यतयः शुद्धसत्त्वाः ॥ ३ ॥ ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे । विविक्तदेशे च सुखासनस्थः शुचिः समग्रीवशिरःशरीरः ॥ ४ ॥ अन्त्याश्रमस्थः सकलेन्द्रियाणि निरुध्य भक्त्या स्वगुरुं प्रणम्य । हृत्पुण्डरीकं विरजं विशुद्धं विचिन्त्य मध्ये विषदं विशोकम् ॥ ५ ॥ अचिन्त्यमव्यक्तमनन्तरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिम् । तमादिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुतम् ॥ ६ ॥ उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् । ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात् ॥ ७ ॥ स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट् । स एव विष्णुः स प्राणः स कालोऽग्निः स चन्द्रमाः ॥ ८ ॥ स एव सर्वं यद्भूतं यच्च भव्यं सनातनम् ।

ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये ॥ ९ ॥ सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि । सम्पश्यन्ब्रह्म परमं याति नान्येन हेतुना ॥ १० ॥ आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् । ज्ञाननिर्मथनाभ्यासात्पापं दहति पण्डितः ॥ ११ ॥ स एव मायापरिमोहितात्मा शरीरमास्थाय करोति सर्वम् । स्त्रियन्नपानादिविचित्रभोगैः स एव जाग्रत्परितृप्तिमेति ॥ १२ ॥ स्वप्ने स जीवः सुखदुःखभोक्ता स्वमायया कल्पितजीवलोके । सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति ॥ २३ ॥ पुनश्च जन्मान्तरकर्म्मयोगात्स एव जीवः स्वपिति प्रबुद्धः । पुरत्रये क्रीडति यश्च जीवस्ततः सुजातं सकलं विचित्रम् ॥ १४ ॥ आधारमानन्दमखण्डबोधं यस्मिल्लयं याति पुरत्रयं च ॥ एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुर्ज्यो-

तिरापश्च पृथ्वी विश्वस्य धारिणी ॥ १५ ॥ यत्परं ब्रह्म सर्व्वात्मा विश्वस्यायतनं महत्। सूक्ष्मात्सूक्ष्मतरं नित्यं सत्त्वमेव त्वमेव तत् ॥ १६ ॥ जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चं यत्प्रकाशते । तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते ॥ १७ ॥ त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत् । तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदा शिवः ॥ १८ ॥ मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् । मयि सर्व्वं लयं याति तद्ब्रह्मा-द्वयमस्म्यहम् ॥ १९ ॥ प्रथमः खण्डः ॥ १ ॥ अणोरणीयानहमेव तद्वन्महानहं वि-श्वमहं विचित्रम् । पुरातनोऽहं पुरुषोऽहमीशो हिरण्मयोऽहं शिवरूपमस्मि ॥ २० ॥ अपाणिपादोऽहमचिन्त्यशक्तिः पश्याम्यचक्षुः स शृणोम्यकर्णः । अहं विजानामि विविक्तरूपो न चास्ति वेत्ता मम चित्सदाहम् ॥ २१ ॥ वेदैरनेकैरहमेव वेद्यो वेदा-

न्तकृद्वेदविदेव चाहम् । न पुण्यपापे मम नास्ति नाशो न जन्म देहेन्द्रियबुद्धिरस्ति ॥ २२ ॥ न भूमिरापो न च वह्निरस्ति न चानिलो मेऽस्ति न चाम्बरं च । एवं विदित्वा परमात्मरूपं गुहाशयं निष्कलमद्वितीयम् ॥ २३ ॥ समस्तसाक्षिं सदसद्विहीनं प्रयाति शुद्धं परमात्मरूपम् ॥ यः शतरुद्रियमधीते सोऽग्निपूतो भवति स वायुपूतो भवति स आत्मपूतो भवति स सुरापानात्पूतो भवति स ब्रह्महत्यायाः पूतो भवति स सुवर्णस्तेयात्पूतो भवति स कृत्याकृत्यात्पूतो भवति तस्मादविमुक्तमाश्रितो भवत्वित्याश्रमी सर्वदा सकृद्वा जपेत् ॥ अनेन ज्ञानमाप्नोति संसारार्णवनाशनम् । तस्मादेवं विदित्वैनं कैवल्यं पदमश्नुते कैवल्यं पदमश्नुते ॥ २४ ॥ द्वितीयः खण्डः ॥ २ ॥ ॐ सहनाववत्विति शान्तिः ॥ इत्यथर्ववेदे कैवल्योपनिषत्समाप्ता ॥ १२ ॥

**अथ जाबालोपनिषत् ॥** जाबालोपनिषत्ख्यातं संन्यासज्ञानगोचरम् ॥ वस्तुतस्त्रैपदं ब्रह्म स्वमात्रमवशिष्यते ॥ ॐ पूर्णमद इति शान्तिः ॥ ॐ बृहस्पतिरुवाच याज्ञवल्क्यं यदनु कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम् । अविमुक्तं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम् । तस्माद्यत्र क्वचन गच्छति तदेव मन्येत तदविमुक्तमेव इदं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम् ॥ अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृतीभूत्वा मोक्षीभवति तस्मादविमुक्तमेव निषेवेत अविमुक्तं न विमुञ्चेत् एवमेवैतद्याज्ञवल्क्य ॥ १ ॥ अथ हैनमत्रिः पप्रच्छ याज्ञवल्क्यं य एषोऽनन्तोऽव्यक्त आत्मा तं कथमहं विजानीयामिति ॥ स होवाच याज्ञवल्क्यः सोऽविमुक्त उपास्यो य

197

एषोऽनन्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठित इति ॥ सोऽविमुक्तः कस्मिन्प्रतिष्ठित इति ॥ वरणायां नाश्यां च मध्ये प्रतिष्ठित इति ॥ का वै वरणा का च नाशीति ॥ सर्वानिन्दियकृतान्दोषान्वारयतीति तेन वरणा भवतीति ॥ सर्वानिन्द्रियकृतान्पापान्नाशयतीति तेन नाशी भवतीति ॥ कतमं चास्य स्थानं भवतीति ॥ भ्रुवोर्घ्राणस्य च यः सन्धिः स एष द्यौर्लोकस्य परस्य च सन्धिर्भवतीति । एतद्वै सन्धिं सन्ध्यां ब्रह्मविद उपासते इति। सोऽविमुक्त उपास्य इति। सोऽविमुक्तं ज्ञानमाचष्टे। यो वैतदेवं वेदेति ॥ २ ॥ अथ हैनं ब्रह्मचारिण ऊचुः किं जप्येनामृतत्वं ब्रूहीति ॥ स होवाच याज्ञवल्क्यः ॥ शतरुद्रियेणेत्येतान्येव ह वा अमृतस्य नामानि ॥ एतैर्ह वा अमृतो भवतीति ॥ एवमेवैतद्याज्ञवल्क्यः ॥ ३ ॥ अथ हैनं जनको वैदेहो याज्ञवल्क्यमुपसमेत्योवाच

भगवन् सन्यासं ब्रूहीति। स होवाच याज्ञवल्क्यः। ब्रह्मचर्य्यं परिसमाप्य गृही भवेत्। गृही भूत्वा वनी भवेत्। वनी भूत्वा प्रव्रजेत्। यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वनाद्वा॥ अथ पुनरव्रती वा व्रती वा स्नातको वाऽस्नातको वा उत्सन्नाग्निको वा यदहरेव विरजे-त्तदहरेव प्रव्रजेत्। तद्धैके प्राजापत्यामेवेष्टिं कुर्वन्ति। तदुतथा न कुर्यादाग्नेयीमेव कुर्यात्॥ अग्निर्हं वै प्राणः प्राणमेव तथा करोति। त्रैधातवीयामेव कुर्यात्। एतयेव त्रयो धातवो यदुत सत्त्वं रजस्तम इति॥ अयं ते योनिर्ऋत्विजो यतो जातः प्राणादरोचथाः। तं प्रा-णं जानन्नग्न आरोह अथा नो वर्द्धय रयिम् इत्यनेन मन्त्रेणाग्निमाजिघ्रेत्॥ एष ह वा अग्नेर्योनिर्यः प्राणः प्राणं गच्छ स्वाहेत्येवमेवैतदाह॥ ग्रामादग्निमाहृत्य पूर्ववदग्निमाघ्रा-पयेत्॥ यद्यग्निं न विन्देदप्सु जुहुयात्। आपो वै सर्वा देवताः। सर्वाभ्यो देवताभ्यो

जुहोमि स्वाहेति हुत्वोद्धृत्य प्राश्नीयात्साज्यं हविरनामयं मोक्षमन्त्रः त्रय्येवं वदेत्। एतद्ब्रह्मैतदुपासितव्यम्। एवमेवैतद्भगवन्निति वै याज्ञवल्क्यः॥ ४॥ अथ हैनमत्रिः पप्रच्छ याज्ञवल्क्यम् पृच्छामि त्वा याज्ञवल्क्य अयज्ञोपवीती कथं ब्राह्मण इति। स होवाच याज्ञवल्क्यः। इदमेवास्य तद्यज्ञोपवीतं य आत्मापः प्राश्याचम्यायं विधिः परिव्राजकानाम्। वीराध्वाने वा अनाशके वा अपां प्रवेशे वा अग्निप्रवेशे वा महाप्रस्थाने वा। अथ परिव्राड्विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोही भैक्षणो ब्रह्मभूयाय भवतीति। यद्यातुरः स्यान्मनसा वाचा सन्न्यसेत्। एष पन्था ब्रह्मणा हानुवित्तस्तेनैति सन्न्यासी ब्रह्मविदित्येवमेवैष भगवन् याज्ञवल्क्य ॥ ५ ॥ तत्र परमहंसानामसंवर्त्तकारुणिश्वेतकेतुदुर्वासऋभुनिदाघजडभरतदत्तात्रेयरैवतकप्रभृतयोऽव्यक्तलिङ्गा अव्यक्ताचारा

अनुन्मत्ता उन्मत्तवदाचरन्तस्त्रिदण्डं कमण्डलुं शिक्यं पात्रं जलपवित्रं शिखां-यज्ञोपवीतं च इत्येतत्सर्वं भूस्वाहेत्यप्सु परित्यज्यात्मानमन्विच्छेत् ॥ यथा जातरूपधरो निर्ग्रन्थो निष्परिग्रहस्तत्तद्ब्रह्ममार्गे सम्यक्सम्पन्नः शुद्धमानसः प्राणसन्धारणार्थं यथो-क्तकाले विमुक्तो भैक्षमाचरन्नुदरपात्रेण लाभालाभयोः समो भूत्वा शून्यागारदेवगृह-तृणकूटवल्मीकवृक्षमूलकुलालशालाग्निहोत्रगृहनदीपुलिनगिरिकुहरकन्दरकोटरनिर्जर-स्थण्डिलेषु तेष्वनिकेतवास्यप्रयत्नो निर्ममः शुक्लध्यानपरायणोऽध्यात्मनिष्ठोऽशुभकर्म-निर्मूलनपरः सन्न्यासेन देहत्यागं करोति स परमहंसो नाम परमहंसो नामेति ॥ ६ ॥
ॐ पूर्णमद इति शान्तिः ॥ इत्यथर्ववेदे जाबालोपनिषत्समाप्ता ॥

अथ हंसोपनिषत् ॥ ॐ हंसाख्योपनिषत्प्रोक्तनादालिर्यत्र विश्रमेत् । तदाधारं निराधारं ब्रह्ममात्रमहं महः ॥ ॐ पूर्णमद इति शान्तिः ॥ गौतम उवाच । भगवन् सर्वधर्मज्ञ सर्वशास्त्रविशारद । ब्रह्मविद्याप्रबोधो हि केनोपायेन जायते ॥ १ ॥ सनत्कुमार उवाच । विचार्य सर्ववेदेषु मतं ज्ञात्वा पिनाकिनः । पार्वत्या कथितं तत्त्वं शृणु गौतम तन्मम ॥ २ ॥ अनाख्येयमिदं गुह्यं योगिनां कोशसन्निभम् । हंसस्याकृतिविस्तारं भुक्तिमुक्तिफलप्रदम् ॥ ३ ॥ अथ हंसपरमहंसनिर्णयं व्याख्यास्यामः । ब्रह्मचारिणे शान्ताय दान्ताय गुरुभक्ताय हंसहंसेति सदा ध्यायन्सर्वेषु देहेषु व्याप्य वर्त्तते ॥ यथा ह्यग्निः काष्ठेषु तिलेषु तैलमिव तं विदित्वा न मृत्युमेति । गुदमवष्टभ्याधाराद्वायुमुत्थाप्य स्वाधिष्ठानं त्रिः प्रदक्षिणीकृत्य मणिपूरकं च गत्वा अनाहतमतिक्र-

स्य विशुद्धौ प्राणान्निरुध्याज्ञामनुध्यायन्ब्रह्मरन्ध्रं ध्यायन्त्रिमात्रोऽहमित्येवं सर्वदा ध्यायन्। अथो नादमाधाराद् ब्रह्मरन्ध्रपर्यन्तं शुद्धस्फटिकसङ्काशं स वै ब्रह्म परमात्मेत्युच्यते॥ १॥ अथ हंस ऋषिः। अव्यक्ता गायत्री छन्दः। परमहंसो देवता। अहमिति बीजम्। स इति शक्तिः। सोऽहमिति कीलकम्। षट्सङ्ख्यया अहोरात्रयोरेकविंशतिसहस्राणि षट्शतान्यधिकानि भवन्ति। सूर्याय सोमाय निरञ्जनाय निराभासाय तनु सूक्ष्म प्रचोदयादिति अग्नीषोमाभ्यां वौषट् हृदयाद्यङ्गन्यासकरन्यासौ भवतः। एवं कृत्वा हृदये अष्टदले हंसात्मानं ध्यायेत्। अग्नीषोमौ पक्षावोङ्कारः शिरो बिन्दुस्तु नेत्रं मुखं रुद्रो रुद्राणी चरणौ बाहू कालश्चाग्निश्चोभे पार्श्वे भवतः। पश्यत्यनागारश्च शिष्टोभयपार्श्वे भवतः। एषोऽसौ परमहंसो भानुकोटिप्रतीकाशः। येनेदं व्याप्तम्। त-

स्याष्टधा वृत्तिर्भवति। पूर्वदले पुण्ये मतिः आग्नेये निद्रालस्यादयो भवन्ति याम्ये क्रूरे मतिः नैर्ऋते पापे मनीषा वारुण्यां क्रीडा वायव्ये गमनादौ बुद्धिः सौम्ये रतिप्रीतिः ईशाने द्रव्यादानं मध्ये वैराग्यं केशरे जाग्रदवस्था कर्णिकायां स्वप्नं लिङ्गे सुषुप्तिः पद्मत्यागे तुरीयं यदा हंसो नादे लीनो भवति तदा तुर्यातीतमुन्मननमजपोपसंहारमित्याभिधीयते। एवं सर्वं हंसवशात्तस्मान्मनो हंसो विचार्यते। स एव जपकोट्या नादमनुभवति एवं सर्वं हंसवशान्नादो दशविधो जायते। चिणीति प्रथमः। चिञ्चिणीति द्वितीयः। घण्टानादस्तृतीयः। शङ्खनादश्चतुर्थः। पञ्चमस्तन्त्रीनादः। षष्ठस्तालनादः। सप्तमो वेणुनादः। अष्टमो मृदङ्गनादः। नवमो भेरीनादः। दशमो मेघनादः। नवमं परित्यज्य दशममेवाभ्यसेत्। प्रथमे चिञ्चिणी गात्रं द्वितीये गात्रभञ्जनम्।

तृतीये खेदनं याति चतुर्थे कम्पते शिरः ॥ पञ्चमे स्रवते तालु षष्ठेऽमृतनिषेवणम् । सप्तमे गूढविज्ञानं परा वाचा तथाष्टमे ॥ अदृश्यं नवमे देहं दिव्यं चक्षुस्तथामलम् । दशमे परमं ब्रह्म भवेद्ब्रह्मात्मसान्निधौ ॥ तस्मिन् मनो विलीयते मनसि सङ्कल्पविकल्पे दग्धे पुण्यपापे सदाशिवः शक्त्यात्मा सर्वत्रावस्थितः स्वयं ज्योतिः शुद्धो बुद्धो नित्यो निरञ्जनः शान्तः प्रकाशत इति ॥ इति वेदप्रवचनं वेदप्रवचनम् ॥ २ ॥ ॐ पूर्णमद इति शान्तिः ॥ इत्यथर्ववेदे हंसोपनिषत्समाप्ता ॥

**अथारुणिकोपनिषत्** ॥ ॐ आरुणिकाख्योपनिषत्ख्यातसन्न्यासिनोमलाः । यत्प्रबोधाद्यान्ति मुक्तिं तद्रामब्रह्म मे गतिः ॥ ॐ आप्यायन्त्विति शांतिः ॥ ॐ आरुणिः प्राजापत्यः प्रजापतेर्लोकं जगाम । तं गत्वोवाच । केन भगवन्कर्माण्यशेषतो

४०१

विसृजामीति । तं होवाच प्रजापतिस्तत्र पुत्रान्भ्रातॄन्बन्ध्वादींश्छिखां यज्ञोपवीतं यागं स्वाध्यायं भूर्लोकभुवर्लोकस्वर्लोकमहर्लोकजनोलोकतपोलोकसत्यलोकं चातलपाताल-वितलसुतलरसातलमहातलतलातलं ब्रह्माण्डं च विसृजेत् । दण्डमाच्छादनं च कौपीनं च परिग्रहेत् । शेषं विसृजेदिति ॥ १ ॥ गृहस्थो ब्रह्मचारी वा वानप्रस्थो वा उपवीतं भूमावप्सु वा विसृजेत्। लौकिकाग्नीनुदराग्नौ समारोपयेत् । गायत्रीं च स्ववाचाग्नौ समारोपयेत्। कुटीचरो ब्रह्मचारी कुटुम्बं विसृजेत् । पात्रं विसृजेत् । पवित्रं विसृजेत् । दण्डाल्लोँकांश्च विसृजोदिति होवाच । अत ऊर्द्ध्वममन्त्रवदाचरेत् । ऊर्द्ध्वगमनं विसृजेत्। औषधवदशनमाचरेत् । त्रिसन्ध्यादौ स्नानमाचरेत् । सन्धिं समाधावात्मन्याचरेत् । सर्वेषु वेदेष्वारण्यकमावर्त्तयेदुपनिषदमावर्त्तयेदुपनिषदमावर्त्तयेदिति ॥ २ ॥

खल्वहं ब्रह्मसूंचनात्सूत्रं ब्रह्मसूत्रमहमेव विद्वान् त्रिवृत्सूत्रं त्यजेद्विद्वान्य एवं वेद सन्न्यस्तं मया सन्न्यस्तं मया सन्न्यस्तं मयेति त्रिरुक्त्वाभयं सर्वभूतेभ्यो मत्तः सर्वं प्र-वर्तते । सखामागोपायोजः सखायोऽसीन्द्रस्य वज्रोऽसि वार्त्रघ्नः शर्म मे भव यत्पापं तन्निवारयेति । अनेन मंत्रेण कृतं वैणवं दण्डं कौपीनं परिग्रहेदौषधवदशनमा-चरेदौषधवदशनं प्राश्नीयाद्यथा लाभमश्नीयात् । ब्रह्मचर्यमहिंसां चापरिग्रहं च सत्यं च यत्नेन हे रक्षत हे रक्षत हे रक्षत इति ॥ ३ ॥ अथातः परमहंसपरिव्राजकानामास-नशयनादिकं भूमौ ब्रह्मचर्यं मृत्पात्रमलाबुपात्रं दारुपात्रं वा यतीनां कामक्रोधहर्ष-रोषलोभमोहदम्भदर्पेच्छासूयाममत्वाहंकारादीनपि परित्यजेत् । वर्षासु ध्रुवशीलोऽष्टौ मासानेकाकी यतिश्चरेत् । द्वावेव वा विचरेद्द्वावेव वा विचरेदिति ॥ ४ ॥ स खल्वेवं

यो विद्वान्सोपनयनादूर्ध्वमेतानि प्राग्वा त्यजेत् । पितरं पुत्रमग्न्युपवीतं कर्म कलत्रं चान्यदपीह यतयो भिक्षार्थं ग्रामं प्रविशन्ति पाणिपात्रमुदरपात्रं वा । ओं हि ओं हि ओं हीत्येतदुपनिषदं विन्यसेत् ॥ खल्वेतदुपनिषदं विद्वान् य एवं वेद पालाशं बैल्वमाश्वत्थमौन्दुम्बरं दण्डं मौञ्जीं मेखलां यज्ञोपवीतं च त्यक्त्वा शूरो य एवं वेद । तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ॥ दिवीव चक्षुराततम् । तद्विप्रासो विपन्यवो जागृवांसः समिन्धते विष्णोर्यत्परमं पदमिति । एवं निर्वाणानुशासनं वेदानुशासनं वेदानुशासनमिति ॥ ५ ॥ ॐ आप्यायन्त्विति शान्तिः ॥ इत्यथर्ववेदे आरुणिकोपनिषत्समाप्ता ॥

अथ गर्भोपनिषत् । ॐ यद्गर्भोपनिषद्वेद्यं गर्भस्य स्वात्मबोधकम् । शरीरापह्नवात्सिद्धं स्वमात्रं कलये हरिम् ॥ ॐ सह नाववत्विति शांतिः ॥ ॐ पञ्चात्मकं पञ्चसु

वर्त्तमानं षडाश्रयं षड्गुणयोगयुक्तम् । तं सप्तधातुं त्रिमलं द्वियोनिं चतुर्विधाहारमयं शरीरम् ॥ भवति पञ्चात्मकमिति कस्मात् पृथिव्यापस्तेजो वायुराकाशमित्यस्मिन् पञ्चात्मके शरीरे का पृथिवी का आपः किं तेजः को वायुः किमाकाशम् इत्य-स्मिन्पञ्चात्मके शरीरे तत्र यत्कठिनं सा पृथिवी यद्द्रवं ता आपः यदुष्णं तत्तेजः यत्सञ्चरति स वायुः यत्सुषिरं तदाकाशमित्युच्यते । तत्र पृथिवी धारणे आपः पि-ण्डीकरणे तेजः प्रकाशने वायुर्व्यूहने आकाशमवकाशप्रदाने । पृथक् श्रोत्रे शब्दो-पलब्धौ त्वक् स्पर्शे चक्षुषी रूपे जिह्वा रसने नासिका घ्राणे उपस्थ आनन्दने अपानमुत्सर्गे बुद्ध्या बुध्यति मनसा सङ्कल्पयति वाचा वदति । षडाश्रयमिति कस्मात् । मधुराम्ललवणतिक्तकटुकषायरसान् विन्दतीति । षड्जऋषभगा-

न्धारमध्यमपञ्चमधैवतनिषादाश्चेतीष्टानिष्टशब्दसंज्ञाः प्रणिधानाद्दशविधा भवन्ति ॥ १ ॥ शुल्को रक्तः कृष्णो धूम्रः पीतः कपिलः पाण्डर इति । सप्तधातुकमिति कस्मात् यदा देवदत्तस्य द्रव्यादिविषया जायन्ते । परस्परं सौम्यगुणत्वात् षड्विधो रसो रसाच्छोणितं शोणितान्मांसं मांसान्मेदो मेदसः स्नायवः स्नायुभ्योऽस्थीनि अस्थिभ्यो मज्जा मज्जातः शुक्रं शुक्रशोणितसंयोगादावर्त्तते गर्भो हृदि व्यवस्थां नयति हृदयेऽन्तराग्निः अग्निस्थाने पित्तं पित्तस्थाने वायुः वायुतो हृदयं प्राजापत्यात् क्रमात् ॥ २ ॥ ऋतुकाले सम्प्रयोगादेकरात्रोषितं कललं भवति सप्तरात्रोषितं बुद्बुदं भवति अर्द्धमासाभ्यन्तरे पिण्डो भवति । मासाभ्यन्तरे कठिनो भवति मासद्वयेन शिरः संपद्यते । मासत्रयेण पादप्रदेशो भवति । अथ चतुर्थे

मासे गुल्फजठरकटिप्रदेशा भवन्ति । पञ्चमे मासे पृष्ठवंशो भवति । षष्ठे मासे मुखनासिकाक्षिश्रोत्राणि भवन्ति । सप्तमे मासे जीवेन संयुक्तो भवति । अष्टमे मासे सर्वलक्षणसम्पूर्णो भवति । पितू रेतोऽतिरेकात्पुरुषः मातू रेतोऽतिरेकात्स्त्री उभयोर्बीजतुल्यत्वान्नपुंसको भवति । व्याकुलितमनसोऽन्धाः खञ्जाः कुब्जा वामना भवन्ति । अन्योऽन्यवायुपरिपीडितशुक्रद्वैविध्यात्तनु स्यात्ततोयुग्माः प्रजायन्ते । पञ्चात्मकः समर्थः पञ्चात्मिका चेतसा बुद्धिर्गन्धरसादिज्ञानाक्षराक्षरमोङ्कारं चिन्तयतीति तदेतदेकाक्षरं ज्ञात्वाष्टौ प्रकृतयः षोडश विकाराः शरीरे तस्यैव देहिनः । अथ मात्राशितपीतनाडीसूत्रगतेन प्राण आप्यायते । अथ नवमे मासि सर्वलक्षणज्ञानकरणसम्पूर्णो भवति । पूर्वजातिं स्मरति । शुभाशुभं च कर्म

विन्दति ॥ ३ ॥ पूर्वयोनिसहस्राणि दृष्ट्वा चैव ततो मया । आहारा विविधा भुक्ताः पीता नानाविधाः स्तनाः ॥ जातश्चैव मृतश्चैव जन्म चैव पुनः पुनः । यन्मया परिजनस्यार्थे कृतं कर्म शुभाशुभम् ॥ एकाकी तेन दह्येऽहं गतास्ते फलभोगिनः । अहो दुःखोदधौ मग्नो न पश्यामि प्रतिक्रियाम् ॥ यदि योन्याः प्रमुच्येऽहं तत्प्रपद्ये महेश्वरम् । अशुभक्षयकर्त्तारं फलमुक्तिप्रदायकम् ॥ यदि योन्याः प्रमुच्येऽहं तत्प्रपद्ये नारायणम् । अशुभक्षयकर्त्तारं फलमुक्तिप्रदायकम् ॥ यदि योन्याः प्रमुच्येऽहं तत्सांख्यं योगमभ्यसे । अशुभक्षयकर्त्तारं फलमुक्तिप्रदायकम् ॥ यदि योन्याः प्रमुच्याभिध्याये ब्रह्म सनातनम् ॥ अथ योनिद्वारं सम्प्राप्तो यन्त्रेणापीड्यमानो महता दुःखेन जातमात्रस्तु वैष्णवेन वायुना संस्पृष्टस्तदा न स्मरति जन्ममरणानि न च कर्म शु-

भाशुभं विन्दति ॥ ४ ॥ शरीरमिति कस्मात् । अग्नयो ह्यत्र श्रियन्ते ज्ञानाग्निर्दर्शनाग्निः कोष्ठाग्निरिति । तत्र कोष्ठाग्निर्नामाशितपीतलेह्यचोष्यं पचति । दर्शनाग्नी रूपाणां दर्शनं करोति । ज्ञानाग्निः शुभाशुभं च कर्म विन्दति । त्रीणि स्थानानि भवन्ति मुखे आहवनीय उदरे गार्हपत्यो हृदि दक्षिणाग्निः आत्मा यजमानो मना ब्रह्मा लोभादयः पशवो धृतिर्दीक्षा सन्तोषश्च बुद्धीन्द्रियाणि यज्ञपात्राणि हवींषि कर्मेन्द्रियाणि शिरः कपालं केशा दर्भा मुखमन्तर्वेदिः चतुष्कपालं शिरः षोडश पार्श्वदन्तपटलानि सप्तोत्तरं मर्मशतं साशीतिकं सन्धिशतं सनवकं स्नायुशतं सप्त शिराशतानि पञ्च मज्जाशतानि अस्थीनि च ह वै त्रीणि शतानि षष्ठीः सार्द्धचतस्रो रोमाणि कोट्यो हृदयं पलान्यष्टौ द्वादश पला जिह्वा पित्तप्रस्थं कफस्याढकं शुक्रकुडवं

मेदः प्रस्थौ द्वावनियतं मूत्रपुरीषमाहारपरिमाणात् । पैप्पलादं मोक्षशास्त्रं पैप्पलादं मोक्षशास्त्रमिति ॥ ॐ सहनाववत्विति शान्तिः ॥ इति गर्भोपनिषत्समाप्ता ॥

**अथ नारायणोपनिषत् ॥** मायातत्कार्यमखिलं यद्बोधाद्यात्यपह्नवम् ॥ त्रिपान्नारायणाख्यं तत्कलये स्वात्ममात्रतः ॥ ॐ सहनाववत्विति शान्तिः ॥ ॐ अथ पुरुषो ह वै नारायणोऽकामयत ॥ प्रजाः सृजेयेति ॥ नारायणात्प्राणो जायते ॥ मनःसर्वेन्द्रियाणि च ॥ खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥ नारायणाद्ब्रह्मा जायते ॥ नारायणाद्रुद्रो जायते ॥ नारायणादिन्द्रो जायते ॥ नारायणात्प्रजापतिः प्रजायते ॥ नारायणाद्द्वादशादित्या रुद्रा वसवः सर्वाणि छन्दांसि नारायणादेव समुत्पद्यन्ते ॥ नारायणात्प्रवर्तन्ते ॥ नारायणे प्रलीयन्ते ॥ एतदृग्वेदशिरोऽधीते ॥ १ ॥ अथ नित्यो

नारायणः ॥ ब्रह्मा नारायणः ॥ शिवश्च नारायणः ॥ शक्रश्च नारायणः ॥ कालश्च नारायणः ॥ दिशश्च नारायणः ॥ विदिशश्च नारायणः ॥ ऊर्द्ध्वं च नारायणः ॥ अधश्च नारायणः ॥ अन्तर्बहिश्च नारायणः ॥ नारायण एवेदं सर्वं यद्भूतं यच्च भव्यम् ॥ निष्कलङ्को निरञ्जनो निर्विकल्पो निराख्यातः शुद्धो देव एको नारायणो न द्वितीयोऽस्ति कश्चित् ॥ य एवं वेद स विष्णुरेव भवति स विष्णुरेव भवति ॥ एतद्यजुर्वेदशिरोऽधीते ॥ २ ॥ ॐमित्यग्रे व्याहरेत् ॥ नम इति पश्चात् नारायणायेत्युपरिष्टात् ॥ ॐमित्येकाक्षरम् ॥ नम इति द्वे अक्षरे ॥ नारायणायेति पञ्चाक्षराणि ॥ एतद्वै नारायणास्याष्टाक्षरं पदम् । यो ह वै नारायणस्याष्टाक्षरं पदमध्येति ॥ अनपब्रुवः सर्वमायुरेति ॥ विन्दते प्राजापत्यं रायस्पोषं गौपत्यं ततोऽमृतत्वमश्नुते ततोऽमृतत्वमश्नुत

इति ॥ एतत्सामवेदशिरोऽधीते ॥ ३ ॥ प्रत्यगानन्दं ब्रह्मपुरुषं प्रणवस्वरूपम् ॥ अकार उकारो मकार इति ॥ ता अनेकधा समभवत्तदेतदोमिति यमुक्त्वा मुच्यते योगी जन्मसंसारबन्धनात् ॥ ॐ नमो नारायणायेति मंत्रोपासको वैकुण्ठभुवनं गमिष्यति ॥ तदिदं पुण्डरीकं विज्ञानघनम् ॥ तस्मात्तडिदाभमात्रम् ॥ ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदनः ॥ ब्रह्मण्यः पुण्डरीकाक्षो ब्रह्मण्यो विष्णुरुच्यत इति ॥ सर्वभूतस्थमेकं वै नारायणं कारणपुरुषमकारणं परं ब्रह्मो ॥ एतदथर्वशिरोऽधीते ॥ ४ ॥ प्रातरधीयानो रात्रिकृतं पापं नाशयति ॥ सायमधीयानो दिवसकृतं पापं नाशयति ॥ तत्सायं प्रातरधीयानो पापोऽपापो भवति ॥ माध्यंदिनमादित्याभिमुखोऽधीयानः पञ्चमहापातकोपपातकात्प्रमुच्यते ॥ सर्ववेदपारायणपुण्यं लभते ॥ नारायणसायुज्यमवाप्नोति

श्रीमन्नारायणसायुज्यमवाप्नोति य एवं वेद ॥ ॐ सहनाववत्विति शान्तिः ॥
इति नारायणोपनिषत्समाप्ता ॥

**अथ नारायणोपनिषत्** ॥ मायातत्कार्यमखिलं यद्बोधाद्यात्यपह्नवम् । त्रिपान्नारायणाख्यं तत्कलये स्वात्ममात्रतः ॥ १ ॥ ॐ सहनाववत्विति शान्तिः ॥ अम्भस्यपारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयान् ॥ शुक्रेण ज्योती᳘ंषि समानुप्रविष्टः ॥ प्रजापतिश्चरति गर्भे अन्तः ॥ यस्मिन्निद᳘ं संचविचैति सर्वं यस्मिन्देवा अधिविश्वे निषेदुः ॥ तदेव भूतं तदुभव्यमा इदं तदक्षरे परमे व्योमन् ॥ येनावृतं खं च दिवं महीं च येनादित्यस्तपति तेजसा भ्राजसा च ॥ यमन्तःसमुद्रे कवयोऽवयन्ति यदक्षरे

१ इयं नारायणोपनिषदुपरितननारायणोपनिषदो भिन्नैवोपलब्धा अतोऽत्र संगृहीता ।

परमे प्रजाः ॥ यतः प्रसूता जगतः प्रसूती तोयेन जीवान्व्यचसर्ज भूम्याम् ॥ यदोषधीभिः पुरुषान्पशूꣳश्च विवेश भूतानि चराचराणि ॥ अतः परं नान्यदणीयसꣳहि परात्परं यन्महतो महान्तम् ॥ यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात् ॥ १ ॥ तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनाम् ॥ इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भवनस्य नाभिः ॥ तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः ॥ तदेव शुक्रममृतं तद्ब्रह्म तदापः स प्रजापतिः ॥ सर्वेनिमेषा जज्ञिरे विद्युतः पुरुषादधि ॥ कला मुहूर्ताः काष्ठाश्चाहोरात्राश्च सर्वशः ॥ अर्धमासा मासा ऋतवः संवत्सरश्च कल्पन्ताम् ॥ स आपः प्रदुघे उभे इमे अन्तरिक्षमथो सुवः ॥ नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभत् ॥ न तस्येशे कश्चन तस्य नाम महद्यशः ॥ २ ॥ न संदृशे तिष्ठति रूप-

मस्य न चक्षुषा पश्यति कश्चनैनम् ॥ हृदा मनीषामनसाभिक्लृप्तो य एनं विदुरमृता-
स्ते भवन्ति ॥ अद्भ्यः संभूतो हिरण्यगर्भ इत्यष्टौ ॥ एष हि देवः प्रदिशोऽनुसर्वाः
पूर्वो हि जातः स उ गर्भे अन्तः ॥ स विजायमानः स जनिष्यमाणः प्रत्यङ्मुखास्ति-
ष्ठति विश्वतोमुखः ॥ विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोहस्त उत विश्वतस्पात् ॥
संबाहुभ्यां नमति संपतत्त्रैर्द्यावापृथिवी जनयन् देव एकः॥ वेनस्तत्पश्यन्विश्वा भुवनानि
विद्वान्यत्र विश्वं भवत्येकनीलम् ॥ यस्मिन्निदꣳसंचविचैकꣳस ओतः प्रोतश्च विभुप्र-
जासु ॥ प्रतद्वोचे अमृतं नु विद्वान् ॥ गन्धर्वो नाम निहितं गुहासु ॥ ३ ॥ त्रीणि
पदा निहिता गुहासु यस्तद्वेद सवितुः पितासत् ॥ स नो बन्धुर्जनिता स विधाता
धामानि वेद भुवनानि विश्वा ॥ यत्र देवा अमृतमानशानास्तृतीये धामान्यभ्यैरयन्त ॥

परिद्यावापृथिवी यन्ति सद्यः ॥ परिलोकान्परिदिशः परिसुवः ॥ ऋतस्य तन्तुं विततं विचृत्य तदपश्यत्तदभवत्प्रजासु ॥ परीत्य लोकान्परीत्य भूतानि परीत्य सर्वाः प्रदिशो दिशश्च ॥ प्रजापतिः प्रथमजा ऋतस्यात्मनात्मानमभिसंबभूव ॥ सदसस्पतिमद्भुतम् ॥ प्रियामिन्द्रस्य काम्यम् ॥ सनिंमेधामयासिषं उद्दीप्यस्व जातवेदोपघ्नं निर्ऋतिं मम ॥ ४ ॥ पशूँश्च मह्यमावह ॥ जीवनं च दिशो दिश ॥ मानोहिँसीज्जातवेदो गामश्वं पुरुषं जगत् ॥ अबिभ्रदग्न आगहि श्रियामापरिपातया ॥ पुरुषस्य विद्महे सहस्राक्षस्य महादेवस्य धीमहि ॥ तन्नो रुद्रः प्रचोदयात् ॥ तत्पुरुषाय विद्महे महादेवाय धीमहि ॥ तन्नो रुद्रः प्रचोदयात् ॥ तत्पुरुषाय विद्महे वक्रतुण्डाय धीमहि ॥ तन्नो दन्तिः प्रचोदयात् ॥ तत्पुरुषाय विद्महे चक्रतुण्डाय धीमहि ॥ ५ ॥ तन्नो नन्दिः प्रचोदयात् ॥ तत्पुरुषाय विद्महे

महासेनाय धीमहि ॥ तन्नः षण्मुखः प्रचोदयात् ॥ तत्पुरुषाय विद्महे सुवर्णपक्षाय धीमहि ॥ तन्नो गरुडः प्रचोदयात् ॥ वेदात्मनाय विद्महे हिरण्यगर्भाय धीमहि ॥ तन्नो ब्रह्म प्रचोदयात् ॥ नारायणाय विद्महे वासुदेवाय धीमहि ॥ तन्नो विष्णुः प्रचोदयात् ॥ वज्रनखाय विद्महे तीक्ष्णदꣳष्ट्राय धीमहि ॥६॥ तन्नो नारसिꣳहः प्रचोदयात् ॥ भास्कराय विद्महे महद्द्युतिकराय धीमहि ॥ तन्नो आदित्यः प्रचोदयात् ॥ वैश्वानराय विद्महे लालीलाय धीमहि ॥ तन्नो अग्निः प्रचोदयात् ॥ कात्यायनाय विद्महे कन्यकुमारि धीमहि ॥ तन्नो दुर्गिः प्रचोदयात् ॥ सहस्रपरमा देवी शतमूला शताङ्कुरा ॥ सर्वꣳहरतु मे पापं दूर्वा दुःस्वप्ननाशनी ॥ काण्डात्काण्डात्प्ररोहन्तीपरुषः परुषः परी ॥ ७ ॥ एवा नो दूर्वे प्रतनु सहस्रेण शतेन च ॥ या शतेन प्रतनोषि सहस्रेण विरोह-

४०७

सि ॥ तस्यास्ते देवीष्टके विधेम हविषा वयम् ॥ अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुंधरे ॥ शिरसा धारयिष्यामि रक्षस्व मां पदे पदे ॥ भूमिर्धेनुर्धरणी लोकधारिणी ॥ उद्धृतासि वराहेण कृष्णेन शतबाहुना ॥ मृत्तिके हन मे पापं यन्मया दुष्कृतं कृतम् ॥ मृत्तिके ब्रह्मदत्तासि काश्यपेनाभिमन्त्रिता ॥ मृत्तिके देहि मे पुष्टिं त्वयि सर्वं प्रतिष्ठितम् ॥ ८ ॥ मृत्तिके प्रतिष्ठिते सर्वं तन्मे निर्णुद मृत्तिके ॥ तया हतेन पापेन गच्छामि परमां गतिम् ॥ यत इन्द्रभयामहे ततो नो अभयं कृधि ॥ मघवंच्छग्धित-वतन्न ऊतये ॥ विद्विषो विमृधो जहि ॥ स्वस्तिदाविशस्पतिर्वृत्रहा विमृधो वशी ॥ वृषेन्द्रः पुर एतु नः स्वस्तिदा अभयंकरः ॥ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ॥ स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ आपांतम-

न्युस्तृपलप्रभर्माधुनिः शिमीवाञ्छरुमा ऽऋजीषी ॥ सोमो विश्वान्यतसा वनानि नार्वागिन्द्रं प्रतिमानानि देभुः ॥ ९ ॥ ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः ॥ सबुध्निया उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥ स्योनापृथिवि भवानृक्षरानिवेशनी ॥ यच्छानः शर्म सप्रथाः ॥ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ॥ ईश्वरी ऽसर्वभूतानां तामिहोपह्वये श्रियम् ॥ श्रीर्मे भजतु ॥ अलक्ष्मीर्मे नश्यतु ॥ विष्णुमुखा वै देवाश्छन्दोभिरिमाल्ँल्लोकाननपजय्यमभ्यजयन् ॥ महा ऽइन्द्रो वज्रबाहुः षोडशीशर्म यच्छतु ॥१०॥ स्वस्ति नो मघवा करोतु हन्तु पाप्मानं योऽस्मान्द्वेष्टि ॥ सोमान ऽस्वरणं कृणुहि ब्रह्मणस्पते ॥ कक्षीवन्तं य औशिजम् ॥ शरीरं यज्ञशमलं कुसीदं तस्मिन्त्सीदतु योऽस्मान्द्वेष्टि ॥ चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि ॥ तेन

पवित्रेण शुद्धेन पूता अतिपाप्मानमरातिं तरेम ॥ सजोषा इन्द्रसगणो मरुद्भिः सोमं-पिब वृत्रहञ्छूर विद्वान् ॥ जहि शत्रु ँ२रपमृधो नुदस्वाथाभयं कृणुहि विश्वतो नः ॥ सुमित्रा न आप ओषधयः सन्तु दुर्मित्रास्तस्मै भूयासुर्योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ॥ आपो हिष्ठामयो भुवस्ता न ऊर्ज्जे दधातन ॥ ११ ॥ महेरणाय चक्षसे ॥ यो वः शिवतमो रसस्तस्य भाजयते ह नः ॥ उशतीरिव मातरः ॥ तस्मा अरंगमामवो यस्य क्षयाय जिन्वथ ॥ आपो जनयथा च नः ॥ हिरण्यशृ-ङ्गं वरुणं प्रपद्ये तीर्थं मे देहि याचितः ॥ यन्मया भुक्तमसाधूनां पापेभ्यश्च प्रति-ग्रहः ॥ यन्मे मनसा वाचा कर्मणा वा दुष्कृतं कृतम् ॥ तन्न इन्द्रो वरुणो बृहस्प-तिः सविता च पुनन्तु पुनः पुनः ॥ नमोऽग्नयेप्सुमते नम इन्द्राय नमो वरुणाय नमो

वारुण्यै नमोऽद्भ्यः ॥ १२ ॥ यदपां क्रूरं यदमेध्यं यदशान्तं तदपगच्छतात् ॥ अत्याशनादतीपानाद्यच्च उग्रात्प्रतिग्रहात् ॥ तन्नो वरुणो राजा पाणिना ह्यवमर्शतु ॥ सोऽहमपापो विरजो निर्मुक्तो मुक्तकिल्बिषः ॥ नाकस्य पृष्ठमारुह्य गच्छेद्ब्रह्मसलोक-ताम् ॥ यश्चाप्सु वरुणः स पुनात्वघमर्षणः ॥ इमं मे गङ्गे यमुने सरस्वति शुतुद्रि-स्तोम ँस च तापरुष्णिया ॥ असिक्नियामरुद्वृधे वितस्तयार्जीकीये शृणुह्यासुषोमया ॥ ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत ॥ ततो रात्रिरजायत ततः समुद्रो अर्णवः ॥ १३ ॥ समुद्रादर्णवादधिसंवत्सरो अजायत ॥ अहोरात्राणि विदधद्विश्वस्य मिषतो वशी ॥ सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत् ॥ दिवं च पृथिवीं चान्तरिक्षमथो सुवः ॥ यत्पृथिव्या ँरजस्वमान्तरिक्षे विरोदसी ॥ इमा ँस्तदापो वरुणः पुनात्वघम-

र्षणः ॥ पुनन्तु वसवः पुनातु वरुणः पुनात्वघमर्षणः ॥ एष भूतस्य मध्ये भुवनस्य गोप्ता ॥ एष पुण्यकृतां लोकानेष मृत्योर्हिरण्मयम् ॥ द्यावापृथिव्योर्हिरण्मय॰ँस॰ँश्रित॰ँसुवः ॥ १४ ॥ स नः सुवः स॰ँशिशाधि ॥ आर्द्रं ज्वलति ज्योतिरहमस्मि ॥ ज्योतिर्ज्वलति ब्रह्माहमस्मि ॥ योऽहमस्मि ब्रह्माहमस्मि ॥ अहमस्मि ब्रह्माहमस्मि ॥ अहमेवाहं मां जुहोमि स्वाहा ॥ अकार्यकार्यवकीर्णी स्तेनो भ्रूणहा गुरुतल्पगः ॥ वरुणोपामघमर्षणस्तस्मात्पापात्प्रमुच्यते ॥ रजोभूमिस्त्वमा॰ँरोदयस्व प्रवदन्ति धीराः ॥ आक्रान्त्समुद्रः प्रथमेविधर्मनजनयन्प्रजा भुवनस्य राजा ॥ वृषा पवित्रे अधि सा नो अव्ये बृहत्सोमो वावृधे सुवान इन्दुः ॥ १५ ॥ परस्ताद्यशोगुहासु मम चक्रतुण्डाय धीमहि तीक्ष्णद॰ँष्ट्राय धीमहि परिप्रातिष्ठितं देभुर्यच्छतु दधातनाद्योऽर्णवः सुवो राजैकं च ॥ १ ॥ रुद्रो रुद्रश्च दन्तिश्च

नन्दिः षण्मुख एव च ॥ गरुडो ब्रह्म विष्णुश्च नारसिँहस्तथैव च ॥ आदित्योऽग्निश्च दुर्गिश्च क्रमेण द्वादशाम्भसि ॥ मम वचमसुवेनावभावैकात्यायनाय ॥ जातवेदसे सुनवामसोममराती यतो निदहाति वेदः ॥ स नः पर्षदतिदुर्गाणि विश्वानावेव सिन्धुं दुरितात्यग्निः ॥ तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम् ॥ दुर्गां देवीँशरणमहं प्रपद्ये सुतरसितरसे नमः ॥ अग्ने त्वं पारयानव्यो अस्मान्त्स्वस्तिभिरतिदुर्गाणि विश्वा ॥ पूश्च पृथ्वी बहुला न उर्वी भवातोकायतनयाय शंयोः ॥ विश्वानि नो दुर्गहा जातवेदः सिन्धुं न नावादुरितातिपर्षि ॥ अग्ने अत्रिवन्मनसा गृणानोऽस्माकं बोध्यविता तनूनाम् ॥ पृतनाजितँसहमानमुग्रमग्निँहुवेम परमात्सधस्थात् ॥ स नः पर्षदतिदुर्गाणि विश्वाक्षामद्देवो अतिदुरितात्यग्निः ॥ प्रत्नोषि कमीड्यो अध्व-

रेषु सनाच्च होता नव्यश्च सत्सि ॥ स्वा चाग्ने तनुवं पिप्रयस्वास्मभ्यं च सौभग-मायजस्व ॥ गोभिर्जुष्टमयुजो निषिक्तं तवेन्द्र विष्णोरनुसंचरेम ॥ नाकस्य पृष्ठमभि-संवसानो वैष्णवीं लोक इह मादयन्ताम् ॥ अग्निश्चत्वारि च ॥२॥ भूरन्नमग्नये पृथिव्यै स्वाहा भुवोऽन्नं वायवेऽन्तरिक्षाय स्वाहा सुवरन्नमादित्याय दिवे स्वाहा भूर्भुवःसुवरन्नं चन्द्रमसे दिग्भ्यः स्वाहा नमो देवेभ्यः स्वधा पितृभ्यो भूर्भुवःसुवरन्नमोम् ॥ ३ ॥ भूरग्नये पृथिव्यै स्वाहा भुवो वायवेऽन्तरिक्षाय स्वाहा सुवरादित्याय दिवे स्वाहा भूर्भु-वःसुवश्चन्द्रमसे दिग्भ्यः स्वाहा नमो देवेभ्यः स्वधा पितृभ्यो भूर्भुवःसुवरग्न ओम् ॥ ४ ॥ भूरग्नये च पृथिव्यै च महते च स्वाहा भुवो वायवे चान्तरिक्षाय च महते च स्वाहा सुवरादित्याय च दिवे च महते च स्वाहा भूर्भुवःसुवश्चन्द्रमसे च नक्षत्रे-

भ्यश्च दिग्भ्यश्च महते च स्वाहा नमो देवेभ्यः स्वधा पितृभ्यो भूर्भुवःसुवर्महरोम् ॥ ५ ॥ पाहि नो अग्न एनसे स्वाहा ॥ पाहि नो विश्ववेदसे स्वाहा ॥ यज्ञं पाहि विभावसो स्वाहा ॥ सर्वं पाहि शतक्रतो स्वाहा ॥६॥ पाहि नो अग्न एकया ॥ पाह्युत द्वितीयया ॥ पाह्यूर्जं तृतीयया ॥ पाहि गीर्भिश्चतसृभिर्वसो स्वाहा ॥७॥ यश्छन्दसामृषभो विश्वरूपश्छन्दोभ्यश्छन्दाᳬस्याविवेश ॥ स चाᳬशिक्यः पुरोवाचोपनिषदिन्द्रो ज्येष्ठ इन्द्रियाय ऋषिभ्यो नमो देवेभ्यः स्वधा पितृभ्यो भूर्भुवःसुवश्छन्द ओम् ॥ ८ ॥ नमो ब्रह्मणे धारणं मे अस्त्वनिराकरणं धारयिता भूयासं कर्णयोः श्रुतं माच्योढ्वं ममामुष्य ओम् ॥ ९ ॥ ऋतं तपः सत्यं तपः श्रुतं तपः शान्तं तपो दमस्तपः शमस्तपो दानं तपो यज्ञं तपो भूर्भुवःसुवर्ब्रह्मैतदुपास्यैतत्तपः ॥१०॥ यथा वृक्षस्य संपुष्पितस्य दूराद्गन्धो वा-

त्येवं पुण्यस्य कर्मणो दूराद्गन्धो वाति यथासिधारां कर्तेव हितामवक्रामेयद्युवेयुवे-
हवाविहृयिष्यामि कर्तं पतिष्यामीत्येवममृतादात्मानं जुगुप्सेत् ॥ ११ ॥ अणो-
रणीयान्महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः ॥ तमक्रतुं पश्यति वीतशो-
को धातुः प्रसादान्महिमानमीशम् ॥ सप्त प्राणाः प्रभवन्ति तस्मात्सप्तार्चिषः समिधः
सप्त जिह्वाः ॥ सप्त इमे लोका येषु चरन्ति प्राणा गुहाशयान्निहिताः सप्त सप्त ॥
अतः समुद्रा गिरयश्च सर्वेऽस्मात्स्यन्दन्ते सिन्धवः सर्वरूपाः ॥ अतश्च विश्वा ओषध-
यो रसाच्च येनैष भूतस्तिष्ठत्यन्तरात्मा ॥ ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो
मृगाणाम् ॥ श्येनो गृध्राणाꣳ स्वधितिर्वनानाꣳसोमः पवित्रमत्येतिरेभन्न ॥ अजामेकां
लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीꣳसरूपाम् ॥ अजो ह्येको जुषमाणोऽनुशेते

जहात्येनां भुक्तभोगामजोऽन्यः ॥ १ ॥ हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषद-तिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥ घृतं मिमिक्षिरे घृतमस्य योनिर्घृते श्रितो घृतमुवस्य धामा ॥ अनुष्वधमावह मादय-स्व स्वाहाकृतं वृषभ वक्षि हव्यम् ॥ समुद्रादूर्मिर्मधुमाꣳउदारदुपाꣳशुना सममृतत्वमा-नट् ॥ घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः ॥ वयं नाम प्रब्रवा-माघृतेनास्मिन्यज्ञे धारयामानमोभिः ॥ उपब्रह्माशृणवच्छस्यमानं चतुःशृङ्गोवमीद्गौर एतत् ॥ चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य ॥ त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याꣳआविवेश ॥ २ ॥ त्रिधाहितं पाणिभिर्गुह्यमानं गवि देवासो घृतमन्वविन्दन् ॥ इन्द्र एकꣳसूर्य एकं जजान वेनादेकꣳस्वधया निष्टतक्षुः ॥ यो

देवानां प्रथमं पुरस्ताद्विश्वा धियो रुद्रो महर्षिः ॥ हिरण्यगर्भं पश्यति जायमानꣳस नो देवः शुभया स्मृत्या संयुनक्तु ॥ यस्मात्परं नापरमस्ति किंचिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ॥ वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥ न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः ॥ परेण नाकं निहितं गुहायां विभ्राजदेतद्यतयो विशन्ति ॥ वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयोगाद्यतयः शुद्धसत्त्वाः ॥ ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे ॥ दह्रं विपापं परमेश्मभूतं यत्पुण्डरीकं पुरमध्यसꣳस्थम् ॥ तत्रापि दह्रं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यम् ॥ यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ॥ तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ॥ ३ ॥ अजोऽन्या आविवेश सर्वे चत्वारि च

॥ १२ ॥ सहस्रशीर्षं देवं विश्वाक्षं विश्वशंभुवम् ॥ विश्वं नारायणं देवमक्षरं परमं पदम् ॥ विश्वतः परमान्नित्यं विश्वं नारायणꣳहरिम् ॥ विश्वमेवेदं पुरुषस्त-द्विश्वमुपजीवति ॥ पतिं विश्वस्यात्मेश्वरꣳ शाश्वतꣳ शिवमच्युतम् ॥ नारायणं महाज्ञेयं विश्वात्मानं परायणम् ॥ नारायणपरो ज्योतिरात्मा नारायणः परः ॥ नारायणपरं ब्रह्म तत्त्वं नारायणः परः ॥ नारायणपरो ध्याता ध्यानं नारायणः परः ॥ यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा ॥ १ ॥ अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ॥ अनन्तमव्ययं कविꣳसमुद्रेन्तं विश्वशंभुवम् ॥ पद्मकोशप्रतीकाशꣳहृदयं चाप्यधोमुखम् ॥ अधोनिष्ट्या वितस्त्यान्ते नाभ्यामुपरि तिष्ठति ॥ ज्वालमालाकुलं भाति विश्वस्यायतनं महत् ॥ संततꣳशिलाभिस्तुलम्बत्याकोशसन्निभम् ॥ तस्यान्ते

सुषिरꣳसूक्ष्मं तस्मिन्त्सर्वं प्रतिष्ठितम् ॥ तस्य मध्ये महानग्निर्विश्वार्चिर्विश्वतो-
मुखः ॥ सोऽग्रभुग्विभजन्तिष्ठन्नाहारमजरः कविः ॥ तिर्यगूर्ध्वमधःशायी रश्मय-
स्तस्य संतता ॥ संतापयति स्वं देहमापादतलमस्तगः ॥ तस्य मध्ये वह्निशिखा अणी-
योर्ध्वा व्यवस्थितः ॥ नीलतोयदमध्यस्थाद्विद्युल्लेखेव भास्वरा ॥ नीवारशूकवत्तन्वी पीता
भास्वत्यणूपमा । तस्या शिखाया मध्ये परमात्मा व्यवस्थितः ॥ स ब्रह्म स शिवः स ह-
रिः सेंद्रः सोऽक्षरः परमः स्वराट् ॥ २ ॥ अपिवासंतता षट्च ॥ १३ ॥ आदित्यो
वा एष एतन्मण्डलं तपति तत्र ता ऋचस्तदृचां मण्डलꣳस ऋचां लोकोऽथ य एष एत-
तस्मिन्मण्डलेऽर्चिर्दीप्यते तानि सामानि स साम्नां लोकोऽथ य एष एतस्मिन्मण्डले-
ऽर्चिषि पुरुषस्तानि यजूꣳषि स यजुषां मण्डलꣳस यजुषां लोकः सैषा त्रय्येव विद्या

तपति य एषोऽन्तरादित्ये हिरण्मयः पुरुषः ॥ १४ ॥ आदित्यो वै तेज ओजो बलं यशश्चक्षुः श्रोत्रमात्मा मनो मन्युर्मनुर्मृत्युः सत्यो मित्रो वायुराकाशः प्राणो लोकपालः कः किं कं तत्सत्यमन्नममृतो जीवो विश्वः कतमः स्वयंभु ब्रह्मैतदमृत एष पुरुष एष भूतानामधिपतिर्ब्रह्मणः सायुज्य ँ सलोकतामाप्नोत्येतासामेव देवताना ँ सायुज्य-ँ सार्ष्ठिता ँ समानलोकतामाप्नोति य एवं वेदेत्युपनिषत् ॥ १५ ॥ निधनपतये नमः ॥ निधनपतान्तिकाय नमः ॥ ऊर्ध्वाय नमः ॥ ऊर्ध्वलिङ्गाय नमः ॥ हिरण्याय नमः ॥ हिरण्यलिङ्गाय नमः ॥ सुवर्णाय नमः ॥ सुवर्णलिङ्गाय नमः ॥ दिव्याय नमः ॥ दिव्यलिङ्गाय नमः ॥ भवाय नमः ॥ भवलिङ्गाय नमः ॥ शर्वाय नमः ॥ शर्वलिङ्गाय नमः ॥ शिवाय नमः ॥ शिवलिङ्गाय नमः ॥ ज्वलाय नमः ॥ ज्वललिङ्गाय नमः ॥ आत्माय नमः ॥

आत्मलिङ्गाय नमः ॥ परमाय नमः ॥ परमलिङ्गाय नमः ॥ एतत्सोमस्य सूर्यस्य सर्वलिङ्ग ँ स्थापयति पाणिमन्त्रं पवित्रम् ॥ १६ ॥ सद्योजातं प्रपद्यामि सद्योजाताय वै नमोनमः ॥ भवे भवे नाति भवे भवस्व माम् ॥ भवोद्भवाय नमः ॥ १७ ॥ वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय नमः सर्वभूतदमनाय नमो मनोन्मनाय नमः ॥ १८ ॥ अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः ॥ सर्वेभ्यः सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥ १९ ॥ तत्पुरुषाय विद्महे महादेवाय धीमहि ॥ तन्नो रुद्रः प्रचोदयात् ॥ २० ॥ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानाम् ॥ ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ॥ २१ ॥ नमो हिरण्यबाहवे हिरण्यव-

र्णाय हिरण्यरूपाय हिरण्यपतयेऽम्बिकापतय उमापतये पशुपतये नमोनमः ॥ २२ ॥
ऋत ꣳ सत्यं परं ब्रह्मपुरुषं कृष्णपिङ्गलम् ॥ ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै
नमोनमः ॥ २३ ॥ सर्वो वै रुद्रस्तस्मै रुद्राय नमो अस्तु ॥ पुरुषो वै रुद्रस्तन्महो
नमोनमः ॥ विश्वं भूतं भुवनं चित्रं बहुधाजातं जायमानं च यत् ॥ सर्वो ह्येष रुद्रस्तस्मै
रुद्राय नमो अस्तु ॥ २४ ॥ कद्रुद्राय प्रचेतसे मीढुष्टमायतव्यसे ॥ वोचेमशंतम ꣳ हृदे ॥
सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु ॥ २५ ॥ यस्य वैकंकत्यग्निहोत्रहवणी भवति
प्रत्येवास्याहुतयस्तिष्ठन्त्यथो प्रातिष्ठित्यै ॥ २६ ॥ कृणुष्वपाज इति पञ्च ॥ २७ ॥
अदितिर्देवा गन्धर्वा मनुष्याः पितरो सुरास्तेषा ꣳ सर्वभूतानां माता मेदिनी महतामही सावि-
त्री गायत्री जगत्युर्वी पृथ्वी बहुला विश्वा भूता कतमा काया सा सत्येत्यमृतेति वसिष्ठः

॥ २८ ॥ आपो वा इदꣳसर्वं विश्वाभूतान्यापः प्राणा वा आपः पशव आपोऽन्नमापो-ऽमृतमापः सम्राडापो विराडापः स्वराडापश्छन्दाꣳस्यापो ज्योतीꣳष्यापो यजूꣳष्यापः सत्यमापः सर्वा देवता आपो भूर्भुवःसुवराप ओम् ॥ २९ ॥ आपः पुनन्तु पृथिवीं पृथिवी पूता पुनातु माम् ॥ पुनन्तु ब्रह्मणस्पतिर्ब्रह्मपूता पुनातु माम् ॥ यदुच्छिष्टमभोज्यं यद्वा दुश्चरितं मम ॥ सर्वं पुनन्तु मामापोऽसतां च प्रतिग्रहꣳस्वाहा ॥ ३० ॥ अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः ॥ पापेभ्यो रक्षन्ताम् ॥ यदह्ना पापमकार्षम् ॥ मनसा वाचा हस्ताभ्याम् ॥ पद्भ्यामुदरेण शिश्ना ॥ अहस्तदवलुम्पतु ॥ यत्किंच दुरितं मयि ॥ इदमहं माममृतयोनौ ॥ सत्ये ज्योतिषि जुहोमि स्वाहा ॥ ३१ ॥ सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः ॥ पापेभ्यो रक्षन्ताम् ॥ यद्रात्र्या पापमकार्षम् ॥ मनसा वाचा

हस्ताभ्याम् ॥ पद्भ्यामुदरेण शिश्ना ॥ रात्रिस्तदवलम्पतु ॥ यत्किंच दुरितं मयि ॥ इदमहं मामममृतयोनौ ॥ सूर्ये ज्योतिषि जुहोमि स्वाहा ॥ ३२ ॥ ओमित्येकाक्षरं ब्रह्म ॥ अग्निर्देवता ब्रह्म इत्यार्षम् ॥ गायत्रं छन्दं परमात्मं सरूपम् ॥ सायुज्यं विनियोगम् ॥ ३३ ॥ आयातु वरदा देवी अक्षरं ब्रह्म संमितम् ॥ गायत्रीं छन्दसां मातेदं ब्रह्म जुषस्व मे ॥ यदह्नात्कुरुते पापं तदह्नात्प्रतिमुच्यते ॥ यद्रात्र्यात्कुरुते पापं तद्रात्र्यात्प्रतिमुच्यते ॥ सर्ववर्णे महादेवि संध्याविद्ये सरस्वति ॥ ३४ ॥ ओजोऽसि सहोऽसि बलमसि भ्राजोऽसि देवानां धाम नामासि विश्वमसि विश्वायुः सर्वमसि सर्वायुरभिभूरों गायत्रीमावाहयामि सावित्रीमावाहयामि सरस्वतीमावाहयामि छन्दऋषीनावाहयामि श्रियमावाहयामि गायत्र्या गायत्रीच्छन्दो विश्वामित्र ऋषिः सविता देवताऽग्निर्मुखं ब्रह्मा शिरो विष्णुर्हृदय रुद्रः

शिखा पृथिवीयोनिः प्राणापानव्यानोदानसमानासप्राणा श्वेतवर्णा सांख्यायनसगोत्रा गायत्री चतुर्वि ँ्शत्यक्षरा त्रिपदाषट्कुक्षिः पञ्चशीर्षोपनयने विनियोगाओँभूः ॥ ओंभुवः ॥ ओ ँ् सुवः ॥ ओं महः ॥ ओं जनः ॥ ओं तपः ॥ ओ ँ् सत्यम् ॥ ओं तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ॥ धियो यो नः प्रचोदयात् ॥ ओमापो ज्योती रसोऽमृतं ब्रह्मभूर्भुवःसुवरों ॥ ३५ ॥ उत्तमे शिखरे जाते भूम्यां पर्वतमूर्धनि ॥ ब्राह्मणेभ्योऽभ्यनुज्ञाता गच्छ देवि यथासुखम् ॥ स्तुतोमया वरदा वेदमाता प्रचोदयन्ती पवने द्विजाता ॥ आयुः पृथिव्यां द्रविणं ब्रह्मवर्चसं मह्यं दत्त्वा प्रजातुं ब्रह्मलोकम् ॥ ३६ ॥ घृणिः सूर्य आदित्यो न प्रभावात्यक्षरम् ॥ मधु क्षरन्ति तद्रसम् ॥ सत्यं वैतद्रसमापो ज्योती रसोऽमृतं ब्रह्मभूर्भुवःसुवरों ॥ ३७ ॥

ब्रह्ममेतु माम् ॥ मधुमेतु माम् ॥ ब्रह्ममेव मधुमेतु माम् ॥ यास्तेसोमप्रजावत्सोभिसो अहम् ॥ दुःस्वप्नहं दुरुष्षह ॥ यास्ते सोमप्राणाꣳस्ताञ्जुहोमि ॥ त्रिसुपर्णमयाचितम् ॥ ब्राह्मणाय दद्यात् ॥ ब्रह्महत्यां वा एते घ्नन्ति ॥ ये ब्राह्मणास्त्रिसुपर्णं पठन्ति ते सोमं प्राप्नु- वन्ति ॥ आसहस्रात्पङ्क्तिं पुनन्ति ॥ ॐ ॥ ३८ ॥ ब्रह्ममेधया ॥ मधुमेधया ॥ ब्रह्ममेव मधुमेधया ॥ अद्यानो देव सवितः प्रजावत्सावीः सौभगम् ॥ परादुष्वप्नियꣳसुव ॥ विश्वा- नि देव सवितर्दुरितानि परासुव ॥ यद्भद्रं तन्म आसुव ॥ मधुवाता ऋतायते ॥ मधुक्षरन्ति सिन्धवः ॥ माध्वीर्नः सन्त्वोषधीः ॥ मधुनक्तमुतोषसि मधुमत्पार्थिवꣳरजः ॥ मधुद्यौरस्तु नः पिता ॥ मधुमान्नो वनस्पतिर्मधुमाꣳअस्तु सूर्यः ॥ माध्वीर्गावो भवन्तु नः ॥ य इमं त्रिसुपर्ण- मयाचितं ब्राह्मणाय दद्यात् ॥ भ्रूणहत्यां वा एते घ्नन्ति ॥ ये ब्राह्मणास्त्रिसुपर्णं पठन्ति ॥

२१७

 



ते सोमं प्राप्नुवन्ति ॥ आसाहस्रात्पङ्क्तिं पुनन्ति ॥ ॐ ॥ ३९ ॥ ब्रह्ममेधवा ॥ मधुमेधवा ॥ ब्रह्ममेव मधुमेधवा ॥ ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम् ॥ श्येनो गृध्राणां ँ स्वधितिर्वनानाꣳ सोमः पवित्रमत्येतिरेभन्॥ हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥ ऋचे त्वा रुचे त्वा समित्स्रवन्ति सरितो न धेनाः ॥ अन्तर्हृदा मनसा पूयमानाः ॥ घृतस्य धारा अभिचाकशीमि ॥ हिरण्ययो वेतसो मध्य आसाम् ॥ तास्मिन्त्सुपर्णो मधुकृत्कुलायी भजन्नास्ते मधुदेवताभ्यः ॥ तस्यासते हरयः सप्त तीरे स्वधां दुहाना अमृतस्य धाराम् ॥ य इदं त्रिसुपर्णमयाचितं ब्राह्मणाय दद्यात् ॥ वीरहत्यां वा एते घ्नन्ति ॥ ये ब्राह्मणास्त्रिसुपर्णं पठन्ति ॥ ते सोमं प्राप्नुवन्ति ॥ आसहस्रात्पङ्क्तिं पुनन्ति ॥ ॐ ॥ ४० ॥

मेधादेवी जुषमाणा न आगाद्विश्वाचीभद्रासुमनस्यमाना ॥ त्वया जुष्टा नुदमाना-दुरुक्तान्वृहद्वदेम विदथे सुवीराः ॥ त्वया जुष्ट ऋषिर्भवति देवि त्वया ब्रह्मागतश्रीरुत त्वया ॥ त्वया जुष्टश्चित्रं विन्दते वसु सा नो जुषस्व द्रविणो न मेधे ॥ ४१ ॥ मेधां म इन्द्रो दधातु मेधां देवी सरस्वती ॥ मेधां मे अश्विनावुभावाधत्ता पुष्करस्रजा ॥ अप्सरासु च या मेधा गन्धर्वेषु च यन्मनः ॥ दैवीं मेधा सरस्वती सा मां मेधा सुरभि-र्जुषताꣳस्वाहा ॥ ४२ ॥ आमां मेधा सुरभिर्विश्वरूपा हिरण्यवर्णा जगती जगम्या ॥ ऊर्जस्वती पयसापिन्वमाना सा मां मेधा सुप्रतीका जुषन्ताम् ॥ ४३ ॥ मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु ॥ ४४ ॥ अपैतु मृत्युरमृतं न आगन्वैवस्वतो नो अभयं

कृणोतु ॥ पर्णं वनस्पतेरिवाभिनः शयिता॑ꣳरयिः स च तान्नः शचीपतिः ॥ ४५ ॥
परं मृत्यो अनु परेहि पन्थां यस्ते स्व इतरो देवयानात् ॥ चक्षुष्मते शृण्वते ते ब्रवीमि
मा नः प्रजा॑ꣳरीरिषो मोत वीरान् ॥ ४६ ॥ वातं प्राणं मनसान्वारभामहे प्रजापतिं यो
भुवनस्य गोपाः ॥ स नो मृत्योस्त्रायतां पात्व॑ꣳहसो ज्योग्जीवा जरामशीमहि ॥ ४७ ॥
अमुत्र भूयादधयद्यमस्य बृहस्पतेरभिशस्तेरमुञ्चः ॥ प्रत्यौहतामश्विनामृत्युमस्मद्देवा-
नामग्ने भिषजा शचीभिः ॥ ४८ ॥ हरि॑ꣳहरन्तमनुयन्ति देवा विश्वस्येशानं वृषभं मतीना-
म् ॥ ब्रह्मसरूपमनु मेदमागादयनं माविवधीर्विक्रमस्व ॥ ४९ ॥ शल्कैरग्निमिन्धान
उभौ लोकौ सनेमहम् ॥ उभयोर्लोकयोर्ऋध्वातिमृत्युं तराम्यहम् ॥ ५० ॥ मा छिदो
मृत्यो मावधीर्मा मे वलं विवृहो मा प्रमोषीः ॥ प्रजां मा मे रीरिष आयुरुग्रनृचक्षसं-

त्त्वाहविषा विधेम ॥ ५१ ॥ मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम् ॥ मा नोवधीः पितरं मोत मातरं प्रिया मा नस्तनुवो रुद्र रीरिषः ॥ ५२ ॥ मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः ॥ वीरान्मा नो रुद्र भामितोऽवधीर्हविष्मन्तो नमसा विधेम ते ॥ ५३ ॥ प्रजापते न त्वदेतान्यन्यो विश्वाजातानि परिता बभूव ॥ यत्कामास्ते जुहुमस्तन्नो अस्तु वय श्स्याम पतयो रयीणाम् ॥ ५४ ॥ स्वस्ति दाविशस्पतिर्वृत्रहा विमृधो वशी ॥ वृषेन्द्रः पुर एतु नः स्वस्तिदा अभयंकरः ॥ ५५ ॥ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ॥ उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीयमामृतात् ॥ ५६ ॥ ये ते सहस्रमयुतं पाशामृत्यो मर्त्याय हन्तवे ॥ तान्यज्ञस्य मायया सर्वानवयजामहे ॥ ५७ ॥

 


मृत्यवे स्वाहा मृत्यवे स्वाहा ॥ ५८ ॥ देवकृतस्यैनसोवयजनमसि स्वाहा ॥ मनुष्यकृतस्यैनसोऽवयजनमसि स्वाहा ॥ पितृकृतस्यैनसोऽवयजनमसि स्वाहा ॥ आत्मकृतस्यैनसोऽवयजनमसि स्वाहा ॥ अन्यकृतस्यैनसोऽवयजनमसि स्वाहा ॥ अस्मत्कृतस्यैनसोऽवयजनमसि स्वाहा ॥ यद्दिवा च नक्तं चैनश्चकृम तस्यावयजनमसि स्वाहा ॥ यत्स्वपन्तश्च जाग्रतश्चैनश्चकृम तस्यावयजनमसि स्वाहा ॥ यत्सुषुप्तश्च जाग्रतश्चैनश्चकृम तस्यावयनमसि स्वाहा ॥ यद्विद्वा᳖सश्चाविद्वा᳖सश्चैनश्चकृम तस्या-वयजनमसि स्वाहा ॥ एनस एनसोऽवयजनमसि स्वाहा ॥ ५९ ॥ यद्वो देवाश्चकृम-जिह्वया गुरुमनसोवाप्रयुतीदेवहेडनम् ॥ अरा वायो नो अभिदुच्छुनायते तस्मिन्तदेनो वसवो निधेतन स्वाहा ॥ ६० ॥ कामोकारुषीन्नमोनमः ॥ कामोकार्षीत्कामः करोति

नाहं करोमि कामः कर्ता नाहं कर्ता कामः कारयिता॥ नाहं कारयिता॥ एष ते काम-कामाय स्वाहा॥ ६१॥ मन्युरकार्षीन्नमोनमः॥ मन्युरकार्षीन्मन्युः करोति नाहं करोपि मन्युः कर्ता नाहं कर्ता मन्युः कारयिता॥ नाहं कारयिता ॥ एष ते मन्यो मन्यवे स्वाहा॥ ६२॥ तिलाञ्जुहोमि सरसाᳬसपिष्टान्गन्धारमम चित्ते रमन्तु स्वाहा॥ गावो हिरण्यं धनमन्नपान ᳬसर्वेषा ᳬश्रियै स्वाहा॥ श्रियं च लक्ष्मीं च पुष्टिं च कीर्तिं चानृण्य-ताम्॥ ब्रह्मण्यं बहुपुत्रताम्॥ श्रद्धामेधे प्रजाः संददातु स्वाहा॥ ६३॥ तिलाः कृष्णास्तिला श्वेतास्तिलाः सौम्या वशानुगाः॥ तिलाः पुनन्तु मे पापं यत्किंचिद्दुरितं मयि स्वाहा॥ चोरस्यान्नं नवश्राद्धं ब्रह्महा गुरुतल्पगः॥ गोस्तेय ᳬसुरापानं भ्रूणहत्या तिला शाति ᳬशमयन्तु स्वाहा॥ श्रीश्च लक्ष्मीश्च पुष्टीश्च कीर्तिं चानृण्यताम्॥ ब्रह्मण्यं बहु-

पुत्रताम् ॥ श्रद्धामेधे प्रज्ञा तु जातवेदः संददातु स्वाहा ॥ ६४ ॥ प्राणापानव्यानो-
दानसमाना मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासꣳस्वाहा ॥ वाङ्मनश्च-
क्षुःश्रोत्रजिह्वाघ्राणरेतोबुद्ध्याकूतिः संकल्पा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा
भूयास ꣳ स्वाहा ॥ त्वक्चर्ममाꣳसरुधिरमेदोमज्जास्नायवोऽस्थीनि मे शुध्यन्तां ज्योतिरहं
विरजा विपाप्मा भूयासꣳ स्वाहा ॥ शिरःपाणिपादपार्श्वपृष्ठोरूदरजङ्घाशिश्नोपस्थ-
पायवो मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयासꣳस्वाहा ॥ उत्तिष्ठ पुरुष हरि-
तपिङ्गललोहिताक्षि देहि देहि ददापयिता मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा
भूयासꣳस्वाहा ॥ ६५ ॥ पृथिव्यापस्तेजोवायुराकाशा मे शुध्यन्तां ज्योतिरहं विरजा
विपाप्मा भूयासꣳस्वाहा ॥ शब्दस्पर्शरूपरसगन्धा मे शुध्यन्तां ज्योतिरहं विरजा वि-

पाप्मा भूयास ँ स्वाहा ॥ मनोवाक्कायकर्माणि मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास ँ स्वाहा ॥ अव्यक्तभावैरहंकारैर्ज्योतिरहं विरजा विपाप्मा भूयास ँ स्वाहा ॥ आत्मा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास ँ स्वाहा ॥ अन्तरात्मा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास ँ स्वाहा ॥ परमात्मा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास ँ स्वाहा ॥ क्षुधे स्वाहा ॥ क्षुत्पिपासाय स्वाहा ॥ विविट्यै स्वाहा ॥ ऋग्विधानाय स्वाहा ॥ कषोत्काय स्वाहा ॥ क्षुत्पिपासामलं ज्येष्ठामलक्ष्मीर्नाशयाम्यहम् ॥ अभूतिमसमृद्धिं च सर्वान्निर्णुद मे पाप्मान ँ स्वाहा ॥ अन्नमयप्राणमयमनोमयविज्ञानमयमानन्दमयमात्मा मे शुध्यन्तां ज्योतिरहं विरजा विपाप्मा भूयास ँ स्वाहा ॥ ६६ ॥ अग्नये स्वाहा ॥ विश्वेभ्यो देवेभ्यः स्वाहा ॥

ध्रुवाय भूमाय स्वाहा ॥ ध्रुवक्षितये स्वाहा ॥ अच्युताक्षितये स्वाहा ॥ अग्नये स्विष्टकृते स्वाहा ॥ धर्माय स्वाहा ॥ अधर्माय स्वाहा ॥ अद्भ्यः स्वाहा ॥ ओषधिवनस्पतिभ्यः स्वाहा ॥ १ ॥ रक्षोदेवजनेभ्यः स्वाहा ॥ गृह्याभ्यः स्वाहा ॥ अवसानेभ्यः स्वाहा ॥ अवसानपतिभ्यः स्वाहा ॥ सर्वभूतेभ्यः स्वाहा ॥ कामाय स्वाहा ॥ अन्तरिक्षाय स्वाहा ॥ यदेजति जगति यच्च चेष्टति नाम्नो भागो यन्नाम्ने स्वाहा ॥ पृथिव्यै स्वाहा ॥ अन्तरिक्षाय स्वाहा ॥२॥ दिवे स्वाहा ॥ सूर्याय स्वाहा ॥ चन्द्रमसे स्वाहा ॥ नक्षत्रेभ्यः स्वाहा ॥ इन्द्राय स्वाहा ॥ बृहस्पतये स्वाहा ॥ प्रजापतये स्वाहा ॥ ब्रह्मणे स्वाहा ॥ स्वधापितृभ्यः स्वाहा ॥ नमो रुद्राय पशुपतये स्वाहा ॥ ३ ॥ देवेभ्यः स्वाहा ॥ पितृभ्यः स्वधास्तु ॥ भूतेभ्यो नमः ॥ मनुष्येभ्यो हन्ता ॥ प्रजा-

पतये स्वाहा ॥ परमेष्ठिने स्वाहा ॥ यथा कूपः शतधारः सहस्रधारो अक्षितः ॥ एवामे अस्तु धान्य ँ सहस्रधारमक्षितम् ॥ धनधान्यै स्वाहा ॥ ये भूताः प्रचरन्ति दिवानक्तं बलिमिच्छन्तो वितुदस्य प्रेष्याः ॥ तेभ्यो बलिं पुष्टिकामो हरामि मयि पुष्टिं पुष्टिपतिर्दधातु स्वाहा ॥ ६७ ॥ ॐ तद्ब्रह्म ॥ ॐ तद्वायुः ॥ ॐ तदात्मा ॥ ॐ तत्सत्यम् ॥ ॐ तत्सर्वम् ॥ ॐ तत्पुरोर्नमः ॥ अन्तश्चरति भूतेषु गुहायां विश्वमूर्तिषु ॥ त्वं यज्ञस्त्वं वषट्कारस्त्वमिन्द्रस्त्व ँ रुद्रस्त्वं विष्णुस्त्वं ब्रह्म त्वं प्रजापतिः॥त्वं तदाप आपो ज्योती रसोऽमृतं ब्रह्मभूर्भुवःसुवरोम् ॥ ६८ ॥ श्रद्धायां प्राणे निविष्टोऽमृतं जुहोमि ॥ श्रद्धायामपाने निविष्टोऽमृतं जुहोमि ॥ श्रद्धायां व्याने निविष्टोऽमृतं जुहोमि ॥ श्रद्धायामुदाने निविष्टोऽमृतं जुहोमि ॥ श्रद्धाया ँ समाने निविष्टोऽमृतं जुहोमि ॥

ब्रह्मणि म आत्माऽमृतत्वाय ॥ अमृतोपस्तरणमसि ॥ श्रद्धायां प्राणे निविष्टोऽमृतं जुहोमि ॥ शिवो माविशाप्रदाहाय ॥ प्राणाय स्वाहा ॥ श्रद्धायामपाने निविष्टोऽमृतं जुहोमि ॥ शिवो माविशाप्रदाहाय ॥ अपानाय स्वाहा ॥ श्रद्धायां व्याने निविष्टोऽमृतं जुहोमि ॥ शिवो माविशाप्रदाहाय ॥ व्यानाय स्वाहा ॥ श्रद्धायामुदाने निविष्टोऽमृतं जुहोमि ॥ शिवो माविशाप्रदाहाय ॥ उदानाय स्वाहा ॥ श्रद्धायाꣳसमाने निविष्टोऽमृतं जुहोमि ॥ शिवो माविशाप्रदाहाय ॥ समानाय स्वाहा ॥ ब्रह्मणि म आत्माऽमृतत्वाय ॥ अमृतापिधानमसि ॥ ६९ ॥ श्रद्धायां प्राणे निविश्यामृतꣳहुतम् ॥ प्राणमन्नेनाप्यायस्व ॥ श्रद्धायामपाने निविश्यामृतꣳहुतम् ॥ अपानमन्नेनाप्यायस्व ॥ श्रद्धायां व्याने निवि-श्यामृतꣳहुतम् ॥ व्यानमन्नेनाप्यायस्व ॥ श्रद्धायामुदाने निविश्यामृतꣳहुतम् ॥ उदा-

नमन्नेनाप्यायस्व ॥ श्रद्धायाꣳसमाने निविश्यामृतꣳहुतम् ॥ समानमन्नेनाप्यायस्व ॥ ७० ॥ अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः ॥ ईशः सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक् ॥७१॥ वाङ्म आसन्न् ॥ नसोः प्राणः ॥ अक्ष्योश्चक्षुः ॥ कर्णयोः श्रोत्रम् ॥ बाहुवोर्बलम् ॥ ऊरुवोरोजः ॥ अरिष्टाविश्वान्यङ्गानि तनूः ॥ तनुवा मे सह नमस्ते अस्तु मामाहिꣳसीः ॥ ७२ ॥ वयः सुपर्णा उपसेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः ॥ अपध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्यस्मान्निधय एव बद्धान् ॥ ७३ ॥ प्राणानां ग्रन्थिरसि रुद्रो माविशान्तकः ॥ तेनान्नेनाप्यायस्व ॥७४॥ नमो रुद्राय विष्णवे मृत्युर्मे पाहि ॥ ७५ ॥ त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि ॥ त्वं वनेभ्यस्त्वमोषधीभ्यः स्त्वन्नृणां नृपते जायसे शुचिः ॥ ७६ ॥ शिवेन मे संतिष्ठस्व स्योनेन मे संतिष्ठस्व

सुभूतेन मे सन्तिष्ठस्व ब्रह्मवर्चसेन मे संतिष्ठस्व यज्ञस्यर्धिमनुसंतिष्ठस्वोपते यज्ञ नम उपते नम उपते नमः ॥ ७७ ॥ सत्यं परं परꣳसत्यꣳ सत्येन न सुवर्गाल्लोकाच्च्यवन्ते कदाचन सताꣳहि सत्यं तस्मात्सत्ये रमन्ते तप इति तपो नानशनात्परं यद्धि परं तपस्तद्दुर्धर्षं तद्दूराधर्षं तस्मात्तपसि रमन्ते दम इति-नियतं ब्रह्मचारिणस्तस्माद्दमे रमन्ते शम इत्यरण्ये मुनयस्तस्माच्छमे रमन्ते दान-मिति सर्वाणि भूतानि प्रशꣳसन्ति दानान्नातिदुश्चरं तस्माद्दाने रमन्ते धर्म इति धर्मेण सर्वमिदं परिगृहीतं धर्मान्नातिदुष्करं तस्माद्धर्मे रमन्ते प्रजन इति भूयाꣳसस्तस्माद्भू-यिष्ठाः प्रजायन्ते तस्माद्भूयिष्ठाः प्रजनने रमन्तेऽग्नय इत्याह तस्मादग्नय आधातव्या अग्निहोत्रमित्याह तस्मादग्निहोत्रे रमन्ते यज्ञ इति यज्ञो हि देवास्तस्माद्यज्ञे रमन्ते मानस-

मिति विद्वाꣳसस्तस्माद्विद्वाꣳस एव मानसे रमन्ते न्यास इति ब्रह्मा ब्रह्मा हि परः परो हि ब्रह्मा तानि वा एतान्यवराणि पराꣳसि न्यास एवात्यरेचयद्य एवं वेदेत्युपनिषत् ॥ ७८॥ प्राजापत्योहारुणिः सुपर्णेयः प्रजापतिं पितरमुपससार किं भगवन्तः परमं वदन्तीति तस्मै प्रोवाच सत्येन वायुरावाति सत्येनादित्यो रोचते दिवि सत्यं वाचः प्रतिष्ठा सत्ये सर्वं प्रतिष्ठितं तस्मात्सत्यं परमं वदन्ति तपसा देवा देवतामग्र आयन् तपस ऋषयः सुवरन्वविन्दन् तपसा सपत्नान्प्रणुदामारातीस्तपसि सर्वं प्रतिष्ठितं तस्मात्तपः परमं वदन्ति दमेन दान्ताः किल्बिषमवधून्वन्ति दमेन ब्रह्मचारिणः सुरवगच्छन् दमो भूतानां दुराधर्षं दमे सर्वं प्रतिष्ठितं तस्माद्दमः परमं वदन्ति शमेन शान्ताः शिवमाचरन्ति शमेन नाकं मुनयोऽन्वविन्दञ्छमो भूतानां दुराधर्षं शमे

सर्वं प्रतिष्ठितं तस्माच्छमः परमं वदन्ति दानं यज्ञानां वरूथं दक्षिणा लोके दाता-
रꣳ सर्वभूतान्युपजीवन्ति दानेनारातीरपानुदन्त दानेन द्विषन्तो मित्रा भवन्ति दाने
सर्वं प्रतिष्ठितं तस्माद्दानं परमं वदन्ति धर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं
प्रजा उपसर्पन्ति धर्मेण पापमपनुदति धर्मे सर्वं प्रतिष्ठितं तस्माद्धर्मं परमं वदन्ति प्रजन-
नं वै प्रतिष्ठा लोके साधु प्रजायास्तन्तुं तन्वानः पितृणामनृणो भवति तदेव तस्या अनृणं
तस्मात्प्रजननं परमं वदन्त्यग्नयो वै त्रयी विद्यादेवयानः पन्था गार्हपत्य ऋक्पृ-
थिविरथन्तरमन्वाहार्यपचनं यजुरन्तरिक्षं वामदेव्यमाहवनीयः सामसुवर्गो लोको
बृहत्तस्मादग्नीन्परमं वदन्त्यग्निहोत्रꣳ सायंप्रातर्गृहाणां निष्कृतिः स्विष्टꣳ सुहुतं
यज्ञक्रतूनां प्रायणꣳ सुवर्गस्य लोकस्य ज्योतिस्तस्मादग्निहोत्रं परमं वदन्ति यज्ञ इति

यज्ञेन हि देवा दिवं गता यज्ञेनासुरानपानुदन्त यज्ञेन द्विषन्तो मित्रा भवन्ति यज्ञे सर्वं प्रतिष्ठितं तस्माद्यज्ञं परमं वदन्ति मानसं वै प्राजापत्यं पवित्रं मानसेन मनसा साधु पश्यति मानसा ऋषयः प्रजा असृजन्त मानसे सर्वं प्रतिष्ठितं तस्मान्मानसं परमं वदन्ति न्यास इत्याहुर्मनीषिणो ब्रह्माणं ब्रह्मा विश्वः कतमः स्वयंभुः प्रजापतिः संवत्सर इति संवत्सरोऽसावादित्यो य एष आदित्ये पुरुषः स परमेष्ठी ब्रह्मात्मा याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति पर्जन्येनौषधिवनस्पतयः प्रजायन्त ओषधिवनस्पतिभिरन्नं भवत्यन्नेन प्राणाः प्राणैर्बलं बलेन तपस्तपसा श्रद्धा श्रद्धया मेधा मेधया मनीषा मनीषया मनो मनसा शान्तिः शान्त्या चित्तं चित्तेन स्मृतिः स्मृत्या स्मारꣳस्मारेण विज्ञानं विज्ञानेनात्मानं वेदयति तस्मादन्नं ददन्सर्वाण्येतानि

दादत्यन्नात्प्राणा भवन्ति भूतानां प्राणैर्मनो मनसश्च विज्ञानं विज्ञानादानन्दो ब्रह्म-योनिः स वा एष पुरुषः पञ्चधा पञ्चात्मा येन सर्वमिदं प्रोतं पृथिवी चान्तरिक्षं च द्यौश्च दिशश्चावान्तरदिशाश्च स वै सर्वमिदं जगत्ससभूत१ सभव्यं जिज्ञासक्लृप्तऋत-जारयिष्ठा श्रद्धासत्योमहस्वान्तपसो वरिष्ठा ज्ञात्वा तमेवं मनसा हृदा च भूयो न मृत्युमुप-याहि विद्वान् तस्मान्न्यासमेषां तपसामतिरिक्तमाहुर्वसुरण्वो विभूरसि प्राणे त्वमसि संधाता ब्रह्मन् त्वमसि विश्वधृत्तेजोदास्त्वमस्यग्निरसि वर्चोदास्त्वमासि सूर्यस्य द्युम्नोदास्त्व-मासि चन्द्रमस उपयाम गृहीतोऽसि ब्रह्मणे त्वामहस ॐमित्यात्मानं युञ्जीतैतद्वै महोप-निषदं देवानां गुह्यं य एवं वेद ब्रह्मणो महिमानमाप्नोति तस्माद्ब्रह्मणो महिमानमित्यु-पनिषत् ॥ ७१ ॥ तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमि-

घ्ममुरो वेदिर्लोमानि बर्हिर्वेदः शिखा हृदयं यूपः काम आज्यं मन्युः पशुस्तपोऽग्निर्दमः शम-
यिता दक्षिणा वाग्घोता प्राण उद्गाता चक्षुरध्वर्युर्मनो ब्रह्मा श्रोत्रमग्नीद्यावद्ध्रियते सा दीक्षा
यदश्नाति तद्धविर्यत्पिबति तदस्य सोमपानं यद्रमते तदुपसदो यत्संचरत्युपविशत्युत्तिष्ठते च
स प्रवर्ग्यो यन्मुखं तदाहवनीयो या व्याहृतिराहुतिर्यदस्य विज्ञानं तज्जुहोति ॥ यत्सायं
प्रातरत्ति तत्समिधं यत्प्रातर्मध्यंदिन ँ सायं च तानि सवनानि ये अहोरात्रे ते दर्श-
पूर्णमासौ येऽर्धमासाश्च मासाश्च ते चातुर्मास्यानि य ऋतवस्ते पशुबन्धा ये संवत्सराश्च
परिवत्सराश्च तेऽहर्गणाः सर्ववेदसंवा एतत्सत्रं यन्मरणं तदवभृथ एतद्वै जरामर्यम-
ग्निहोत्र ँ सत्रं य एवं विद्वानुदगयने प्रमीयते देवानामेव महिमानं गत्वादित्य-
स्य सायुज्यं गच्छत्यथ यो दक्षिणे प्रमीयते पितृणामेव महिमानं गत्वा चन्द्रमसः

सायुज्य ँ सलोकतामाप्नोत्येतौ वै सूर्याचन्द्रमसोर्महिमानौ ब्राह्मणो विद्वानभिजयति तस्माद्ब्रह्मणो महिमानमाप्नोति तस्माद्ब्रह्मणो महिमानम् ॥८०॥ सहनाववत्विति शान्तिः ॥ इति नारायणोपनिषत्समाप्ता ॥

अथ परमहंसोपनिषत् ॥ परमहंसोपनिषद्वेद्यापारसुखाकृति । त्रैपादश्रीरामतत्त्वं स्वमात्रमिति चिन्तये ॥ पूर्णमद इति शान्तिः ॥ हरिः ॐ ॥ अथ योगिनां परमहंसानां कोऽयं मार्गस्तेषां का स्थितिरिति नारदो भगवन्तमुपसमेत्योवाच तं भगवानाह योऽयं परमहंसमार्गो लोके दुर्लभतरो न तु बाहुल्यो यद्येको भवति स एव नित्यपूतस्थः स एव वेदपुरुष इति विदुषो मन्यन्ते महापुरुषो यच्चित्तं तत्सदा मय्येवावतिष्ठते तस्मादहं च तस्मिन्नेवावस्थीयतेऽसौ स्वपुत्रमित्रकलत्रबन्ध्वादीञ्छिखां यज्ञोप-

वीतं यागं सत्रं स्वाध्यायं च सर्वकर्माणि संन्यस्यायं ब्रह्माण्डं च हित्वा कौपीनं दण्ड-
माच्छादनं च स्वशरीरोपभोगार्थाय लोकस्यैवोपकारार्थाय च परिग्रहेत् तच्च न मुख्यो-
ऽस्ति कोऽयं मुख्य इति च यदयं मुख्यः॥ न दण्डं न कमण्डलुं न शिखां न यज्ञोप-
वीतं न चाच्छादनं चरति परमहंसो न शीतं न चोष्णं न सुखं न दुःखं न मानाव-
मान इति षडूर्मिवर्जितो न शब्दं न स्पर्शं न रूपं न रसं न गन्धं न च मनोऽप्येवं
निन्दागर्वमत्सरदम्भदर्पेच्छाद्वेषसुखदुःखकामक्रोधलोभमोहहर्षासूयाहंकारादींश्च हित्वा
स्ववपुः कुणपमिव दृश्यते यतस्तद्वपुरपध्वस्तसंशयविपरीतमिथ्याज्ञानानां यो हेतुस्तेन
नित्यनिवृत्तस्तं नित्यबोधस्तत्स्वयमेवावस्थितिस्तं शान्तमचलमद्वयानन्दविज्ञानघन ए-
वास्मि॥ तदेव मम परमं धाम तदेव शिखा तदेवोपवीतं च॥ परमात्मात्मनोरेकत्वज्ञा-

नेन तयोर्भेद एव विभ्रमः सा संध्या ॥ सर्वान्कामान्परित्यज्य अद्वैते परमे स्थितिः । ज्ञानदण्डो धृतो येन एकदण्डी स उच्यते । काष्ठदण्डो धृतो येन सर्वाशीर्ज्ञानवर्जितः॥ तितिक्षाज्ञानवैराग्यशमादिगुणवर्जितः ॥ भिक्षामात्रेण यो जीवेत्स पापी यतिवृत्तिहा । स याति नरकान्घोरान्महारौरवसंज्ञिकान् ॥ इदमन्तरं ज्ञात्वा स परमहंस आकाशाम्बरो न नमस्कारो न स्वाहाकारो न निन्दा न स्तुतिर्यादृच्छिको भवेत्स भिक्षुः ॥ नावाहनं न विसर्जनं न मन्त्रं न ध्यानं नोपासितं च न लक्ष्यं नालक्ष्यं न पृथङ्नापृथगहं न सत्त्वं न सर्वं चानिकेतः स्थिरमतिरेवं स भिक्षुः सौवर्णादीनां नैव परिग्रहेन्न लोकनं नावलोकनं च बाधको न चाबाधकः क इति चेत् बाधको-

१ एतदग्रे न स्वधाकारः इत्यधिकमन्यस्मिन्पुस्तके

ऽस्त्येव यस्माद्भिक्षुर्हिरण्यं रसेनं दृष्टं चेत्स ब्रह्महा भवेद्यस्माद्भिक्षुर्हिरण्यं रसेन स्पृष्टं चेत्स पौल्कसो भवेद्यस्माद्भिक्षुर्हिरण्यं रसेन ग्राह्यं चेत्स आत्महा भवेत्तस्माद्भिक्षुर्हिरण्यं रसेन न दृष्टं च न स्पृष्टं च न ग्राह्यं च सर्वे कामा मनोगता व्यावर्तन्ते दुःखे च नोद्विग्नः सुखे निःस्पृहस्त्यागो रागे सर्वत्र शुभाशुभयोरनभिस्नेहो न द्वेष्टि न मोदते च सर्वेषामिन्द्रियाणां गतिरुपरमते य आत्मन्येवावस्थीयते ॥ यत्पूर्णानन्दैकबोधस्तद्ब्रह्मैवाहमस्मीति कृतकृत्यो भवति कृतकृत्यो भवति ॥ पूर्णमद इति शान्तिः ॥ इति परमहंसोपनिषत्समाप्ता ॥

अथ ब्रह्मोपनिषत् ॥ सह नाववत्विति शान्तिः ॥ ब्रह्मकैवल्यजाबालश्वेताश्वो हंस आरुणिः । गर्भो नारायणो हंसो बिन्दुनादशिरः शिखा ॥ १ ॥ एतास्त्रयोदश

ॐ ॥ अथास्य पुरुषस्य चत्वारि स्थानानि भवन्ति । नाभिर्हृदयं कण्ठं मूर्धा च । तत्र चतुष्पादं ब्रह्म विभाति । जागरिते ब्रह्मा स्वप्ने विष्णुः सुषुप्तौ रुद्रस्तुरीयमक्षरम् । स आदित्यो विष्णुश्चेश्वरश्च । स्वयममनस्कमश्रोत्रमपाणिपादं ज्योतिर्विदितम् । यत्र लोका न लोका देवा न देवा वेदा न वेदा यज्ञा न यज्ञा माता न माता पिता न पिता स्नुषा न स्नुषा चाण्डालो न चाण्डालः पौष्कसो न पौष्कसः श्रमणो न श्रमणस्तापसो न तापस एकमेव तत्परं ब्रह्म विभाति निर्वाणम् । न तत्र देवा ऋषयः पितर ईशते प्रतिबुध्यः सर्वविद्येति । हृदिस्था देवताः सर्वा हृदि प्राणाः प्रतिष्ठिताः । हृदि प्राणाश्च ज्योतिश्च त्रिवृत्सूत्रं च तद्विदुरिति ॥ हृदि चैतन्ये तिष्ठति । यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥

सशिखं वपनं कृत्वा बहिःसूत्रं त्यजेद्बुधः । यदक्षरं परं ब्रह्म तत्सूत्रमिति धारयेत् ॥
सूचनात्सूत्रमित्याहुः सूत्रं नाम परं पदम् । तत्सूत्रं विदितं येन स विप्रो वेदपारगः ॥
येन सर्वमिदं प्रोतं सूत्रे मणिगणा इव । तत्सूत्रं धारयेद्योगी योगवित्तत्त्वदर्शिवान् ॥
बहिःसूत्रं त्यजेद्विद्वान्योगमुत्तममास्थितः । ब्रह्मभावमिदं सूत्रं धारयेद्यः स चेतनः ॥
धारणात्तस्य सूत्रस्य नोच्छिष्टो नाशुचिर्भवेत् । सूत्रमन्तर्गतं येषां ज्ञानयज्ञोपवीति-
नाम् ॥ ते वै सूत्रविदो लोके ते च यज्ञोपवीतिनः । ज्ञानशिखिनो ज्ञाननिष्ठा ज्ञानय-
ज्ञोपवीतिनः ॥ ज्ञानमेव परं तेषां पवित्रं ज्ञानमुच्यते । अग्नेरिव शिखा नान्या यस्य
ज्ञानमयी शिखा ॥ स शिखीत्युच्यते विद्वान्नेतरे केशधारिणः । कर्मण्यधिकृता ये तु
वैदिके ब्राह्मणादयः । तेभिर्धार्यमिदं सूत्रं क्रियाङ्गं तद्धि वै स्मृतम् ॥ शिखा ज्ञानमयी

यस्य उपवीतं च तन्मयम् । ब्राह्मण्यं सकलं तस्य इति ब्रह्मविदो विदुः ॥ इदं यज्ञो-
पवीतं तु परमं यत्परायणम् । स विद्वान्यज्ञोपवीती स्यात्स यज्ञस्तं यज्वनं विदुः ॥
एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः
साक्षी चेता केवलो निर्गुणश्च ॥ एको वशी सर्वभूतान्तरात्मैकं रूपं बहुधा यः करोति ।
तमात्मस्थं येनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥ आत्मानमरणिं कृत्वा
प्रणवं चोत्तरारणिम् । ध्याननिर्मथनाभ्यासाद्देवं पश्येन्निगूढवत् ॥ तिलेषु तैलं दधिनीव
सर्पिरापःस्रोतःस्वरणीषु चाग्निः । एवमात्मात्मनि जायतेऽसौ सत्येन तपसा योनुप-
श्यति ॥ ऊर्णनाभिर्यथा तन्तून्सृजते संहरत्यपि । जाग्रत्स्वप्ने तथा जीवो गच्छत्याग-
च्छते पुनः ॥ नेत्रस्थं जागरितं विद्यात्कण्ठे स्वप्नं समाविशेत् । सुषुप्तं हृदयस्थं तु

तुरीयं मूर्ध्नि संस्थितम् ॥ यतो वाचो निवर्तन्ते अप्राप्य मनसा सह । आनन्दमेतज्जीवस्य यज्ज्ञात्वा मुच्यते बुधः ॥ सर्वव्यापिनमात्मानं क्षीरे सर्पिरिवार्पितम् । आत्मविद्यातपोमूलं तद्ब्रह्मोपनिषत्पदं तद्ब्रह्मोपनिषत्पदमिति ॥ सह नाववत्विति शान्तिः ॥

इति ब्रह्मोपनिषत्समाप्ता ॥

अथामृतनादोपनिषत् ॥ अमृतनादोपनिषत्प्रतिपाद्यं पराक्षरम् । त्रैपदानन्दसाम्राज्यं हृदि मे भातु संततम् ॥ ओं सह नाववत्विति शान्तिः ॥ शास्त्राण्यधीत्य मेधावी अभ्यस्य च पुनः पुनः ॥ परमं ब्रह्म विज्ञाय उल्कावत्तान्यथोत्सृजेत् ॥ १ ॥ ओंकाररथमारुह्य विष्णुं कृत्वाथ सारथिम् । ब्रह्मलोकपदान्वेषी रुद्राराधनतत्परः ॥ २ ॥ तावद्रथेन गन्तव्यं यावद्रथपथिस्थितः । स्थाता रथपतिस्थानं रथमुत्सृज्य गच्छति ॥ ३ ॥

मात्रालिङ्गपदं त्यक्त्वा शब्दव्यञ्जनवर्जितम् । अस्वरेण मकारेण पदं सूक्ष्मं हि गच्छति ॥ ४ ॥ शब्दादि विषयान्पञ्च मनश्चैवातिचञ्चलम् । चिन्तयेदात्मनो रश्मीन्प्रत्याहारः स उच्यते ॥ ५ ॥ प्रत्याहारस्तथा ध्यानं प्राणायामोऽथ धारणा । तर्कश्चैव समाधिश्च षडङ्गो योग उच्यते ॥ ६ ॥ यथा पर्वतधातूनां दह्यन्ते धमनान्मलाः । तथेन्द्रियकृता दोषा दह्यन्ते प्राणधारणात् ॥ ७ ॥ प्राणायामैर्देहेद्दोषान्धारणाभिश्च किल्बिषम् । प्रत्याहारेण संसर्गान्ध्यानेनानीश्वरान्गुणान् ॥ ८ ॥ किल्बिषं हि क्षयं नीत्वा रुचिरं चैव चिन्तयेत् ॥ ९ ॥ रुचिरं रेचकं चैव वायोराकर्षणं तथा । प्राणायामास्त्रयः प्रोक्ता रेचपूरककुम्भकाः ॥ १० ॥ सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह । त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥ ११ ॥ उत्क्षिप्य वायुमाकाशं शून्यं

कृत्वा निरात्मकम् । शून्यभावे नियुञ्जीयाद्रेचकस्येति लक्षणम् ॥ १२ ॥ वक्त्रेणोत्पल-
नालेन तोयमाकर्षयेन्नरः । एवं वायुर्गृहीतव्यः पूरकस्येति लक्षणम् ॥ १३ ॥ नोच्छ्वसेन्न
च निश्वसेन्नैव गात्राणि चालयेत् । एवं भावं नियुञ्जीयात्कुम्भकस्येति लक्षणम् ॥ १४ ॥
अन्धवत्पश्य रूपाणि शब्दं बधिरवच्छृणु । काष्ठवत्पश्य वै देहं प्रशान्तस्येति लक्ष-
णम् ॥ १५ ॥ मनः संकल्पकं ध्यात्वा संक्षिप्यात्मनि बुद्धिमान् । धारयित्वा तथा-
त्मानं धारणा परिकीर्तिता ॥ १६ ॥ आगमस्याविरोधेन ऊहनं तर्क उच्यते ॥ समं
मन्येत यल्लब्ध्वा स समाधिः प्रकीर्तितः ॥ १७ ॥ भूमौ दर्भासने रम्ये सर्वदोषविव-
र्जिते । कृत्वा मनोमयीमृक्षां जस्वा वै रथमण्डले ॥ १८ ॥ पद्मकं स्वस्तिकं वापि
भद्रासनमथापि वा । बध्वा योगासनं सम्यगुत्तराभिमुखः स्थितः ॥ १९ ॥ नासिकापुट-

मङ्गुल्या पिधायैकेन मारुतम् । आकृष्य धारयेदग्निं शब्दमेव विचिन्तयेत् ॥ २० ॥
ओमित्येकाक्षरं ब्रह्म ओमित्येतेन रेचयेत् । दिव्यमन्त्रेण बहुधा कुर्यादामलमुक्तये
॥ २१ ॥ पश्चाद्ध्यायीत पूर्वोक्तक्रमशो मन्त्रविद्बुधः । स्थूलादिस्थूलसूक्ष्मं च नाभेरूर्ध्व-
मुपक्रमः ॥ २२ ॥ तिर्यगूर्ध्वमधोदृष्टिं विहाय च महामतिः । स्थिरस्थायी विनिष्कम्पः
सदा योगं समभ्यसेत् ॥ २३ ॥ नालमात्रविनिष्कम्पो धारणायोजनं तथा । द्वादश-
मात्रो योगस्तु कालतो नियमः स्मृतः ॥ २४ ॥ अघोषमव्यञ्जनमस्वरं च यत्तालु-
कण्ठोष्ठमनासिकं च यत् । अरेफजातमुभयोष्मवर्जितं यदक्षरं न क्षरते कथंचित्
॥ २५ ॥ येनासौ गच्छते मार्गं प्राणस्तेनाभिगच्छति । अतस्तमभ्यसेन्नित्यं यन्मार्गग-
मनाय वै ॥ २६ ॥ हृद्द्वारं वायुद्वारं च मूर्ध्नि द्वारमथापरम् । मोक्षद्वारं बिलं चैव सुषिरं

मण्डलं विदुः ॥ २७ ॥ भयं क्रोधमथालस्यमतिस्वप्नातिजागरम् । अत्याहारमनाहारं नित्यं योगी विवर्जयेत् ॥ २८ ॥ अनेन विधिना सम्यङ्नित्यमभ्यस्यते क्रमात् । स्वयमुत्पद्यते ज्ञानं त्रिभिर्मासैर्न संशयः ॥२९॥ चतुर्भिः पश्यते देवान्पञ्चभिर्विततक्रमान् । इच्छयाप्नोति कैवल्यं षष्ठे मासि न संशयः ॥ ३० ॥ पार्थिवः पञ्चमात्रस्तु चतुर्मात्रस्तु वारुणः । आग्नेयस्तु त्रिमात्रोऽसौ वायव्यस्तु द्विमात्रकः ॥ ३१ ॥ एकमात्रस्तथाकाशो ह्यमात्रं तु विचिन्तयेत् । संधिं कृत्वा तु मनसा चिन्तयेदात्मनात्मनि ॥ ३२ ॥ त्रिंशत्पर्वाङ्गुलः प्राणो यत्र प्राणैः प्रतिष्ठितः । एष प्राण इति ख्यातो बाह्यप्राणस्य गोचरः ॥ ३३ ॥ अशीतिश्च शतं चैव सहस्राणि त्रयोदश । लक्षश्चैको विनिश्वासो अहोरात्रप्रमाणतः ॥ ३४ ॥ प्राण आद्यो हृदि स्थाने अपानस्तु पुनर्गुदे । समानो नाभि-

देशे तु उदानः कण्ठमाश्रितः ॥ ३५ ॥ व्यानः सर्वेषु चाङ्गेषु व्याप्य तिष्ठति सर्वदा अथ वर्णास्तु पञ्चानां प्राणादीनामनुक्रमात् ॥ ३६ ॥ रक्तवर्णो मणिप्रख्यः प्राणवायुः प्रकीर्तितः । अपानस्तस्य मध्ये तु इन्द्रगोपसमप्रभः ॥ ३७ ॥ समानस्तु द्वयोर्मध्ये गोक्षीरधवलप्रभः । आपाण्डर उदानश्च व्यानो ह्यर्चिःसमप्रभः ॥ ३८ ॥ यस्येदं मण्डलं भित्त्वा मारुतो याति मूर्धनि । यत्र यत्र म्रियेद्वापि न स भूयोऽभिजायते न स भूयोऽभिजायत इत्युपनिषत्॥३९॥ओं सह नाववत्विति शान्तिः॥इत्यमृतनादोपनिषत्समाप्ता॥

अथाथर्वशिरउपनिषत् ॥ अथर्वशिरसामर्थमनर्थप्रोतवाचकम् ॥ सर्वाधारमनाधारं स्वमात्रत्रैपदाक्षरम् ॥ ॐ भद्रं कर्णेभिरिति शान्तिः ॥ ओं देवा ह वै स्वर्गलोकमायँस्ते रुद्रमपृच्छन् को भवानिति । सोऽब्रवीदहमेकः प्रथममासं वर्त्तामि च

भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्त इति। सोऽन्तरादन्तरं प्राविशत् दिशश्चा-
न्तरं प्राविशित् सोऽहं नित्यानित्योऽहं व्यक्ताव्यक्तो ब्रह्माब्रह्माहं प्राञ्चः प्रत्यञ्चोऽहं दक्षि-
णाञ्च उदञ्चोऽहम् अधश्चोर्द्ध्वं चाहं दिशश्च प्रतिदिशश्चाहं पुमानपुमान् स्त्रियश्चाहं गायत्र्यहं
सावित्र्यहं त्रिष्टुब्जगत्यनुष्टुप्चाहं छन्दोऽहं गार्हपत्यो दक्षिणाग्निराहवनीयोऽहं सत्योऽहं
गौरहं गौर्य्यहमृगहं यजुरहं सामाहमथर्वाङ्गिरसोऽहं ज्येष्ठोऽहं श्रेष्ठोऽहं वरिष्ठोऽहमा-
पोऽहं तेजोऽहं गुह्योऽहमरण्योऽहमक्षरमहं क्षरमहं पुष्करमहं पवित्रमहमुग्रं च मध्यं च
बहिश्च पुरस्ताज्ज्योतिरित्यहमेव सर्वेभ्यो मामेव स सर्वः समायो मां वेद स
सर्वान्देवान्वेद सर्वांश्च वेदान् साङ्गानपि ब्रह्म ब्राह्मणैश्च गां गोभिर्ब्राह्मणान् ब्राह्मणेन
हविर्हविषा आयुरायुषा सत्येन सत्यं धर्मेण धर्मं तर्पयामि स्वेन तेजसा। ततो ह वै ते

देवा रुद्रमपृच्छन् ते देवा रुद्रमपश्यन् ते देवा रुद्रमध्यायन् । ततो देवा ऊर्द्ध्वबाहवो रुद्रं स्तुवन्ति ॥ १ ॥ ओं यो वै रुद्रः स भगवान् यश्च ब्रह्मा तस्मै वै नमोनमः ॥१॥ यो वै रुद्रः स भगवान् यश्च विष्णुस्तस्मै वै नमोनमः ॥ २ ॥ यो वै रुद्रः स भगवान् यश्च स्कन्दस्तस्मै वै नमोनमः ॥ ३ ॥ यो वै रुद्रः स भगवान् यश्चेन्द्रस्तस्मै वै नमोनमः॥४॥ यो वै रुद्रः स भगवान् यश्चाग्निस्तस्मै वै नमोनमः ॥ ५ ॥ यो वै रुद्रः स भगवान् यश्च वायुस्तस्मै वै नमोनमः ॥ ६ ॥ यो वै रुद्रः स भगवान् यश्च सूर्यस्तस्मै वै नमोनमः ॥ ७ ॥ यो वै रुद्रः स भगवान् यश्च सोमस्तस्मै वै नमोनमः ॥ ८ ॥ यो वै रुद्रः स भगवान् ये चाष्टौ ग्रहास्तस्मै वै नमोनमः ॥ ९ ॥ यो वै रुद्रः सं भगवान् ये चाष्टौ प्रतिग्रहास्तस्मै वै नमोनमः ॥ १० ॥ यो वै रुद्रः स भगवान् यच्च भूस्तस्मै

वै नमोनमः ॥ ११ ॥ यो वै रुद्रः स भगवान् यच्च भुवस्तस्मै वै नमोनमः ॥ १२ ॥ यो वै रुद्रः स भगवान् यच्च स्वस्तस्मै वै नमोनमः ॥ १३ ॥ यो वै रुद्रः स भगवान् यच्च महस्तस्मै वै नमोनमः ॥ १४ ॥ यो वै रुद्रः स भगवान् या च पृथिवी तस्मै वै नमोनमः ॥ १५ ॥ यो वै रुद्रः स भगवान् यच्चान्तरिक्षं तस्मै वै नमोनमः ॥ १६ ॥ यो वै रुद्रः स भगवान् या च द्यौस्तस्मै वै नमोनमः ॥ १७ ॥ यो वै रुद्रः स भगवान् याश्चापस्तस्मै वै नमोनमः ॥ १८ ॥ यो वै रुद्रः स भगवान् यच्च तेजस्तस्मै वै नमोनमः ॥ १९ ॥ यो वै रुद्रः स भगवान् यश्च कालस्तस्मै वै नमोनमः ॥ २० ॥ यो वै रुद्रः स भगवान् यश्च यमस्तस्मै वै नमोनमः ॥ २१ ॥ यो वै रुद्रः स भगवान् यश्च मृत्युस्तस्मै वै नमोनमः ॥ २२ ॥ यो वै रुद्रः स भगवान् यच्चामृतं तस्मै

वै नमोनमः ॥ २३ ॥ यो वै रुद्रः स भगवान् यच्चाकाशं तस्मै वै नमोनमः ॥ २४॥ यो वै रुद्रः स भगवान् यच्च विश्वं तस्मै वै नमोनमः ॥ २५ ॥ यो वै रुद्रः स भगवान् यच्च स्थूलं तस्मै वै नमोनमः ॥ २६ ॥ यो वै रुद्रः स भगवान् यच्च सूक्ष्मं तस्मै वै नमोनमः ॥ २७ ॥ यो वै रुद्रः स भगवान् यच्च शुक्लं तस्मै वै नमोनमः ॥ २८ ॥ यो वै रुद्रः स भगवान् यच्च कृष्णं तस्मै वै नमोनमः ॥ २९ ॥ यो वै रुद्रः स भगवान् यच्च कृत्स्नं तस्मै वै नमोनमः ॥ ३० ॥ यो वै रुद्रः स भगवान् यच्च सत्यं तस्मै वै नमोनमः ॥ ३१ ॥ यो वै रुद्रः स भगवान् यच्च सर्वं तस्मै वै नमोनमः ॥ ३२ ॥ २ ॥ भूस्ते आदिर्मध्यं भुवः स्वस्ते शीर्षं विश्वरूपोऽसि ब्रह्मैकस्त्वं द्विधा त्रिधा वृद्धिस्त्वं शान्तिस्त्वं पुष्टिस्त्वं हुतमहुतं दत्तमदत्तं सर्वम-

सर्वं विश्वमविश्वं कृतमकृतं परमपरं परायणं च त्वम्। अपाम सोममममृता अभूमागन्म ज्योतिरविदाम देवान्। किं नूनमस्मान् कृणवदरातिः। किमु धूर्तिरमृतं मर्त्यस्य सोमसूर्यपुरस्तात् सूक्ष्मः पुरुषः। सर्वं जगद्धितं वा एतदक्षरं प्राजापत्यं सूक्ष्मं सौम्यं पुरुषं ग्राह्यमग्राह्येण भावं भावेन सौम्यं सौम्येन सूक्ष्मं सूक्ष्मेण वायव्यं वायव्येन ग्रसति स्वेन तेजसा तस्मादुपसंहर्त्रे महाग्रासाय वै नमोनमः॥ हृदिस्था देवताः सर्वा हृदि प्राणा प्रतिष्ठिताः। हृदि त्वमसि यो नित्यं तिस्रो मात्राः परस्तु सः॥ तस्योत्तरतः शिरो दक्षिणतः पादौ य उत्तरतः स ओङ्कारः य ओङ्कारः स प्रणवः यः प्रणवः स सर्वव्यापी यः सर्वव्यापी सोऽनन्तः योऽनन्तस्तत्तारं यत्तारं तत्सूक्ष्मं यत्सूक्ष्मं तच्छुक्लं यच्छुक्लं तद्वैद्युतं यद्वैद्युतं तत् परं ब्रह्म यत्परं ब्रह्म स एकः य एकः स रुद्रः यो रुद्रः स ईशानः य ईशानः स भगवान्

महेश्वर॥ ३॥ अथ कस्मादुच्यत ओङ्कारो यस्मादुच्चार्यमाण एव प्राणानूर्ध्वमुत्क्रामयति तस्मादुच्यते ओङ्कारः।अथ कस्मादुच्यते प्रणवः यस्मादुच्चार्यमाण एव ऋग्यजुःसामाथर्वाङ्गिरसं ब्रह्म ब्राह्मणेभ्यः प्रणामयति नामयति च तस्मादुच्यते प्रणवः। अथ कस्मादुच्यते सर्वव्यापी यस्मादुच्चार्यमाण एव सर्वाँल्लोकान्व्याप्नोति स्नेहो यथा पललपिण्डमिव शान्तरूपमोतप्रोतमनुप्राप्तो व्यतिषक्तश्च तस्मादुच्यते सर्वव्यापी। अथ कस्मादुच्यतेऽनन्तः यस्मादुच्चार्यमाण एव तिर्यगूर्ध्वमधस्ताच्चास्यान्तो नोपलभ्यते तस्मादुच्यतेऽनन्तः। अथ कस्मादुच्यते तारं यस्मादुच्चार्यमाण एव गर्भजन्मव्याधिजरामरणसंसारमहाभयात् तारयति त्रायते च तस्मादुच्यते तारम्। अथ कस्मादुच्यते शुक्लं यस्मादुच्चार्यमाण एव क्लन्दते क्लामयति च तस्मादुच्यते शुक्लम्। अथ कस्मादुच्यते

सूक्ष्मं यस्मादुच्चार्यमाण एव सूक्ष्मो भूत्वा शरीराण्यधितिष्ठति सर्वाणि चाङ्गान्यभिमृशति तस्मादुच्यते सूक्ष्मम् । अथ कस्मादुच्यते वैद्युतं यस्मादुच्चार्यमाण एव व्यक्ते महति तमसि द्योतयति तस्मादुच्यते वैद्युतम् । अथ कस्मादुच्यते परं ब्रह्म यस्मात् परमपरं परायणं च बृहद्बृहत्या बृहयति तस्मादुच्यते परं ब्रह्म । अथ कस्मादुच्यते एकः यः सर्वान् प्राणान् सम्भक्ष्य सम्भक्षणेनाजः संसृजति विसृजति तीर्थमेके व्रजन्ति तीर्थमेके दक्षिणाः प्रत्यञ्च उदञ्चः प्राञ्चोऽभिव्रजन्त्येके तेषां सर्वेषामिह सङ्गतिः । साकं स एको भूतश्चरति प्रजानां तस्मादुच्यते एकः । अथ कस्मादुच्यते रुद्रः यस्मादृषिभिर्नान्यैर्भक्तैर्द्रुतमस्य रूपमुपलभ्यते तस्मादुच्यते रुद्रः । अथ कस्मादुच्यते ईशानः यः सर्वान् देवानीशते ईशानीभिर्जननीभिश्च परमशक्तिभिः । अभित्वा शूरणो नुमो

दुग्धा इव धेनवः । ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्रतस्थुष इति तस्मादुच्यते ईशानः । अथ कस्मादुच्यते भगवान् महेश्वरः यस्माद्भक्ताज्ञानेन भजत्यनुगृह्णाति च वाचं संसृजति विसृजाति च सर्वान् भावान् परित्यज्यात्मज्ञानेन योगैश्वर्येण महति महीयते तस्मादुच्यते भगवान् महेश्वरः। तदेतद्रुद्रचरितम् ॥ ४ ॥ एको ह देवः प्रदिशोनुसर्वाः पूर्वो ह जातः स उ गर्भे अन्तः । स एव जातः स जनिष्यमाणः प्रत्यङ्जनास्तिष्ठति सर्वतोमुखः ॥ एको रुद्रो न द्वितीयाय तस्मै य इमाँल्लोकानीशत ईशानीभिः । प्रत्यङ्जनास्तिष्ठति सञ्चुकोचान्तकाले संसृज्य विश्वा भुवनानि गोप्ता ॥ यो योनिं योनिमधितिष्ठत्येको येनेदं सर्वं विचरतिं सर्वम् । तमीशानं पुरुषं देवमीड्यं निचाय्येमां शान्तिमत्यन्तमेति ॥ क्षमां हित्वा हेतुजालस्य मूलं बुद्ध्या सञ्चितं स्थापयित्वा तु रुद्रे।

रुद्रमेकत्वमाहुः ॥ शाश्वतं वै पुराणमिषमूर्जेण पशवोऽनुनामयन्तं मृत्युपाशान् । तदेतेनात्मन्नेतेनार्धचतुर्थेन मात्रेण शान्तिं संसृजाति पशुपाशविमोक्षणम् । या सा प्रथमा मात्रा ब्रह्मदेवत्या रक्ता वर्णेन यस्तां ध्यायते नित्यं स गच्छेद्ब्रह्मपदम् । या सा द्वितीया मात्रा विष्णुदेवत्या कृष्णा वर्णेन यस्तां ध्यायते नित्यं स गच्छेद्वैष्णवं पदम् । या सा तृतीया मात्रा ईशानदेवत्या कपिला वर्णेन यस्तां ध्यायते नित्यं स गच्छेदैशानं पदम् । या सार्धचतुर्थी मात्रा सर्वदेवत्याऽव्यक्तीभूता खं विचरति शुद्धा स्फटिकसन्निभा वर्णेन यस्तां ध्यायते नित्यं स गच्छेत्पदमनामयम् । तदेतदुपासीत मुनयो वाग्वदन्ति न तस्य ग्रहणमयं पन्था विहित उत्तरेण येन देवा यान्ति येन पितरो येन ऋषयः परमपरं परायणं चेति ॥ वालाग्रमात्रं हृदयस्य मध्ये विश्वं देवं जातरूपं वरे-

प्यम् । तमात्मस्थं ये तु पश्यन्ति धीरास्तेषां शान्तिर्भवति नेतरेषाम् ॥ यस्मिन् क्रोधं-
यां च तृष्णां क्षमां चाक्षमां हित्वा हेतुजालस्य मूलम् । बुद्ध्या सञ्चितं स्थापयित्वा तु रुद्रे
रुद्रमेकत्वमाहुः ॥ रुद्रो हि शाश्वतेन वै पुराणेनेषमूर्जेण तपसा नियन्ताग्निरिति
भस्म वायुरिति भस्म जलमिति भस्म स्थलमिति भस्म व्योममिति भस्म सर्वं ह वा
इदं भस्म मन एतानि चक्षूंषि यस्माद्व्रतमिदं पाशुपतं यद्भस्म नाङ्गानि संस्पृशेत्
तस्माद्ब्रह्म तदेतत् पाशुपतं पशुपाशविमोक्षणाय ॥ ५ ॥ योऽग्नौ रुद्रो योऽप्स्वन्तर्य
ओषधीर्वीरुध आविवेश । य इमा विश्वा भुवनानि चक्लृपे तस्मै रुद्राय नमोऽस्त्वग्नये ।
यो रुद्रोऽग्नौ यो रुद्रोऽप्स्वन्तर्यो रुद्र ओषधीवीरुध आविवेश । यो रुद्र इमा विश्वा
भुवनानि चक्लृपे तस्मै रुद्राय नमोनमः । यो रुद्रोऽप्सु यो रुद्र ओषधिषु यो रुद्रो

वनस्पतिषु । येन रुद्रेण जगदूर्ध्वं धारितं पृथिवी द्विधा त्रिधा धर्ता धारिता नागा येऽन्तरिक्षे तस्मै रुद्राय वै नमोनमः । मूर्द्धानमस्य संसेव्याऽथर्वा हृदयं च यत् । मस्तिष्कादूर्ध्वं प्रेरयत्यवमानोऽधिशीर्षतः ॥ तद्वा अथर्वणः शिरो देवकोशः समुज्झितः । तत्प्राणोऽभिरक्षति शिरोऽन्तमथो मनः ॥ न च दिवो देवजनेन गुप्ता न चान्तरिक्षाणि न च भूम इमाः । यस्मिन्निदं सर्वमोतप्रोतं तस्मादन्यन्न परं किंचनास्ति ॥ न तस्मात्पूर्वं न परं तदस्ति न भूतं नोत भव्यं यदासीत् । सहस्रपादेकमूर्ध्ना व्याप्तं स एवेदमावरीवर्त्ति भूतम् ॥ अक्षरात्संजायते कालः कालाद्व्यापक उच्यते ॥ व्यापको हि भगवान् रुद्रो भोगायमानो यदा शेते रुद्रस्तदा संहार्यते प्रजाः । उच्छ्वसिते तमो भवति तमस आपोऽप्स्वङ्गुल्या मथिते मथितं शिशिरे शिशिरं मथ्यमानं

९४

फेनं भवति फेनादण्डं भवत्यण्डाद् ब्रह्मा भवति ब्रह्मणो वायुः वायोरोङ्कारः ओङ्कारात् सावित्री सावित्र्या गायत्री गायत्र्या लोका भवन्ति। अर्चयन्ति तपः सत्यं मधु क्षरन्ति यद् ध्रुवम् । एतद्धि परमं तपः । आपोज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरों नम इति ॥ ६ ॥ य इदमथर्वशिरो ब्राह्मणोऽधीते अश्रोत्रियः श्रोत्रियो भवति अनुपनीत उपनीतो भवति सोऽग्निपूतो भवति स वायुपूतो भवति स सूर्यपूतो भवति स सोमपूतो भवति स सत्यपूतो भवति स सर्वैर्देवैर्ज्ञातो भवति स सर्वैर्वेदैरनुध्यातो भवति स सर्वेषु तीर्थेषु स्नातो भवति तेन सर्वैः क्रतुभिरिष्टं भवति गायत्र्याः षष्टिसहस्राणि जप्तानि भवन्ति इतिहासपुराणानां रुद्राणां शतसहस्राणि जप्तानि भवन्ति । प्रणवानामयुतं जप्तं भवति । स चक्षुषः पङ्क्तिं पुनाति । आ सप्तमात्पुरुषयुगान् पुनाती-

त्याह भगवानथर्वशिरः सकृज्जस्वैव शुचिः स पूतः कर्मण्यो भवति । द्वितीयं जप्त्वा गणाधिपत्यमवाप्नोति । तृतीयं जस्वैवमेवानुप्रविशत्यों सत्यमों सत्यमों सत्यम् ॥
इत्यथर्वशिरउपनिषत्समाप्ता ॥

**अथाथर्वशिखोपनिषत्** ॥ ओंकारार्थतया भातं तुर्योंकाराग्रभासुरम् । तुर्यतुर्यत्रिपाद्रामं स्वमात्रं कलयेऽन्वहम् ॥ ॐ भद्रं कर्णेभिरिति शान्तिः ॥ ॐ अथहैनं पैप्पलादोऽङ्गिराः सनत्कुमारश्चाथर्वणमुवाच भगवन् किमादौ प्रयुक्तं ध्यानं ध्यायितव्यं किं तद्ध्यानं को वा ध्याता कश्च ध्येयः स एभ्योऽथर्वाः प्रत्युवाच । ओमित्येदक्षरमादौ प्रयुक्तं ध्यानं ध्यायितव्यमित्येतदक्षरं परं ब्रह्मास्य पादाश्चत्वारो वेदाश्चतुष्पादिदमक्षरं परं ब्रह्म । पूर्वास्य मात्रा पृथिव्यकारः ऋग्भिर्ऋग्वेदो ब्रह्मा वसवो गायत्री गार्हपत्यः ।

द्वितीयान्तारिक्षं स उकारः स यजुर्भिर्यजुर्वेदो विष्णुरुद्रास्त्रिष्टुब्दक्षिणाग्निः । तृतीया द्यौः स मकारः स सामभिः सामवेदो रुद्रा आदित्या जगत्याहवनीयः । यावसानेऽस्य चतुर्थ्यर्धमात्रा सा सोमलोक ओंकारः साथर्वणमन्त्रैरथर्ववेदः संवर्तकोऽग्निर्मरुतो विराडे-कर्षिर्भास्वतीस्मृताः । प्रथमा रक्तपीता महद्ब्रह्मदैवत्या । द्वितीया विद्युमती कृष्णा विष्णुदैवत्या । तृतीया शुभाशुभा शुक्ला रुद्रदैवत्या । यावसानेऽस्य चतुर्थ्यर्धमात्रा सा विद्युमती सर्ववर्णा पुरुषदैवत्या । स एष ह्योंकारश्चतुरक्षरश्चतुष्पादश्चतुःशिरश्चतुरर्धमात्रः स्थूल-मेतद्ध्रस्वदीर्घप्लुत इति ॥ ओं ओं ओं इति त्रिरुक्त्वा चतुर्थः शान्त आत्माप्लुतप्रण-वप्रयोगेण समस्तमोमिति प्रयुक्त आत्मज्योतिः सकृदावर्तते सकृदुच्चारितमात्रः स एष ऊर्ध्वमुन्नामयतीत्योंकारः । प्राणान्सर्वान्प्रलीयत इति प्रलयः प्राणान्सर्वान्परमात्मनि प्र-

णामयतीत्येतस्मात्प्रणवः। चतुर्थावस्थित इति सर्वदेववेदयोनिः सर्ववाच्यवस्तु प्रणवात्म-
कम् ॥ १ ॥ देवाश्चेति संधत्तां सर्वेभ्यो दुःखभयेभ्यः संतारयतीति तारणात्तारः । सर्वे
देवाः संविशन्तीति विष्णुः । सर्वाणि बृहयतीति ब्रह्मा। सर्वेभ्योऽन्तःस्थानेभ्यो ध्येयेभ्यः
प्रदीपवत्प्रकाशयतीति प्रकाशः । प्रकाशेभ्यः सदोमित्यन्तः शरीरे विद्युद्वद्द्योतयति मुहुर्मु-
हुरिति विद्युद्वत्प्रतीयाद्दिशं दिशं भित्वा सर्वाल्लोकान् व्याप्नोति व्यापयतीति व्यापनाद्व्यापी
महादेवः ॥ २ ॥ पूर्वास्य मात्रा जागर्ति जागरितं द्वितीया स्वप्नं तृतीया सुषुप्तिश्चतुर्थी
तुरीयं मात्रा मात्राः प्रतिमात्रागताः सम्यक्समस्तानपि पादाञ्जयतीति स्वयंप्रकाशः स्वयं
ब्रह्म भवतीत्येष सिद्धिकर एतस्माद्ध्यानादौ प्रयुज्यते । सर्वकरणोपसंहारत्वाद्धार्यधा-
रणाद्ब्रह्म तुरीयम् । सर्वकरणानि मनसि संप्रतिष्ठाप्य ध्यानं विष्णुः प्राणं मनसि सह

करणैः संप्रतिष्ठाप्य ध्याता रुद्रः प्राणं मनसि सह करणैर्नादान्ते परमात्मनि संप्रतिष्ठाप्य ध्यायीतेशानं प्रध्यायितव्यं सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते सर्वाणि चेन्द्रियाणि सह भूतैर्न कारणं कारणानां ध्याता कारणं तु ध्येयः सर्वैश्वर्यसंपन्नः सर्वेश्वरः शंभुराकाशमध्ये ध्रुवं स्तब्ध्वाधिकं क्षणमेकं क्रतुशतस्यापि चतुःसप्तत्या यत्फलं तदवाप्नोति कृत्स्नमोंकारगतिं च सर्वध्यानयोगज्ञानानां यत्फलमोंकारो वेद पर ईशो वा शिव एको ध्येयः शिवंकरः सर्वमन्यत्परित्यज्य समास्ताथर्वशिखैतामधीत्य द्विजो गर्भवासाद्विमुक्तो विमुच्यत एतामधीत्य द्विजो गर्भवासाद्विमुक्तो विमुच्यत इत्योंसत्यमित्युपनिषत् ॥ ॐ भद्रं कर्णेभिरिति शान्तिः ॥ इत्यथर्वशिखोपनिषत्समाप्ता ॥

अथ मैत्रायण्युपनिषत् ॥ वैराग्योत्थभक्तियुक्तब्रह्ममात्रप्रबोधतः । यत्पदं मुनयो यान्ति तत्त्रैपदमहं महः ॥ आप्यायन्त्विति शान्तिः ॥ मैत्रायणी कौषितकी बृहज्जाबालतापनी । कालाग्निरुद्रमैत्रेयी सुबालक्षुरिमन्त्रिका ॥ ॐ बृहद्रथो ह वै नाम राजा राज्ये ज्येष्ठं पुत्रं निधापयित्वेदमशाश्वतं मन्यमानः शारीरं वैराग्यमुपेतोऽरण्यं निर्जगाम स तत्र परमं तप आस्थायादित्यमीक्षमाण ऊर्ध्वबाहुस्तिष्ठत्यन्ते सहस्रस्य मुनिरन्तिकमाजगामाग्निरिवाधूमकस्तेजसा निर्दहन्निवात्मविद्भगवाञ्छाकायन्य उत्तिष्ठोत्तिष्ठ वरं वृणीष्वेति राजानमब्रवीत्स तस्मै नमस्कृत्योवाच भगवन्नाहमात्मवित्त्वं तत्त्वविच्छृणुमो वयं स त्वं नो ब्रूहीत्येतद्वृतं पुरस्तादशक्यं मा पृच्छ प्रश्नमैक्ष्वाकान्यान्कामान्वृणीष्वेति शाकायन्यस्य चरणावभिमृश्यमानो राजेमां गाथां जगाद ॥ १ ॥

भगवन्नस्थिचर्मस्नायुमज्जामांसशुक्रशोणितश्लेष्माश्रुदूषिते विण्मूत्रवातपित्तकफसंघाते दुर्गन्धे निस्सारेऽस्मिञ्छरीरे किं कामोपभोगैः ॥ २ ॥ कामक्रोधलोभभयविषादेर्ष्येष्टवियोगानिष्टसंप्रयोगक्षुत्पिपासाजरामृत्युरोगशोकाद्यैरभिहतेऽस्मिञ्छरीरे किं कामोपभोगैः ॥ ३ ॥ सर्वं चेदं क्षयिष्णु पश्यामो यथेमे दंशमशकादयस्तृणवन्नश्यतयोद्भूतप्रध्वंसिनः ॥ ४ ॥ अथ किमेतैर्वा परेऽन्ये महाधनुर्धराश्चक्रवर्तिनः केचित्सुद्युम्नभूरिद्युम्नेन्द्रद्युम्नकुवलयाश्वयौवनाश्ववद्ध्रियाश्वाश्वपतिः शशबिन्दुर्हरिश्चन्द्रोऽम्बरीषो ननूक्तस्वयातिर्ययातिरनरण्योक्षसेनोत्थमरुत्तभरतप्रभृतयो राजानो मिषतो बन्धुवर्गस्य महतीं श्रियं त्यक्त्वास्माल्लोकादमुं लोकं प्रयान्ति ॥ ५ ॥ अथ किमेतैर्वा परेऽन्ये गन्धर्वासुरयक्षराक्षसभूतगणपिशाचोरगग्रहादीनां निरोधनं पश्यामः ॥ ६ ॥

अथ किमेतैर्वान्यानां शोषणं महार्णवाना शिखरिणा प्रपतनं ध्रुवस्य प्रचलनं स्थानं वा तरूणां निमज्जनं पृथिव्या स्थानादपसरणं सुराणां सोऽहमित्येतद्विधेऽस्मिन्संसारे किं कामोपभोगैर्यैरेवाश्रितस्यासकृदिहावर्त्तनं दृश्यत इत्युद्धर्तुमर्हसीत्यन्धोदपानस्थो भेक इवाहमस्मिन् संसारे भगवंस्त्वं नो गतिस्त्वं नो गतिः॥ ७ ॥ इति प्रथमः प्रपाठकः ॥ अथ भगवाञ्छाकायन्यः सुप्रीतोऽब्रवीद्राजानं महाराज बृहद्रथेक्ष्वाकुवंशध्वजशीर्षात्मजः कृतकृत्यस्त्वं मरुन्नाम्नो विश्रुतोऽसीत्ययं वा व खल्वात्मा ते कतमो भगवान्वर्ण्य इति तं होवाचेति ॥ १ ॥ य एषो बाह्यावष्टम्भनेनोर्ध्वमुत्क्रान्तो व्यथमानोऽव्यथमानस्तमः प्रणुदत्येष आत्मेत्याह भगवानथ य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाचतैदमृतम-

भयमेतद्ब्रह्मेति ॥ २ ॥ अथ खल्वियं ब्रह्मविद्या सर्वोपनिषद्विद्या वा राजन्नस्माकं भगवता मैत्रेयेण व्याख्याताहं ते कथयिष्यामीत्यथापहतपाप्मानास्तिग्मतेजस ऊर्ध्व-रेतसो वालखिल्या इति श्रूयन्तेऽथैते प्रजापतिमब्रुवन्भगवन् शकटमिवाचेतनमिदं शरीरं कस्यैष खल्वीदृशो महिमातीन्द्रियभूतस्य येनैतद्विधमिदं चेतनवत्प्रतिष्ठापितं प्रचोदयितास्य को भगवन्नेतदस्माकं ब्रूहीति तान्होवाच ॥ ३ ॥ यो ह खलु वा चोपरिस्थः श्रूयते स एव वा एष शुद्धः पूतः शून्यः शान्तो प्राणोऽनीशात्माऽनन्तोऽक्षय्यः स्थिरः शाश्व-तोऽजः स्वतन्त्रः स्वे महिम्नि तिष्ठत्यनेनेदं शरीरं चेतनवत्प्रतिष्ठापितं प्रचोदयिता चैषोऽस्ये-ति ते होचुर्भगवन् कथमनेनेदृशेनानिच्छेनैतद्विधमिदं चेतनवत्प्रतिष्ठापितं प्रचोदयिता चैषोऽस्येति कथमिति तान्होवाच ॥ ४ ॥ स वा एष सूक्ष्मोऽग्राह्योऽदृश्यः पुरुषसंज्ञिको

बुद्धिपूर्वमिहैवावर्ततेंऽशेन सुषुप्तस्यैव बुद्धिपूर्वं निबोधयत्यथ यो ह खलु वा वैतस्याशोऽयं यश्चेतनमात्रः प्रतिपूरुषं क्षेत्रज्ञः संकल्पाध्यवसायाभिमानलिङ्गः प्रजापतिर्विश्वाक्षस्तेन चेतनेनेदं शरीरं चेतनवत्प्रातिष्ठापितं प्रचोदयिता चैषोऽस्येति ते होचुर्भगवन्नीदृशस्य कथमंशेन वर्तनमिति तान्होवाच ॥ ५ ॥ प्रजापतिर्वा एषोऽग्रेऽतिष्ठत्स नारमतैकः स आत्मानमभिध्यायद्बह्वीः प्रजा असृजन्ता अस्मैवात्मप्रबुद्धा अप्राणा स्थाणुरिव तिष्ठ-माना अपश्यत्स नारमत सोऽमन्यतैतासां प्रतिबोधनायाभ्यन्तरं प्राविशानीत्यथ स वायु-मिवात्मानं कृत्वाभ्यन्तरं प्राविशत्स एको नाविशत्स पञ्चधात्मानं प्रविभज्योच्यते यः प्राणोऽपानः समान उदानो व्यान इति ॥६॥ अथ योऽयमूर्ध्वमुत्क्रामतीत्येष वा व स प्राणो-ऽथ योऽयमवाञ्चं संक्रामत्येष वा व सोऽपानोऽथ योऽयं स्थविष्ठमन्नधातुमपाने स्थापयत्यणिष्ठं

चाङ्गेऽङ्गे समं नयत्येष वा व स समानोऽथ योऽयं पीताशितमुद्गिरति निगिरतीति चैष वा व स उदानोऽथ येनैताः सिरा अनुव्याप्ता एष वा व स व्यानः॥७॥ अथोपांशुरन्तर्याम्यभिभवत्यन्तर्याममुपांशुमेतयोरन्तराले चौष्ण्यं मासवद्यदौष्ण्यं स पुरुषोऽथ यः पुरुषः सोऽग्निर्वैश्वानरोऽप्यन्यत्राप्युक्तमयमाग्निर्वैश्वानरो योऽयमन्तः पुरुषो येनेदमन्नं पच्यते यदिदमद्यते तस्यैष घोषो भवति यदेतत्कर्णावपिधाय शृणोति स यदोत्क्रमिष्यन् भवति नैनं घोषं शृणोति॥८॥ स वा एष पञ्चधात्मानं प्रविभज्य निहितो गुहायां मनोमयः प्राणशरीरो बहुरूपः सत्यसंकल्प आत्मेति स वा एषोऽस्य हृदन्तरे तिष्ठन्नकृतार्थोऽमन्यतार्थानसानि तत्स्वानीमानि भित्वोदितः पञ्चभिरश्मिभिर्विषयानत्तीति बुद्धीन्द्रियाणि यानिमान्येतान्यस्य रश्मयः कर्मेन्द्रियाण्यस्य हया रथः शरीरं मनो नियन्ता प्रकृतिमयोऽस्य प्रतोदनेन खल्वी-

रितं परिभ्रमतीदं शरीरं चक्रमिव मृते च नेदं शरीरं चेतनवत्प्रतिष्ठापितं प्रचोदयिता चैषोऽस्येति ॥ ९ ॥ स वा एष आत्मेत्यदो वशं नीत इव सितासितैः कर्मफलैरभिभूयमान इव प्रतिशरीरेषु चरत्यव्यक्तत्वात्सूक्ष्मत्वाददृश्यत्वादग्राह्यत्वान्निर्ममत्वाच्चानवस्थोऽकर्ता कर्तेवावस्थितः ॥ १० ॥ स वा एष शुद्धः स्थिरोऽचलश्चालेपोऽव्यग्रो निस्पृहः प्रेक्षकवदवस्थितः स्वस्य चरितभुग्गुणमयेन पटेनात्मानमन्तर्धीयावस्थित इत्यवस्थित इति ॥ ११ ॥ द्वितीयः प्रपाठकः ॥ ते होचुर्भगवन्यद्येवमस्यात्मनो महिमानं सूचयसीत्यन्यो वा परः कोऽयमात्मा सितासितैः कर्मफलैरभिभूयमानः सदसद्योनिमापद्यत इत्यवाचीं वोर्ध्वां वा गतिं द्वन्द्वैरभिभूयमानः परिभ्रमतीति कतम एष इति तान्होवाच ॥ १ ॥ अस्ति खल्वन्योऽपरो भूतात्मा योऽयं सितासितैः कर्मफलै-

रभिभूयमानः सदसद्योनिमापद्यत इत्यवार्चीं वोर्ध्वां गतिं द्वन्द्वैरभिभूयमानः परिभ्र-मतीत्यस्योपव्याख्यानं पञ्च तन्मात्राणि भूतशब्देनोच्यन्ते पञ्च महाभूतानि भूतशब्दे-नोच्यन्तेऽथ तेषां यः समुदायः शरीरमित्युक्तमथ यो ह खलु वा व शरीरमित्युक्तं स भूता-त्मेत्युक्तमथास्ति तस्यात्मा बिन्दुरिव पुष्कर इति स वा एषोऽभिभूतः प्राकृतैर्गुणैरित्य-तोऽभिभूतत्वात्संमूढत्वं प्रयात्यसंमूढत्वादात्मस्थं प्रभुं भगवन्तं कारयितारं नापश्यद्गुणौ-घैस्तृप्यमानः कलुषीकृतश्चास्थिरश्चञ्चलो लोलुप्यमानः सस्पृहो व्यग्रश्चाभिमानत्वं प्र-यात इत्यहंसो ममेदमित्येवं मन्यमानो निबध्नात्यात्मनात्मानं जालेनेव खचरः कृतस्यानुफलैरभिभूयमानः परिभ्रमतीति ॥ २ ॥ अथान्यत्राप्युक्तं यः कर्ता सोऽयं वै भूतात्मा करणैः कारयितान्तःपुरुषोऽथ यथाग्निनायःपिण्डो वाभिभूतः कर्तृभिर्ह-

न्यमानो नानात्वमुपैत्येवं वा व खल्वसौ भूतात्मान्तःपुरुषेणाभिभूतो गुणैर्हन्यमानो नानात्वमुपैत्यथ यत्त्रिगुणं चतुरशीतिलक्षयोनिपरिणतं भूतत्रिगुणमेतद्वै नानात्वस्य रूपं तानि ह वा इमानि गुणानि पुरुषेणेरितानि चक्रमिव चक्रिणेत्यथ यथायःपिण्डे हन्यमाने नाग्निरभिभूयत्येवं नाभिभूयत्यसौ पुरुषोऽभिभूयत्ययं भूतात्मोपसंश्लिष्टत्वादिति ॥ ३ ॥ अथान्यत्राप्युक्तं शरीरमिदं मैथुनादेवोद्भूतं संविदपेतं निरय एव मूत्रद्वारेण निष्क्रान्तमस्थिभिश्चितं मांसेनानुलिप्तं चर्मणावबद्धं विण्मूत्रपित्तकफमज्जामेदोवसाभिरन्यैश्च मलैर्बहुभिः परिपूर्णं कोश इवावसन्नेति ॥ ४ ॥ अथान्यत्राप्युक्तं संमोहो भयं विषादो निद्रा तन्द्री व्रणो जरा शोकः क्षुत्पिपासा कार्पण्यं क्रोधो नास्तिक्यमज्ञानं मात्सर्यं वैकारुण्यं मूढत्वं निर्व्रीडत्वं निकृतत्वमुद्धतत्वमसमत्वमिति ताम-

सान्वितस्तृष्णा स्नेहो रागो लोभो हिंसारतिदृष्टिव्यापृतत्वमीर्ष्याकाममवस्थितत्वं चञ्चलत्वं जिहीर्षार्थोपार्जनं मित्रानुग्रहणं परिग्रहावलम्बोऽनिष्टेष्विन्द्रियार्थेषु द्विष्टिरिष्टेष्वभिषङ्ग इति राजसान्वितैः परिपूर्ण एतैरभिभूत इत्ययं भूतात्मा तस्मान्नानारूपाण्याप्नोतीत्याप्नोतीति ॥ ५ ॥ तृतयिः प्रपाठकः ॥ ते ह खल्वथोर्ध्वरेतसोऽतिविस्मिता अतिसमेत्योचुर्भगवन्नमस्ते त्वं नः शाधि त्वमस्माकं गतिरन्या न विद्यत इत्यस्य कोऽतिथिर्भूतात्मनो येनेदं हित्वात्मन्येव सायुज्यमुपैति तान् होवाच ॥ १ ॥ अथान्यत्राप्युक्तं महानदीषूर्मय इव निवर्तकमस्य यत्पुराकृतं समुद्रवेलेव दुर्निवार्यमस्य मृत्योरागमनं सदसत्फलमयैर्हि पाशैः पशुरिव बद्धं बन्धनस्थस्येवास्वातन्त्र्यं यमविषयस्थस्यैव बहुभयावस्थं मदिरोन्मत्त इवामोदमदिरोन्मत्तं पाप्मना गृहीत इव भ्राम्य-

माणं महोरगदष्ट इव विपदष्टं महान्धकार इव रागान्धमिन्द्रजालमिव मायामयं स्वप्न इव मिथ्यादर्शनं कदलीगर्भ इवासारं नट इव क्षणवेषं चित्रभित्तिरिव मिथ्यामनोरममि-त्यथोक्तम् ॥ शब्दस्पर्शादयो येऽर्था अनर्था इव ते स्थिताः । येष्वासक्तस्तु भूतात्मा न स्मरेच्च परं पदम् ॥ २ ॥ अयं वा व खल्वस्य प्रतिविधिर्भूतात्मनो यद्येव विद्याधिगमस्य धर्मस्यानुचरणं स्वाश्रमेष्वेवानुक्रमणं स्वधर्म एव सर्वं धत्ते स्तम्भशाखेवेतराण्यने-नोर्ध्वभाग्भवत्यन्यथाधः पतत्येष स्वधर्माभिभूतो यो वेदेषु न स्वधर्मातिक्रमेणाश्रमी भवत्याश्रमेष्वेवावस्थितस्तपस्वी चेत्युच्यत एतदप्युक्तं नातपस्कस्यात्मध्यानेऽधिगमः कर्मशुद्धिर्वेत्येवं ह्याह ॥ तपसा प्राप्यते सत्त्वं सत्त्वात्संप्राप्यते मनः । मनसा प्राप्यते त्वात्मा ह्यात्मापत्त्या निवर्तत इति ॥ ३ ॥ अत्रैते श्लोका भवन्ति ॥ यथा निरिन्धनो

वह्निः स्वयोनावुपशाम्यति । तथा वृत्तिक्षयाच्चित्तं स्वयोनावुपशाम्यति ॥ १ ॥ स्वयोनावुपशान्तस्य मनसः सत्यगामिनः । इन्द्रियार्थाविमूढस्यानृताः कर्मवशानुगाः ॥ २ ॥ चित्तमेव हि संसारस्तत्प्रयत्नेन शोधयेत् । यच्चितस्तन्मयो भवति गुह्यमेतत्सनातनम् ॥ ३ ॥ चित्तस्य हि प्रसादेन हन्ति कर्म शुभाशुभम् । प्रसन्नात्मात्मनि स्थित्वा सुखमव्ययमश्नुते ॥ ४ ॥ समासक्तं यदा चित्तं जन्तोर्विषयगोचरे । यद्येवं ब्रह्मणि स्यात्तत्को न मुच्येत बन्धनात् ॥ ५ ॥ मनो हि द्विविधं प्रोक्तं शुद्धं चाशुद्धमेव च । अशुद्धं कामसंकल्पं शुद्धं कामविवर्जितम् ॥ ६ ॥ लयविक्षेपरहितं मनः कृत्वा सुनिश्चलम् । यदा यात्यमनीभावं तदा तत्परमं पदम् ॥ ७ ॥ तावदेव निरोद्धव्यं हृदि यावत्क्षयं गतम् । एतज्ज्ञानं च मोक्षं च शेषास्तु ग्रन्थवि-

स्तराः ॥ ८ ॥ समाधिनिर्धूतमलस्य चेतसो निवेशितस्यात्मनि यत्सुखं लभेत् । न शक्यते वर्णयितुं गिरा तदा स्वयं तदन्तःकरणेन गृह्यते ॥ ९ ॥ अपामपोऽग्निरग्नौ वा व्योम्नि व्योम न लक्षयेत् । एवमन्तर्गतं चित्तं पुरुषः प्रतिमुच्यते ॥ १० ॥ मन एव मनुष्याणां कारणं बन्धमोक्षयोः ॥ बन्धाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतमिति ॥ ॥ ११ ॥ अथ यथेयं कौत्सायनिस्तुतिः ॥ त्वं ब्रह्मा त्वं च वै विष्णुस्त्वं रुद्रस्त्वं प्रजापतिः । त्वमग्निर्वरुणो वायुस्त्वमिन्द्रस्त्वं निशाकरः ॥ १२ ॥ त्वं मनुस्त्वं यमश्च त्वं पृथिवी त्वमथाच्युतः । स्वार्थे स्वाभाविकेऽर्थे च बहुधा तिष्ठसे दिवि ॥ १३ ॥ विश्वेश्वर नमस्तुभ्यं विश्वात्मा विश्वकर्मकृत् । विश्वभुग्विश्वमायस्त्वं विश्वक्रीडारतिप्रभुः ॥ ॥ १४ ॥ नमः शान्तात्मने तुभ्यं नमो गुह्यतमाय च । अचिन्त्यायाप्रमेयाय अनादि-

निधनाय चेति ॥ १५ ॥ ४ ॥ तमो वा इदमेकमास तत्पश्चात्तत्परेणेरितं विषयत्वं प्रयात्येतद्वै रजसो रूपं तद्रजः खल्वीरितं विषमत्वं प्रयात्येतद्वै तमसो रूपं तत्तमः खल्वीरितं तमसः संप्रास्रवत्येतद्वै सत्त्वस्य रूपं तत्सत्त्वमेवेरितं तत्सत्त्वात्संप्रास्रवत्सोंऽशोऽयं यश्चेतनमात्रः प्रतिपुरुषं क्षेत्रज्ञः संकल्पाध्यवसायाभिमानलिङ्गः प्रजापतिस्तस्य प्रोक्ता अग्र्यास्तनवो ब्रह्मा रुद्रो विष्णुरित्यथ यो ह खलु वा वास्य राजसोंऽशोऽसौ स योऽयं ब्रह्माथ यो ह खलु वा वास्य तामसोंऽशोऽसौ स योऽयं रुद्रोऽथ यो ह खलु वा वास्य सात्त्विकोंऽशोऽसौ स एवं विष्णुः स वा एष एकस्त्रिधाभूतोऽष्टधैकादशधा द्वादशधा परिमितधा चोद्भूत उद्भूतत्वाद्भूतेषु चरति प्रतिष्ठा सर्वभूतानामधिपतिर्बभूवेत्यसावात्मान्तर्बहिश्चान्तर्बहिश्च ॥ ५ ॥ चतुर्थः प्रपाठकः ॥ द्विधा वा एष आत्मानं

विभर्त्ययं यः प्राणो यश्चासावादित्योऽथ द्वौ वा एतावास्तां पञ्चधा नामान्तर्बहिश्चाहो-
रात्रे तौ व्यावर्तेते असौ वा आदित्यो बहिरात्मान्तरात्मा प्राणो बहिरात्मागत्यान्तरा-
त्मनानुमीयते । गतिरित्येवं ह्याह यः कश्चिद्विद्वानपहतपाप्माध्यक्षोऽवदातमनास्तन्निष्ठ
आवृत्तचक्षुः सोऽन्तरात्मागत्य बहिरात्मनोऽनुमीयते गतिरित्येवं ह्याहाथ य एषोऽन्तरा-
दित्ये हिरण्मयः पुरुषो यः पश्यति मां हिरण्यवत्स एषोऽन्तरे हृत्पुष्कर एवाश्रितोऽन्नम-
त्ति ॥ १ ॥ अथ य एषोऽन्तरे हृत्पुष्कर एवाश्रितोऽन्नमत्ति स एषोऽग्निर्दिवि श्रितः सौरः
कालाख्योऽदृश्यः सर्वभूतान्नमात्ति कः पुष्करः किमयं वेदं वा व तत्पुष्करं योऽयमाका-
शोऽस्येमाश्चतस्रो दिशश्चतस्र उपदिशः संस्था अयमर्वागग्निः परत एतौ प्राणादित्या-
वेतावुपासीतोमित्यक्षरेण व्याहृतिभिः सावित्र्या चेति ॥ २ ॥ द्वे वा व ब्रह्मणो रूपे मूर्तं

चामूर्तं चाथ यन्मूर्तं तदसत्यं यदमूर्तं तत्सत्यं तद्ब्रह्म यद्ब्रह्म तज्ज्योतिर्यज्ज्योतिः स आदित्यः स वा एष ओमित्येतदात्मा स त्रेधात्मानं व्यकरुत ओमिति तिस्रो मात्रा एताभिः सर्वमिदमोतं प्रोतं चैवास्मिन्निति एवं ह्याहैतद्वा आदित्य ओमित्येवं ध्यायं-स्तथात्मानं युञ्जीतेति ॥ ३ ॥ अथान्यत्राप्युक्तमथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथ इत्यसावादित्य उद्गीथ एव प्रणव इत्येवं ह्याहोद्गीथः प्रणवाख्यं प्रणेतारं नामरूपं विगतनिद्रं विजरमविमृत्युं पुनः पञ्चधा ज्ञेयं निहितं गुहा-यामित्येवं ह्याहोर्ध्वमूलं वा आब्रह्मशाखा आकाश वाय्वग्न्युदकभूम्यादय एकेना-त्तमेतद्ब्रह्म तत्तस्यै तच्चे यदसावादित्य ओमित्येतदक्षरस्य चैतत्तस्मादोमित्यनेनैतदुपासीताजस्रमित्येकोऽस्य रसं बोधयीत इत्येवं ह्याहैतदेवाक्षरं पुण्यमेतदेवा-

क्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥ ४ ॥ अथान्यत्राप्युक्तं स्वनवत्येषा-
स्य तनूर्या ओमिति स्त्रीपुन्नपुंसकमिति लिङ्गवत्येषाथाग्निर्वायुरादित्य इति भास्व-
त्येषाथ रुद्रो विष्णुरित्याधिपतिरित्येषाथ गार्हपत्यो दक्षिणाग्निराहवनीय इति
मुखवत्येषाथ ऋग्यजुःसामेति विज्ञानात्येषाथ भूर्भुवःस्वरिति लोकवत्येषाथ भूतं
भव्यं भविष्यदिति कालवत्येषाथ प्राणोऽग्निः सूर्य इति प्रतापवत्येषाथान्नमापश्च-
न्द्रमा इत्याप्यायनवत्येषाथ बुद्धिर्मनोऽहंकार इति चेतनवत्येषाथ प्राणोऽपानोऽव्यान
इति प्राणवत्येके त्यज्यामीत्युक्तैता ह प्रस्तोतार्पिता भवतीत्येवं ह्याहैतद्वै सत्यकामपरं
चापरं च यदोमित्येतदक्षरमिति ॥ ५ ॥ अथ व्यात्तं वा इदमासीत्सत्यं प्रजापति-
स्तपस्तप्त्वा अनुव्याहरद्भूर्भुवःस्वरित्येषा हाथ प्रजापतेः स्थविष्ठा तनूर्वा लोकवतीति

॥ २४६ ॥

स्वरित्यस्याः शिरो नाभिर्भुवोभूः पादा आदित्यश्चक्षुरायत्तपुरुषस्य महति मात्राश्चक्षुषा ह्ययं मात्राश्चरति सत्यं वै चक्षुरक्षिण्युपस्थितो हि पुरुषः सर्वार्थेषु वदत्येतस्माद्भूर्भुवःस्वरित्युपासीतान्नं हि प्रजापतिर्विश्वात्मा विश्वचक्षुरिवोपासितो भवतीत्येवं ह्याहैषा वै प्रजापतिर्विश्वभृत्तनूरेतस्यामिदं सर्वमन्तर्हितमस्मिँश्च सर्वस्मिन्नेषान्तर्हेति तस्मादेषोपासीतेति ॥ ६ ॥ तत्सवितुर्वरेण्यमित्यसौ वा आदित्यः सविता स वा एवं प्रवरणाय आत्मकामेनेत्याहुर्ब्रह्मवादिनोऽथ भर्गो देवस्य धीमहीति सविता वै तेऽवस्थिता योऽस्य भर्गः कं संचिन्तयामीत्याहुर्ब्रह्मवादिनोऽथ धियो यो नः प्रचोदयादिति बुद्ध्यो वै धियस्ता योऽस्माकं प्रचोदयादित्याहुर्ब्रह्मवादिनोऽथ भर्ग इति यो ह वा अस्मिन्नादित्ये निहितस्तारकेऽक्षिणि चैष भर्गाख्यो भाभिर्गतिरस्य हीति भर्गो भर्जयतीति

वैष भर्ग इति रुद्रो ब्रह्मवादिनोऽथ भर्ग इति भासयतीमांल्लोकानिति रञ्जयतीमानि भूतानि गच्छत इति गच्छत्यास्मिन्नागच्छत्यस्मा इमाः प्रजास्तस्माद्भारकत्वाद्भर्गः शत्रून्सूयमानत्वात्सूर्यः सवनात्सविता दानादादित्यः पवनात्पावमानोऽथायोऽथाय-नादादित्य इत्येवं ह्याह खल्वात्मनात्मामृताख्यश्चेता मन्ता गन्ता स्रष्टा नन्दयिता कर्ता वक्ता रसयिता घ्राता स्पर्शयिता च विभुर्विग्रहे सन्निष्ठा इत्येवं ह्याहाथ यत्र द्वै-तीभूतं विज्ञानं तत्र हि शृणोति पश्यति जिघ्रतीति रसयते चैव स्पर्शयति सर्वमात्मा जानीतेति यत्राद्वैतीभूतं विज्ञानं कार्यकारणनिर्मुक्तं निर्वचनमनौपम्यं निरुपाख्यं किं तदङ्गवाच्यम् ॥ ७ ॥ एष हि खल्वात्मेशानः शंभुर्भवो रुद्रः प्रजापतिर्विश्वसृड्ढिर-ण्यगर्भः सत्यं प्राणो हंसः शास्ता विष्णुर्नारायणोऽर्कः सविता धाता सम्राडिन्द्र इन्दु-

रिति य एष तपत्यग्निनापिहितः सहस्राक्षेण हिरण्मयेनानन्देनैष वाव विजिज्ञासितव्योऽन्वेष्टव्यः सर्वभूतेभ्योऽभयं दत्त्वारण्यं गत्वाथ बहिःकृतेन्द्रियार्थान्स्वशरीरादुपलभतेऽथैनमिति। विश्वरूपं हरिणं जातवेदसं परायणं ज्योतिरेकं तपन्तं सहस्ररश्मिः शतधा वर्तमानः प्राणः प्रजानामुदयत्येष सूर्यः ॥ इति पञ्चमः प्रपाठकः[1] ॥ ॐ आप्यायन्त्विति शान्तिः ॥ इति मैत्रायण्युपनिषत्समाप्ता ॥

**अथ कौषीतकिब्राह्मणोपनिषत् ॥** श्रीमत्कौषीतकीविद्यावेद्यप्रज्ञापराक्षरम्। प्रतियोगिविनिर्मुक्तब्रह्ममात्रं विचिन्तये ॥ ॐ वाङ्मे मनसीति शान्तिः ॥ चित्रो ह वै गार्ग्यायणिर्यक्ष्यमाण आरुणिं वव्रे स ह पुत्रं श्वेतकेतुं प्रजिघाय याजयेति तं हासीनं

१ अयं पञ्चमः प्रपाठक आन्ध्रपुस्तकाद्गृहीतः ॥

पप्रच्छ गौतमस्य पुत्रास्ते संवृतं लोके यस्मिन्माधास्यस्यन्यमहो बाद्धा तस्य लोके धास्यसीति स होवाच नाहमेतद्वेद हन्ताचार्यं प्रच्छानीति स ह पितरमासाद्य पप्रच्छेतीति मा प्राक्षीत्कथं प्रतिब्रवाणीति स होवाचाहमप्येतन्न वेद सदस्येव वयं स्वाध्यायमधीत्य हरामहे यन्नः परे ददत्येह्युभौ गमिष्याव इति ॥ स ह समित्पाणिश्चित्रं गार्ग्यायणिं प्रतिचक्रम उपायानीति तं होवाच ब्रह्मार्होऽसि गौतम यो मामुपागा एहि त्वा ज्ञपयिष्यामीति ॥ १ ॥ स होवाच ये वैके चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति तेषां प्राणैः पूर्वपक्ष आप्यायतेऽथापरपक्षे न प्रजनयत्येतद्वै स्वर्गस्य लोकस्य द्वारं यश्चन्द्रमास्तं यत्प्रत्याहतमिति सृजते य एनं प्रत्याहतमिह वृष्टिर्भूत्वा वर्षति स इह कीटो वा पतङ्गो वा शकुनिर्वा शार्दूलो वा सिंहो वा

मत्स्यो वा परश्वा वा पुरुषो वान्यो वै तेषु स्थानेषु प्रत्याजायते यथाकर्म यथाविद्यं तमागतं पृच्छति कोऽसीति तं प्रतिब्रूयाद्विचक्षणादृतवो रेत आभृतं पञ्चदशात्प्रसूतात्पित्र्यावतस्तन्मा पुंसि कर्तर्येरयध्वं पुंसा कर्त्रा मातरि मासिषिक्तः स जायमान उपजायमानो द्वादशत्रयोदश उपमासो द्वादशत्रयोदशेन पित्रा संतद्विदेहं प्रतितद्विदेहं तन्म ऋतवो मर्त्यव आरभध्वं तेन सत्येन तपसर्तुरस्म्यार्तवोऽस्मि कोऽसि त्वमस्मीति तमतिसृजते ॥ २ ॥ स एतं देवयानं पन्थानमासाद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकं तस्य ह वा एतस्य ब्रह्मलोकस्यारोहृदो मुहूर्ता येष्टिहा विरजा नदील्यो वृक्षः सालज्यं संस्थानमपराजितमायतनमिन्द्रप्रजापती द्वारगोपौ विभुं

प्रमितं विचक्षणासंध्यमितौजाः पर्यङ्कः प्रिया च मानसी प्रतिरूपा च चाक्षुषी पुष्पाण्यादायावयतौ वै च जगत्यम्बाश्चाम्बावयवाश्चाप्सरसोऽम्बया नद्यस्तमित्थंविदा गच्छति तं ब्रह्माहाभिधावत मम यशसा विरजां वायं नदीं प्रापन्नवायं जिगीष्यतीति ॥ ३॥ तं पञ्चशतान्यप्सरसां प्रतिधावन्ति शतं मालाहस्ताः शतमाञ्जनहस्ताः शतं चूर्णहस्ताः शतं वासोहस्ताः शतं कणाहस्तास्तं ब्रह्मालंकारेणालंकुर्वन्ति स ब्रह्मालंकारेणालंकृतो ब्रह्म विद्वान् ब्रह्मैवाभिप्रैति स आगच्छत्यारं ह्रदं तन्मनसात्येति तमृत्वा संप्रतिविदो मज्जन्ति स आगच्छति मुहुर्तान्येष्टिहांस्तेऽस्मादपद्रवन्ति स आगच्छति विरजां नदीं तां मनसैवात्येति तत्सुकृतदुष्कृते धूनुते तस्य प्रिया ज्ञातयः सुकृतमुप॰ न्त्यप्रिया दुष्कृतं तद्यथा रथेन धावयन्रथचक्रे पर्यवेक्षत एवमहोरात्रे

पर्यवेक्षत एवं सुकृतदुष्कृते सर्वाणि च द्वन्द्वानि स एष विसुकृतो विदुष्कृतो ब्रह्म विद्वान् ब्रह्मैवाभिप्रैति ॥ ४ ॥ स आगच्छतील्यं वृक्षं तं ब्रह्मगन्धः प्रविशति स आगच्छति सालज्यं संस्थानं तं ब्रह्म स प्रविशति आगच्छत्यपराजितमायतनं तं ब्रह्मतेजः प्रविशति स आगच्छतीन्द्रप्रजापती द्वारगोपौ तावस्मादपद्रवतः स आगच्छति विभुप्रमितं तं ब्रह्मयशः प्रविशति स आगच्छति विचक्षणामासन्दीं बृहद्रथन्तरे सामनी पूर्वौ पादौ श्यैत नौधसे चापरौ पादौ वैरूपवैराजे शाक्वररैवते तिरश्ची सा प्रज्ञा प्रज्ञया हि विपश्यति स आगच्छत्यमितौजसं पर्यङ्कं स प्राणस्तस्य भूतं च भविष्यच्च पूर्वौ पादौ श्रीश्चेराचापरौ बृहद्रथन्तरे अनूच्ये भद्रयज्ञायज्ञीये शीर्षण्यमृचश्च सामानि च प्राचीनातानं यजूंषि तिरश्चीनानि सोमांशव उपस्तरणमुद्गीथ उपश्रीः श्री-

रुपबर्हणं तस्मिन्ब्रह्मास्ते तमित्थंवित्पादेनैवाग्र आरोहति तं ब्रह्माह कोऽसीति तं प्रतिब्रूयात् ॥ ५ ॥ ऋतुरस्म्यार्तवोऽस्म्याकाशाद्योनेः संभूतो भार्यायै रेतः संवत्सरस्य तेजोभूतस्य भूतस्यात्माभूतस्य त्वमात्मासि यस्त्वमसि सोहमस्मीति तमाह कोऽहमस्मीति सत्यमिति ब्रूयात्किं तद्यत्सत्यमिति यदन्यद्देवेभ्यश्च प्राणेभ्यश्च तत्सदथ यद्देवाश्च प्राणाश्च तद्यं तदेतया वाचाभिव्याह्रियते सत्यमित्येतावादिदं सर्वमिदं सर्वमसीत्येवैनं तदाह तदेतच्छ्लोकेनाप्युक्तम् ॥ ६ ॥ यजूदरः सामशिरा असावृङ्मूर्तिरव्ययः । स ब्रह्मेति हि विज्ञेय ऋषिर्ब्रह्ममयो महानिति ॥ तमाह केन पौंस्नानि नामान्याप्नोतीति प्राणेनेति ब्रूयात्केन स्त्रीनामानीति वाचेति केन नपुंसकनामानीति मनसेति केन गन्धानिति घ्राणेनेति ब्रूयात्केन रूपाणीति चक्षुषेति केन

शब्दानिति श्रोत्रेणेति केनान्नरसानिति जिह्वयेति केन कर्माणीति हस्ताभ्यामिति केन सुखदुःखे इति शरीरेणेति केनानन्दं रतिं प्रजातिमित्युपस्थेनेति केनेत्या इति पादाभ्यामिति केन धियो विज्ञातव्यं कामानिति प्रज्ञयेति प्रब्रूयात्तमाहापो वै खलु मे त्व्यसावयं ते लोक इति सा या ब्रह्मणि चितिर्या व्यष्टिस्तां चितिं जयति तां व्यष्टिं व्यश्नुते य एवं वेद य एवं वेद ॥ ६ ॥ प्रथमोऽध्यायः ॥ प्राणो ब्रह्मेति ह स्माह कौषीतकिस्तस्य ह वा एतस्य प्राणस्य ब्रह्मणो मनो दूतं वाक्परिवेष्ट्री चक्षुर्गोप्त्रं श्रोत्रं संश्रावयितृ यो ह वा एतस्य प्राणस्य ब्रह्मणो मनोदूतं वेद दूतवान्भवति यश्चक्षुर्गोप्तृ गोप्तृमान् भवति यः श्रोत्रं संश्रावयितृ संश्रावयितृमान् भवति यो वाचं परिवेष्ट्रीं परिवेष्ट्रीमान् भवति तस्मै वा एतस्मै प्राणाय ब्रह्मण एताः सर्वा देवता अयाचमानाय बलिं

हरन्ति तथो एवास्मै सर्वाणि भूतान्ययाचमानायैव बलिं हरन्ति य एवं वेद तस्योप-
निषन्न याचेदिति तद्यथा ग्रामं भिक्षित्वा लब्ध्वोपविशेन्नाहमतो दत्तमश्नीयामिति य
एवैनं पुरस्तात्प्रत्याचक्षीरंस्त एवैनमुपमन्त्रयन्ते ददाम त इत्येष धर्मो याचतो भवत्य-
नन्तरस्त्वेवैनमुपमन्त्रयन्ते ददाम त इति ॥ १ ॥ प्राणो ब्रह्मेति ह स्माह पैङ्ग्यस्तस्य
ह वा एतस्य प्राणस्य ब्रह्मणो वाक्परस्ताच्चक्षुरारुन्धे चक्षुः परस्ताच्छ्रोत्रमारुन्धे श्रोत्रं
परस्तान्मन आरुन्धे मनः परस्तात्प्राण आरुन्धे तस्मै वा एतस्मै प्राणाय ब्रह्मण ए-
ताः सर्वा देवता अयाचमानाय बलिं हरन्ति तथो एवास्मै सर्वाणि भूतान्ययाचमा-
नाय बलिं हरन्ति य एवं वेद तस्योपनिषन्न याचेदिति तद्यथा ग्रामं भिक्षित्वा लब्ध्वो-
पविशेन्नाहमतो दत्तमश्नीयामिति य एवैनं पुरस्तात्प्रत्याचक्षीरंस्त एवैनमुपमन्त्रयन्ते

ददाम त इत्येष धर्मो याचतो भवत्यन्यतरस्त्वेवैनमुपमन्त्रयन्ते ददाम त इति ॥ २ ॥
अथात एकधनावरोधनं यदेकधनमभिध्यायात् पौर्णमास्यां वामावास्यायां वा शुद्धपक्षे वा पुण्ये नक्षत्रेऽग्निमुपसमाधाय परिसमूह्य परिस्तीर्य पर्युक्ष्य पूर्वदक्षिणं जान्वाचाच्य स्रुवेण वा चमसेन वा कंसेन वैता आज्याहुतीर्जुहोति वाङ्नामदेवतावरोधिनी सा मेऽमुष्मादिदमवरुन्धां तस्यै स्वाहा प्राणो नाम देवतावरोधिनी सा मेऽमुष्मादिदमवरुन्धां तस्यै स्वाहा चक्षुर्नाम देवतावरोधिनी सा मेऽमुष्मादिदमवरुन्धां तस्यै स्वाहा श्रोत्रं नाम देवतावरोधिनी सा मेऽमुष्मादिदमवरुन्धां तस्यै स्वाहा मनो नाम देवतावरोधिनी सा मेऽमुष्मादिदमवरुन्धां तस्यै स्वाहा प्रज्ञा नाम देवतावरोधिनी सा मेऽमुष्मादिदमवरुन्धां तस्यै स्वाहेत्यथ धूमगन्धं प्रजिघायाज्यलेपेनाङ्गान्यनुविमृज्य वाचंयमोऽभिप्रवृज्यार्थं ब्र-

वीत दूतं वा प्रहिणुयाल्लभते हैव ॥ ३ ॥ अथातो दैवस्मरो यस्य प्रियो बभूषे यस्यै वा एषां वैतेषामेवैतस्मिन्पर्वण्यग्निमुपसमाधायैतयैवावृतैता आज्याहुतीर्जुहोति वाचं ते म-यि जुहोम्यसौ स्वाहा प्राणं ते मयि जुहोम्यसौ स्वाहा चक्षुस्ते मयि जुहोम्यसौ स्वा-हा श्रोत्रं ते मयि जुहोम्यसौ स्वाहा मनस्ते मयि जुहोम्यसौ स्वाहा प्रज्ञानं ते मयि जुहोम्यसौ स्वाहेत्यथ धूमगन्धं प्रजिधायाज्यलेपेनाङ्गान्यनुविमृज्य वाचंयमोऽभिप्रवृज्य संस्पर्शं जिगिमिषेदपि वाताद्वा संभाषमाणस्तिष्ठेत्प्रियो हैव भवति स्मरन्ति हैवास्य ॥ ४ ॥ अथातः सायमन्नं प्रातर्दनमन्तरमग्निहोत्रमित्याचक्षते यावद्वै पुरुषो भासते न तावत्प्राणितुं शक्नोति प्राणं तदा वाचि जुहोति यावद्वै पुरुषः प्राणिति न ताव-द्भाषितुं शक्नोति वाचं तदा प्राणे जुहोत्येतेऽनन्तेऽमृताहुतीर्जाग्रच्च स्वपं च संततमव्यव-

च्छिन्नं जुहोत्यथ या अन्या आहुतयोऽन्तवत्यस्ताः कर्ममय्यो भवन्त्यतद्ध वै पूर्वे विद्वांसोऽग्निहोत्रं जुहवांचक्रुः ॥ ५ ॥ उक्थं ब्रह्मेति ह स्माह शुष्कभृङ्गारस्तदृगित्युपासीत सर्वाणि हास्मै भूतानि श्रैष्ठ्यायाभ्यर्च्यन्ते तद्यजुरित्युपासीत सर्वाणि हास्मै भूतानि श्रैष्ठ्याय युज्यन्ते तत्सामेत्युपासीत सर्वाणि हास्मै भूतानि श्रैष्ठ्याय सन्नमन्ते तच्छ्रीत्युपासीत तद्यश इत्युपासीत तत्तेज इत्युपासीत तद्यथैतंच्छास्त्राणां श्रीमत्तमं यशस्वितमं तेजस्वितमं भवति तथो एवैवं विद्वान् सर्वेषां भूतानां श्रीमत्तमो यशस्वितमस्तेजस्वितमो भवति तमेतमैष्टकं कर्ममयमात्मानमध्वर्युः संस्करोति तस्मिन्यजुर्मयं प्रवयति यजुर्मय ऋङ्मयं होता ऋङ्मयं साममयमुद्गाता स एष सर्वस्यै त्रयीविद्याया आत्मैष उत एवास्यात्मैतदात्मा भवति य एवं वेद ॥ ६ ॥ अथातः सर्व-

जितः कौषीतकेस्त्रीण्युपासनानि भवन्ति यज्ञोपवीतं कृत्वाप आचम्य त्रिरुदपात्रं प्रसिच्योद्यन्तमादित्यमुपतिष्ठेत वर्गोऽसि पाप्मानं मे वृङ्धीत्येतयैवावृता मध्ये सन्तमुद्वर्गोऽसि पाप्मानं म उद्वृङ्धीत्येतयैवावृतास्तं यं तं संवर्गोऽसि पाप्मानं मे संवृङ्धीति यदहोरात्राभ्यां पापं करोति संतद्वृङ्क्ते ॥ ७ ॥ अथ मासि मास्यमावास्यायां पश्चाच्चन्द्रमसं दृश्यमानमुपतिष्ठेतैतयैवावृता हरिततृणाभ्यामथ वाक् प्रत्यस्यति यत्ते सुसीमं हृदयमधिचन्द्रमसि श्रितम् ॥ तेनामृतत्वस्येशानं माहं पौत्रमघं रुदमिति न हास्मात्पूर्वाः प्रजाः प्रयन्तीति न जातपुत्रस्याथाजातपुत्रस्याह ॥ आप्यायस्व समेतु ते ॥ सन्तो पयांसि समुयन्तु वाजाः यमादित्या अंशुमाप्याययन्तीति ॥ एतास्तिस्त्र ऋचो जपित्वा नास्माकं प्राणेन प्रजया पशुभिराप्याययस्वेति दैवीमावृतमावर्त आदित्यस्यावृत-

मन्वावर्तयति दक्षिणं बाहुमन्वावर्तते ॥ ८ ॥ अथ पौर्णमास्यां पुरस्ताच्चन्द्रमसं दृश्यमान-मुपतिष्ठेतैतयैवावृता सोमो राजासि विचक्षणः पञ्चमुखोऽसि प्रजापतिर्ब्राह्मणस्त एकं मुखं तेन मुखेन राज्ञोऽत्सि तेन मुखेन मामन्नादं कुरु ॥ राजात एकं मुखं तेन मुखेन विशोऽत्सि तेनैव मुखेन मामन्नादं कुरु ॥ श्येनस्त एकं मुखं तेन मुखेन पक्षिणोऽत्सि तेन मुखेन मामन्नादं कुरु ॥ अग्निस्त एकं मुखं तेन मुखेनेमं लोकमत्सि तेन मुखेन माम-न्नादं कुरु ॥ सर्वाणि भूतानीत्येव पञ्चमं मुखं तेन मुखेन सर्वाणि भूतान्यत्सि तेन मुखेन मामन्नादं कुरु ॥ मास्माकं प्राणेन प्रजया पशुभिरवक्षेष्ठा योऽस्मान्द्वेष्टि यं च वयं द्वि-ष्मस्तस्य प्राणेन प्रजया पशुभिरवक्षीयस्वेति स्थितिर्दैवीमावृतमावर्त आदित्यस्यावृत-मन्वावर्तन्त इति दक्षिणं बाहुमन्वावर्तते ॥ ९ ॥ अथ संवेश्यन् जायायै हृदयमभि-

मृशेत् ॥ यत्ते सुसीमे हृदये हितमन्तः प्रजापतौ मन्येऽहं मां तद्विद्वांसं माहं पौत्रमघं रुदमिति न हास्मात्पूर्वाः प्रजाः प्रैति ॥ १० ॥ अथ प्रोष्यायन् पुत्रस्य मूर्धानमभिमृशति ॥ अङ्गादङ्गात्संभवासि हृदयादधिजायसे । आत्मा वै पुत्र नामासि स जीव शरदः शतम् ॥ असाविति नामास्य गृह्णाति । अश्मा भव परशुर्भव हिरण्यमास्तृतं भव । तेजो वै पुत्रनामासि स जीव शरदः शतम् ॥ असाविति नामास्य गृह्णाति । येन प्रजापतिः प्रजाः पर्यगृह्णीतारिष्ट्यै ॥ तेन त्वा परिगृह्णाम्यसावित्यथास्य दक्षिणे कर्णे जपत्यस्मै प्रयन्धि मघवन्नृजीषिन्मितीन्द्रश्रेष्ठानि द्रव्याणि धेहीति माच्छेत्ता मा व्यथिष्ठाः शतं शरद आयुषो जीव पुत्र । ते नाम्ना मूर्धानमभिजिघ्राम्यसाविति त्रिरस्य मूर्धानमभिजिघ्रेद्गवा त्वा हिंकारेणाभिहिंकरोमीति त्रिरस्य मूर्धानमभिहिं-

कुर्यात् ॥ ११ ॥ अथातो दैवः परिमर एतद्वै ब्रह्म दीप्यते यदग्निर्ज्वलत्यथैतन्म्रि-यते यन्न ज्वलति तस्यादित्यमेव तेजो गच्छति वायुं प्राण एतद्वै ब्रह्म दीप्यते यथा-दित्यो दृश्यतेऽथैतन्म्रियते यन्न दृश्यते तस्य चन्द्रमसमेव तेजो गच्छति वायुं प्राण एतद्वै ब्रह्म दीप्यते यच्चन्द्रमा दृश्यतेऽथैतन्म्रियते यन्न दृश्यते तस्य विद्युतमेव तेजो गच्छति वायुं प्राण एतद्वै ब्रह्म दीप्यते यद्विद्युद्विद्योततेऽथैतन्म्रियते यन्न विद्योतते तस्य वायुमेव तेजो गच्छति वायुं प्राणस्ता वा एताः सर्वा देवता वायुमेव प्रविश्य वायौ सृप्ता न मूर्छन्ते तस्मादेव पुनरुदीरत इत्यधिदैवतमथाध्यात्मम् ॥ १२ ॥ एतद्वै ब्रह्म दीप्यते यद्वाचा वदत्यथैतन्म्रियते यन्न वदति तस्य चक्षुरेव तेजो गच्छति प्राणं प्राण एतद्वै ब्रह्म दीप्यते यच्चक्षुषा पश्यत्यथैतन्म्रियते यन्न पश्यति तस्य श्रोत्र-

मेव तेजो गच्छति प्राणं प्राण एतद्वै ब्रह्म दीप्यते यच्छ्रोत्रेण शृणोत्यथैतन्म्रियते यन्न शृणोति तस्य मन एव तेजो गच्छति प्राणं प्राण एतद्वै ब्रह्म दीप्यते यन्मनसा ध्यायत्यथैतन्म्रियते यन्न ध्यायति तस्य प्राणमेव तेजो गच्छति प्राणं प्राणस्ता वा एताः सर्वा देवताः प्राणमेव प्रविश्य प्राणे सृप्ता न मूर्छन्ते तस्माद्धैव पुनरुदीरते तद्यदिह वा एवं विद्वांस उभौ पर्वतावभिप्रवर्तेयातां तुस्तूर्षमाणो दक्षिणश्चोत्तरश्च न हैवैनं स्तृण्वीयातामथ य एनं द्विषन्ति यांश्च स्वयं द्वेष्टि त एनं सर्वे परितो म्रियन्ते ॥ १३ ॥

अथातो निःश्रेयसादानं सर्वा ह वै देवता ह श्रेयसे विवदमाना अस्माच्छरीरादुच्चक्रमुस्तद्दारुभूतं शिश्येऽथैतद्वाक्प्रविवेश तद्वाचा वदच्छिष्य एवाथैतच्चक्षुः प्रविवेश तद्वाचा वदच्चक्षुषा पश्यच्छिष्य एवाथैतच्छ्रोत्रं प्रविवेश तद्वाचा वदच्चक्षुषा पश्यच्छ्रोत्रेण शृण्व-

च्छिष्य एवाथैतन्मनः प्रविवेश तद्वाचा वदच्चक्षुषा पश्यञ्छ्रोत्रेण शृण्वन्मनसा ध्याय-
च्छिष्य एवाथैतत्प्राणः प्रविवेश तच्चत एव समुत्तस्थौ तद्देवाः प्राणे निःश्रेयसं विचिन्त्य
प्राणमेव प्रज्ञात्मानमभिसंस्तूय सहैतैः सर्वैरस्माल्लोकादुच्चक्रमुस्ते वायुप्रतिष्ठाकाशात्मा-
नः स्वर्ययुस्तथो एवैवं विद्वान् सर्वेषां भूतानां प्राणमेव प्रज्ञात्मानमभिसंस्तूय सहैतैः
सर्वैरस्माच्छरीरादुत्क्रामति स वायुप्रतिष्ठाकाशात्मा न स्वरेति तद्भवति यत्रैतद्देवास्त-
त्प्राप्य तदमृतो भवति यदमृता देवाः ॥ १४ ॥ अथातः पिता पुत्रीयं संप्रदान-
मिति चाचक्षते पिता पुत्रं प्रेष्याह्वयति नवैस्तृणैरागारं संस्तीर्याग्निमुपसमाधायो-
दकुम्भं सपात्रमुपनिधायाहतेन वाससा संप्रच्छन्नः श्येत एत्य पुत्र उपरिष्टादभि-
निपद्यत इन्द्रियैरस्येन्द्रियाणि संस्पृश्यापि वास्याभिमुखत एवासीताथास्मै संप्रयच्छ-

ति वाचं मे त्वयि दधानीति पिता वाचं ते मयि दध इति पुत्रः प्राणं मे त्वयि दधा-
नीति पिता प्राणं ते मयि दध इति पुत्रश्चक्षुर्मे त्वयि दधानीति पिता चक्षुस्ते मयि
दध इति पुत्रः श्रोत्रं मे त्वयि दधानीति पिता श्रोत्रं ते मयि दध इति पुत्रो मनो मे-
त्वयि दधानीति पिता मनस्ते मयि दध इति पुत्रोऽन्नरसान्मे त्वयि दधानीति पिता
अन्नरसांस्ते मयि दध इति पुत्रः कर्माणि मे त्वयि दधानीति पिता कर्माणि ते मयि
दध इति पुत्रः सुखदुःखे मे त्वयि दधानीति पिता सुखदुःखे ते मयि दध इति पुत्र
आनन्दं रतिं प्रजातिं मे त्वयि दधानीति पिता आनन्दं रतिं प्रजातिं ते मयि दध इति
पुत्र इत्यां मे त्वयि दधानीति पिता इत्यां ते मयि दध इति पुत्रो धियो विज्ञातव्यं का-
मान्मे त्वयि दधानीति पिता धियो विज्ञातव्यं कामांस्ते मयि दध इति पुत्रोऽथ दक्षिणा

वृदुपनिष्क्रामति तं पितानुमन्त्रयते यशो ब्रह्मवर्चसमन्नाद्यं कीर्तिस्त्वा जुषतामित्यथेतरः सव्यमंसमन्ववेक्षते पाणिनान्तर्धाय वसनान्तेन वा प्रच्छाद्य स्वर्गाँल्लोकान्कामानवाप्नुहीति स यद्यगदः स्यात्पुत्रस्यैश्वर्ये पिता वसेत्परिवाव्रजेद्यद्युवैं प्रेयाद्यदेवैनं समापयति तथा समापयितव्यो भवति तथा समापयितव्यो भवति ॥ १५ ॥ इति द्वितीयोऽध्यायः ॥ प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन पौरुषेण च तं हेन्द्र उवाच प्रतर्दन वरं ते ददानीति स होवाच प्रतर्दनस्त्वमेव वृणीष्व यं त्वं मनुष्याय हिततमं मन्यस इति तं हेन्द्र उवाच न वै वरं परस्मै वृणीते त्वमेव वृणीष्वेत्यवरो वै तर्हि किल म इति होवाच प्रतर्दनोऽथो खल्विन्द्रः सत्यादेव नेयाय सत्यं हीन्द्रः स होवाच मामेव विजानीह्येतदेवाहं मनुष्याय हिततमं मन्ये यन्मां-

विजानीयां त्रिशीर्षाणं त्वाष्ट्रमहनमवारुन्मुखान्यतीन्सालावृकेभ्यः प्रायच्छं बह्वीः संधा अतिक्रम्य दिवि प्रल्हादीनतृणमहमन्तरिक्षे पौलोमान्पृथिव्यां कालकाश्यांस्तस्य मे तत्र न लोम च नामीयते स यो मां विजानीयां नास्य केन च कर्मणा लोको मीयते न मातृवधेन पितृवधेन न स्तेयेन न भ्रूणहत्यया नास्य पापं च न चक्रुषो मुखान्नीलं वेत्तीति ॥ १ ॥ स होवाच प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्वायुः प्राणः प्राणो वा आयुः प्राण उवाचामृतं यावद्ध्यस्मिञ्छरीरे प्राणो वसति तावदायुः प्राणेन ह्येवामुष्मिँल्लोकेऽमृतत्वमाप्नोति प्रज्ञयासत्यसंकल्पं स यो म आयुरमृतमित्युपास्ते सर्वमायुरस्मिँल्लोक एत्याप्नोत्यमृतत्वमक्षितिं स्वर्गे लोके तद्धैक आहुरेकभूयं वै प्राणा गच्छन्तीति न हि कश्चन शक्नुयात् सकृद्वाचा

नाम प्रज्ञापयितुं चक्षुषा रूपं श्रोत्रेण शब्दं मनसा ध्यानमित्येकभूयं वै प्राणा भूत्वा एकैकं सर्वाण्येवैतानि प्रज्ञापयन्ति वाचं वदतीं सर्वे प्राणा अनुवदन्ति चक्षुः पश्यत्सर्वे प्राणा अनुपश्यन्ति श्रोत्रं शृण्वत्सर्वे प्राणा अनुशृण्वन्ति मनो ध्यायत्सर्वे प्राणा अनुध्यायन्ति प्राणं प्राणन्तं सर्वे प्राणा अनुप्राणन्तीत्येवमुहैवैतदिति हेन्द्र उवाचास्तीत्येव प्राणानां निःश्रेयसादानमिति ॥ २ ॥ जीवति वागपेतो मूकान्हिपश्यामो जीवति चक्षुरपेतोऽन्धान्हिपश्यामो जीवति श्रोत्रापेतो बधिरान्हिपश्यामो जीवति बाहुच्छिन्नो जीवत्यूरुच्छिन्न इत्येवं हि पश्याम इत्यथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति तस्मादेतमेवोक्थमुपासीत यो वै प्राणः सा प्रज्ञा या वा प्रज्ञा स प्राणः स ह ह्येतावस्मिञ्छरीरे वसतः सहोत्क्रामतस्तस्यैषैव दृष्टिरेतद्विज्ञानं यत्रै-

तत्पुरुषः सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन्प्राण एवैकधा भवति तदैनं वाक्सर्वैर्नामभिः सहाप्येति चक्षुः सर्वै रूपैः सहाप्येति श्रोत्रं सर्वैः शब्दैः सहाप्येति मनः सर्वैर्ध्यातैः सहाप्येति स यदा प्रतिबुध्यते यथाग्नेर्ज्वलतो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकास्तस्यैषैव सिद्धिरेतद्विज्ञानं यत्रैतत्पुरुष आर्तो मरिष्यन्नाबल्यंन्येत्य मोहं नेति तदाहुरुदक्रमीच्चित्तं न शृणोति न पश्यति वाचा वदत्यथास्मिन्प्राण एवैकधा भवति तदैनं वाक्सर्वैर्नामभिः सहाप्येति चक्षुः सर्वै रूपैः सहाप्येति श्रोत्रं सर्वैः शब्दैः सहाप्येति मनः सर्वैर्ध्यातैः सहाप्येति स यदा प्रतिबुध्यते यथाग्नेर्ज्वलतो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः ॥ ३ ॥ स यदास्मा-

च्छरीरादुत्क्रामति वागस्मात्सर्वाणि नामान्यभिविसृजते वाचा सर्वाणि नामान्याप्नोति प्राणोऽस्मात्सर्वान्गन्धानभिविसृजते प्राणेन सर्वान्गन्धानाप्नोति चक्षुरस्मात्सर्वाणि रूपाण्यभिविसृजते चक्षुषा सर्वाणि रूपाण्याप्नोति श्रोत्रमस्मात्सर्वाञ्छब्दानभिविसृजते श्रोत्रेण सर्वाञ्शब्दानाप्नोति मनोऽस्मात्सर्वाणि ध्यातान्यभिविसृजते मनसा सर्वाणि ध्यातान्याप्नोति सैषा प्राणे सर्वाप्तिर्यो वै प्राणः सा प्रज्ञा या वा प्रज्ञा स प्राणः स ह ह्येतावस्मिञ्छरीरे वसतः सहोत्क्रामतोऽथ खलु यथा प्रज्ञायां सर्वाणि भूतान्येकीभवन्ति तद्व्याख्यास्यामः ॥ ४ ॥ वागेवास्या एकमङ्गमुदूढं तस्यै नाम परस्तात्प्रतिविहिता भूतमात्रा घ्राणमेवास्या एकमङ्गमुदूढं तस्य गन्धः परस्तात्प्रतिविहिता भूतमात्रा चक्षुरेवास्या एकमङ्गमुदूढं तस्य रूपं परस्तात्प्रतिविहिता भूतमात्रा श्रोत्रमेवास्या एकमङ्गमुदूढं तस्य शब्दः परस्ता-

त्प्रतिविहिता भूतमात्रा जिह्वैवास्या एकमङ्गमुदूढं तस्यान्नरसः परस्तात्प्रतिविहिता भूत-
मात्रा हस्तावेवास्या एकमङ्गमुदूढं तयोः कर्म परस्तात्प्रतिविहिता भूतमात्रा शरीरमे-
वास्या एकमङ्गमुदूढं तस्य सुखदुःखे परस्तात्प्रतिविहिता भूतमात्रा उपस्थ एवास्या एक-
मङ्गमुदूढं तस्यानन्दो रतिः प्रजातिः परस्तात्प्रतिविहिता भूतमात्रा पादावेवास्या एक-
मङ्गमुदूढं तयोरित्या परस्तात्प्रतिविहिता भूतमात्रा प्रज्ञैवास्या एकमङ्गमुदूढं तस्यै धियो
विज्ञातव्यं कामाः परस्तात्प्रतिविहिता भूतमात्रा ॥ ५ ॥ प्रज्ञया वाचं समारुह्य वाचा
सर्वाणि नामान्याप्नोति प्रज्ञया प्राणं समारुह्य प्राणेन सर्वान्गन्धानाप्नोति प्रज्ञया चक्षुः
समारुह्य चक्षुषा सर्वाणि रूपाण्याप्नोति प्रज्ञया श्रोत्रं समारुह्य श्रोत्रेण सर्वाञ्छब्दानाप्नोति
प्रज्ञया जिह्वां समारुह्य जिह्वया सर्वानन्नरसानाप्नोति प्रज्ञया हस्तौ समारुह्य हस्ताभ्यां

सर्वाणि कर्माण्याप्नोति प्रज्ञया शरीरं समारुह्य शरीरेण सुखदुःखे आप्नोति प्रज्ञयोपस्थं समारुह्योपस्थेनानन्दं रतिं प्रजातिमाप्नोति प्रज्ञया पादौ समारुह्य पादाभ्यां सर्वा इत्या आप्नोति प्रज्ञयैव धियं समारुह्य प्रज्ञयैव धियो विज्ञातव्यं कामानाप्नोति ॥ ६ ॥ न हि प्रज्ञापेता वाङ्नाम किंचन प्रज्ञपयेदन्यत्र मे मनोऽभूदित्याह नाहमेतन्नाम प्राज्ञासिषमिति न हि प्रज्ञापेतः प्राणो गन्धं कंचन प्रज्ञपयेदन्यत्र मे मनोऽभूदित्याह नाहमेतं गन्धं प्राज्ञासिषमिति न हि प्रज्ञापेतं चक्षू रूपं किंचन प्रज्ञपयेदन्यत्र मे मनोऽभूदित्याह नाहमेतद्रूपं प्राज्ञासिषमिति न हि प्रज्ञापेतं श्रोत्रं शब्दं कंचन प्रज्ञपयेदन्यत्र मे मनोऽभूदित्याह नाहमेतं शब्दं प्राज्ञासिषमिति न हि प्रज्ञापेता जिह्वान्नरसं कंचन प्रज्ञपयेदन्यत्र मे मनोऽभूदित्याह नाहमेतमन्नरसं प्राज्ञासिषमिति न हि प्रज्ञापेतौ हस्तौ कर्म किंचन प्रज्ञप-

येतामन्यत्र मे मनोऽभूदित्याह नाहमेतत्कर्म प्राज्ञासिषमिति न हि प्रज्ञापेतं शरीरं सुखदुःखं किंचन प्रज्ञपयेदन्यत्र भे मनोऽभूदित्याह नाहमेतत्सुखदुःखं प्राज्ञासिषमिति न हि प्रज्ञापेत उपस्थ आनन्दं रतिं प्रजातिं कंचन प्रज्ञपयेदन्यत्र मे मनोऽभूदित्याह नाहमेतमानन्दं रतिं प्रजातिं प्राज्ञासिषमिति न हि प्रज्ञापेतौ पादावित्यां कांचन प्रज्ञ-पयेतामन्यत्र मे मनोऽभूदित्याह नाहमेतामित्यां प्रज्ञासिषमिति न हि प्रज्ञापेता धीः का-चन सिद्ध्येन्न प्रज्ञातव्यं प्रज्ञायेत ॥ ७ ॥ न वाचं विजिज्ञासीत वक्तारं विद्यान्न गन्धं विजिज्ञासीत घ्रातारं विद्यान्न रूपं विजिज्ञासीत रूपविदं विद्यान्न शब्दं विजि-ज्ञासीत श्रोतारं विद्यान्नान्नरसं विजिज्ञासीतान्नरसविज्ञातारं विद्यान्न कर्म विजिज्ञासीत कर्तारं विद्यान्न सुखदुःखे विजिज्ञासीत सुखदुःखयोर्विज्ञातारं विद्यान्नानन्दं रतिं

प्रजातिं विजिज्ञासीतानन्दस्य रतेः प्रजातेर्विज्ञातारं विद्यान्नेत्यां विजिज्ञासीतैतारं विद्यान्न मनो विजिज्ञासीत मन्तारं विद्यात्ता वा एता दशैव भूतमात्रा अधिप्रज्ञं दशप्रज्ञामात्रा अधिभूतं यद्धि भूतमात्रा न स्युर्न प्रज्ञामात्राः स्युर्यद्वा प्रज्ञामात्रा न स्युर्न भूतमात्राः स्युः ॥ ८ ॥ न ह्यन्यतरतो रूपं किंचन सिद्ध्येन्नो एतन्नाना तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणे अर्पिताः एष प्राण एव प्रज्ञात्मानन्दोऽजरोऽमृतो न साधुना कर्मणा भूयान्नो एवासाधुना कर्मणा कनीयानेष ह्येवैनं साधु कर्म कारयति तं यमन्वानुनेषत्येष एवैनमसाधु कर्म कारयति तं यमेभ्यो लोकेभ्यो नुनुत्सत एष लोकपाल एष लोकाधिपतिरेष सर्वेश्वरः स म आत्मेति विद्यात्स म आत्मेति विद्यात् ॥ ९ ॥ इति तृतीयोऽध्यायः ॥

गार्ग्यो ह वै बालाकिरनूचानः संस्पष्ट आस सोऽयमुशीनरेषु संवसन्मत्स्येषु कुरुपञ्चालेषु काशीविदेहेष्विति स हाजातशत्रुं काश्यमेत्योवाच ब्रह्म ते ब्रवाणीति तं होवाचाजातशत्रुः सहस्रं दद्मस्त एतस्यां वाचि जनको जनक इति वा उ जना धावन्तीति ॥ १ ॥ स होवाच बालाकिर्य एवैष आदित्ये पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मामैतस्मिन्समवादयिष्ठा बृहत्पाण्डरवासा अतिष्ठाः सर्वेषां भूतानां मूर्द्धेति वा अहमेतमुपास इति स यो हैतमेवमुपास्तेऽतिष्ठाः सर्वेषां भूतानां मूर्धा भवति ॥ २ ॥ स एवैष बालाकिर्य एवैष चन्द्रमसि पुरुषस्तमेवाहं ब्रह्मोपास इति तं होवाचाजातशत्रुर्मामैतस्मिन्समवादयिष्ठाः सोमो राजान्नस्यात्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्तेऽन्नस्यात्मा भवति ॥ ३ ॥ सहोवाच बालाकिर्य एवैष

विद्युति पुरुष एतमेवाहं ब्रह्मोपास इति तं होवाचाजातशत्रुर्मामैतस्मिन्समवा-
दयिष्ठास्तेजस्यात्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते तेजस्यात्मा
भवति ॥ ४ ॥ स होवाच बालाकिर्य एवैषस्तनयित्नौ पुरुष एतमेवाहं
ब्रह्मोपास इति तं होवाचाजातशत्रुर्मामैतस्मिन्समवादयिष्ठाः शब्दस्यात्मेति वा
अहमेतमुपास इति स यो हैतमेवमुपास्ते शब्दस्यात्मा भवति ॥ ५ ॥ स होवाच
बालाकिर्य एवैष आकाशे पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मामैतस्मिन्स-
मवादयिष्ठाः पूर्णमप्रवर्ति ब्रह्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते पूर्यते
प्रजया पशुभिर्नो एव स्वयं नास्य प्रजा पुरा कालात्प्रवर्तते ॥ ६ ॥ स होवाच बाला-
किर्य एवैष वायौ पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मामैतस्मिन्समवादयिष्ठा

इन्द्रो वैकुण्ठोऽपराजिता सेनेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते जिष्णुर्ह वापराजिष्णुरन्यतस्तज्ज्यायान्भवति ॥ ७ ॥ स होवाच बालाकिर्य एवैषोऽग्नौ पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्समवादयिष्ठा विषासहिरिति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते विषासहिर्वा एष भवति ॥ ८ ॥ स होवाच बालाकिर्य एवैषोऽप्सु पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्समवादयिष्ठा नाम्नस्यात्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते नाम्नस्यात्मा भवतीत्यधिदैवतमथाध्यात्मम् ॥९॥ स होवाच बालाकिर्य एवैष आदर्शे पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्समवादयिष्ठाः प्रतिरूप इति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते प्रतिरूपो हैवास्य प्रजायामाजायते नाप्रतिरूपः ॥ १० ॥ स

होवाच बालाकिर्य एवैष प्रतिश्रुत्कायां पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्समवादयिष्ठा द्वितीयोऽनपग इति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते विन्दते द्वितीयाद्द्वितीयवान् भवति ॥ ११ ॥ स होवाच बालाकिर्य एवैष शब्दः पुरुषमन्वेति तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्समवादयिष्ठा असुरिति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते नो एव स्वयं नास्य प्रजा पुरा कालात्संमोहमेति ॥ १२ ॥ स होवाच बालाकिर्य एवैषश्छायायां पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्समवादयिष्ठा मृत्युरिति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते नो एव स्वयं नास्य प्रजा पुरा कालात्प्रमीयते ॥ १३ ॥ स होवाच बालाकिर्य एवैष शारीरः पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मा मैतस्मिन्समवादयिष्ठाः

प्रजापतिरिति वा अहमेतमुपास इति स यो हैतमेवमुपास्ते प्रजायते प्रजया पशुभिः ॥१४॥
स होवाच बालाकिर्य एवैष प्राज्ञ आत्मा येनैतत्सुप्तः स्वप्नयाचरति तमेवाहमुपास इति
तं होवाचाजातशत्रुर्मामैतस्मिन्समवादयिष्ठा यमो राजेति वा अहमेतमुपास इति स
यो हैतमेवमुपास्ते सर्वं हास्मा इदं श्रैष्ठ्याय यम्यते ॥ १५ ॥ स होवाच बालाकिर्य
एवैष दक्षिणेऽक्षन्पुरुषस्तमेवाहमुपास इति तं होवाचाजातशत्रुर्मामैतस्मिन्समवादयिष्ठा
नाम्न आत्माग्निरात्मा ज्योतिष्ट आत्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्त
एतेषां सर्वेषामात्मा भवति ॥ १६ ॥ स होवाच बालाकिर्य एवैष सव्येऽक्षन्पुरुषस्तमे-
वाहमुपास इति तं होवाचाजातशत्रुर्मामैतस्मिन्समवादयिष्ठाः सत्यस्यात्मा विद्युत
आत्मा तेजस आत्मेति वा अहमेतमुपास इति स यो हैतमेवमुपास्त एतेषां सर्वेषा-

मात्मा भवतीति ॥ १७ ॥ तत उ ह बालाकिस्तूष्णीमास तं होवाचाजातशत्रुरेताव-न्नु बालाकि इति एतावद्धीति होवाच बालाकिस्तं होवाचाजातशत्रुर्मृषा वै किल मा संव-दिष्ठा ब्रह्म ते ब्रवाणीति स होवाच यो वै बालाक एतेषां पुरुषाणां कर्त्ता यस्य वैतत्कर्म स वै वेदितव्य इति तत उ ह बालाकिः समित्पाणिः प्रतिचक्रम उपायानीति तं होवाचा-जातशत्रुः प्रतिलोमरूपमेव स्याद्यत्क्षत्रियो ब्राह्मणमुपनयीतैहि व्येव त्वा ज्ञपयिष्यामीति तं ह पाणावभिपद्य प्रवव्राज तौ ह सुप्तं पुरुषमीयतुस्तं हाजातशत्रुरामन्त्रयांचक्रे बृहत्पाण्डरवासः सोमराजन्निति स उ ह तूष्णीमेव शिश्ये तत उ हैनं यष्ट्या विचिक्षेप स तत एव समुत्तस्थौ तं होवाचाजातशत्रुः क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्वै-तदभूत्कुत एतदगादिति तदु ह बालाकिर्न विजज्ञौ ॥ १८ ॥ तं होवाचाजातशत्रुर्य-

त्रैष एतद्वालाके पुरुषोऽशयिष्ट यत्रैतदभूयत एतदगाद्धि ता नाम हृदयस्य नाड्यो हृद-
यात्पुरीततमभिप्रतन्वन्ति यथा सहस्रधा केशो विपाटितस्तावदण्व्यः पिङ्गलस्याणिम्ना
तिष्ठन्ते शुक्लस्य कृष्णस्य पीतस्य लोहितस्येति तासु तदा भवति यदा सुप्तः स्वप्नं न
कंचन पश्यत्यथास्मिन्प्राण एवैकधा भवति तथैनं वाक् सर्वैर्नामभिः सहाप्येति चक्षुः
सर्वै रूपैः सहाप्येति श्रोत्रं सर्वैः शब्दैः सहाप्येति मनः सर्वैर्ध्यातैः सहाप्येति स
यदा प्रतिबुध्यते यथाग्नेर्ज्वलतो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः प्राणा
यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकास्तद्यथा क्षुरः क्षुरध्याने हितः स्याद्वि-
श्वम्भरो वा विश्वम्भरकुलाय एवमेवैष प्राज्ञ आत्मेदं शरीरमनुप्रविष्ट आ लोमभ्य
आ नखेभ्यः ॥ १९ ॥ तमेतमात्मानमेतमात्मनोऽन्ववस्यति यथा श्रेष्ठिनं स्वास्तद्यथा

श्रेष्ठैः स्वैर्भुङ्क्ते यथा वा श्रेष्ठिनं स्वा भुञ्जन्त एवमेवैष प्राज्ञ आत्मैतैरात्मभिर्भुङ्क्ते ॥ यथा श्रेष्ठी स्वैरेवं वैतमात्मानमेत आत्मनोऽन्ववस्यन्ति यथा श्रेष्ठिनं स्वाः स यावद्ध वा इन्द्र एतमात्मानं न विजज्ञौ तावदेनमसुरा अभिबभूवुः स यदा विजज्ञावथ हत्वासुरान्विजित्य सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति तथो एवैवं विद्वान्सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति य एवं वेद य एवं वेद ॥ २० ॥ इति चतुर्थोऽध्यायः ॥ ॐ वाङ्मे मनसीति शान्तिः ॥ इति कौषीतकिब्राह्मणोपनिषत्समाप्ता ॥

**अथ बृहज्जाबालोपनिषत्** ॥ यज्ज्ञानाग्निः स्वातिरिक्तभ्रमं भस्म करोति तत् । बृहज्जाबालनिगमशिरोवेद्यमहं महः ॥ भद्रं कर्णेभिरिति शान्ति ॥ ॐ ॥ आपो वा इदमसत्सलिलमेव ॥ स प्रजापतिरेकः पुष्करपर्णे समभवत् ॥ तस्यान्तर्मनसि

कामः समवर्तत । इदं सृजेयमिति । तस्माद्यत्पुरुषो मनसाभिगच्छति । तद्वाचा वदति । तत्कर्मणा करोति । तदेषाभ्यनूक्ता । कामस्तदग्रे समवर्तताधि । मनसो रेतः प्रथमं यदासीत् । सतो बन्धुमसति निरविन्दन् । हृदि प्रतीष्या कवयो मनीषेति । उपैनं तदुपनमति । यत्कामो भवति । य एवं वेद । स तपोऽतप्यत । स तपस्तप्त्वा । स एतं भुसुण्डः कालाग्निरुद्रमगमदागत्य भो विभूतेर्माहात्म्यं ब्रूहीति तथेति प्रत्यवोचत् भुसुण्डं वक्ष्यमाणं किमिति विभूतिरुद्राक्षयोर्माहात्म्यं बभाणेति । आदावेव पैप्पलादेन सहोक्तमिति तत्फलश्रुतिरिति तस्योर्ध्वं किं वदामेति । बृहज्जाबालाभिधां मुक्तिश्रुतिं ममोपदेशं कुरुष्वेति । ॐ तथेति । सद्योजातात्पृथिवी । तस्याः स्यान्निवृत्तिः । तस्याः कपिलवर्णानन्दा । तद्गोमयेन विभूतिर्जाता । वामदेवादुदकम् । तस्मात्प्रतिष्ठा ।

श्रेष्ठैः स्वैर्भुङ्क्ते यथा वा श्रेष्ठिनं स्वा भुञ्जन्त एवमेवैष प्राज्ञ आत्मैतैरात्मभिर्भुङ्क्ते ॥ यथा श्रेष्ठी स्वैरेवं वैतमात्मानमेत आत्मनोऽन्ववस्यन्ति यथा श्रेष्ठिनं स्वाः स यावद्ध वा इन्द्र एतमात्मानं न विजज्ञौ तावदेनमसुरा अभिबभूवुः स यदा विजज्ञावथ हत्वासुरान्विजित्य सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्यैति तथो एवैवं विद्वान्सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्यैति य एवं वेद य एवं वेद ॥ २० ॥ इति चतुर्थोऽध्यायः ॥ ॐ वाङ्मे मनसीति शान्तिः ॥ इति कौषीतकिब्राह्मणोपनिषत्समाप्ता ॥

अथ बृहज्जाबालोपनिषत् ॥ यज्ज्ञानाग्निः स्वातिरिक्तभ्रमं भस्म करोति तत् । बृहज्जाबालनिगमशिरोवेद्यमहं महः ॥ भद्रं कर्णेभिरिति शान्ति ॥ ॐ ॥ आपो वा इदमसत्सलिलमेव ॥ स प्रजापतिरेकः पुष्करपर्णे समभवत् ॥ तस्यान्तर्मनसि

कामः समवर्तत । इदं सृजेयमिति । तस्माद्यत्पुरुषो मनसाभिगच्छति । तद्वाचा वदति । तत्कर्मणा करोति । तदेषाभ्यनूक्ता । कामस्तदग्रे समवर्तताधि । मनसो रेतः प्रथमं यदासीत् । सतो बन्धुमसति निरविन्दन् । हृदि प्रतीष्या कवयो मनीषेति । उपैनं तदुपनमति । यत्कामो भवति । य एवं वेद । स तपोऽतप्यत । स तपस्तप्त्वा । स एतं भुसुण्डः कालाग्निरुद्रमगमदागत्य भो विभूतेर्माहात्म्यं ब्रूहीति तथेति प्रत्यवोचत् भुसुण्डं वक्ष्यमाणं किमिति विभूतिरुद्राक्षयोर्माहात्म्यं बभाणेति । आदावेव पैप्पलादेन सहोक्तमिति तत्फलश्रुतिरिति तस्योर्ध्वं किं वदामेति । बृहज्जाबालाभिधां मुक्तिश्रुतिं ममोपदेशं कुरुष्वेति । ॐ तथेति । सद्योजातात्पृथिवी । तस्याः स्यान्निवृत्तिः । तस्याः कपिलवर्णा नन्दा । तद्गोमयेन विभूतिर्जाता । वामदेवादुदकम् । तस्मात्प्रतिष्ठा ।

तस्याः कृष्णवर्णा भद्रा । तद्गोमयेन भसितं जातम् । अघोराद्वह्निः । तस्माद्विद्या । तस्या रक्तवर्णा सुरभिः । तद्गोमयेन भस्म जातम् । तत्पुरुषाद्वायुः । तस्माच्छान्तिः । तस्याः श्वेतवर्णा सुशीला । तस्या गोमयेन क्षारं जातम् । ईशानादाकाशम् । तस्माच्छान्त्यतीता । तस्याश्चित्रवर्णा सुमनाः । तद्गोमयेन रक्षा जाता । विभूतिर्भसितं भस्म क्षारं रक्षेति भस्मनो भवन्ति पञ्च नामानि । पञ्चभिर्नामभिर्भृशमैश्वर्यकारणाद्भूतिः । भस्म सर्वाघभक्षणात् । भासनाद्भसितम् । क्षारणादापदां क्षारम् । भूतप्रेतपिशाचब्रह्मराक्षसापस्मारभवभीतिभ्योऽभिरक्षणाद्रक्षेति ॥ प्रथमं ब्राह्मणम् ॥ अथ भुसुण्डः कालाग्निरुद्रमग्नीषोमात्मकं भस्मस्नानविधिं पप्रच्छ । अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव । एकं भस्म सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥ अग्नीषोमात्मकं विश्वमित्यग्निरा-

चक्षते । रौद्री घोरा या तैजसी तनूः । सोमः शक्त्यमृतमयः शक्तिकरी तनूः । अमृतं यत्प्रतिष्ठासा तेजोविद्याकलास्वयम् । स्थूलसूक्ष्मेषु भूतेषु स एव रसतेजसि ॥ १ ॥ द्वि-विधा तेजसो वृत्तिः सूर्यात्मा चानलात्मिका । तथैव रसशक्तिश्च सोमात्मा चानलात्मिका ॥ २ ॥ वैद्युदादिमयं तेजो मधुरादिमयो रसः । तेजोरसविभेदैस्तु वृत्तमेतच्चराचरम् ॥ ३ ॥ अग्नेरमृतनिष्पत्तिरमृतेनाग्निरेधते । अत एव हविः क्लृप्तमग्नीषोमात्मकं जगत् ॥ ४ ॥ ऊर्ध्वशक्तिमयं सोम अधोशक्तिमयोऽनलः । ताभ्यां संपुटितस्तस्माच्छश्वद्विश्वमिदं जगत् ॥ ५ ॥ अग्नेरूर्ध्वं भवत्येषा यावत्सौम्यं परामृतम् । यावदग्न्यात्मकं सौम्यममृतं विसृजत्यधः ॥ ६ ॥ अत एव हि कालाग्निरधस्ताच्छक्तिरूर्ध्वगा । यावदादहनश्चोर्ध्वमधस्तात्पावनं भवेत् ॥ ७ ॥ आधारशक्त्यावधृतः कालाग्निरयमूर्ध्वगः । तथैव निम्नगः सोमः

शिवशक्तिपदास्पदः ॥ ८ ॥ शिवश्चोर्ध्वमयः शक्तिरूर्ध्वशक्तिमयः शिवः । तदित्थं शिवशक्तिभ्यां नाव्याप्तमिह किंचन ॥ ९ ॥ असकृच्चाग्निना दग्धं जगत्तद्भस्मसात्कृतम् । अग्नेर्वीर्यमिदं प्राहुस्तद्वीर्यं भस्म यत्ततः ॥ १० ॥ यश्चेत्थं भस्मसद्भावं ज्ञात्वाभिस्नाति भस्मना । अग्निरित्यादिभिर्मन्त्रैर्दग्धपापः स उच्यते ॥ ११ ॥ अग्नेर्वीर्यं च तद्भस्म सोमेनाप्लावितं पुनः । अयोगयुक्त्या प्रकृतेरधिकाराय कल्पते ॥ १२ ॥ योगयुक्त्या तु तद्भस्म प्लाव्यमानं समंततः । शाक्तेनामृतवर्षेण ह्यधिकारान्निवर्तते ॥ १३ ॥ अतो मृत्युंजयायेत्थममृतप्लावनं सताम् । शिवशक्त्यमृतस्पर्शे लब्ध एव कुतो मृतिः ॥ १४ ॥ यो वेद गहनं गुह्यं पावनं च ततोदितम् । अग्नीषोमपुटं कृत्वा न स भूयोऽभिजायते ॥ १५ ॥ शिवाग्निना तनुं दग्ध्वा शक्तिसोमामृतेन यः । प्लावयेद्योगमार्गेण सोऽमृतत्वाय

कल्पते । सोमृतत्वाय कल्पत इति ॥१६॥ द्वितीयं ब्राह्मणम् ॥ अथ भुसुण्डः कालाग्नि-रुद्रं विभूतियोगमनुब्रूहीति स होवाच । विकटाङ्गामुन्मत्तां महाखलां मलिनामशिवा-दिचिह्नान्वितां पुनर्धेनुं कृशाङ्गां वत्सहीनामशान्तामदुग्धदोहिनीं निरिन्द्रियां जग्धतृणां केशचेलास्थिभक्षिणीं संधिनीं नवप्रसूतां रोगार्तां गां विहाय प्रशस्तगोमयमाहरेद्गो-मयं खस्थं ग्राह्यं शुभे स्थाने वा पतितमपरित्यज्यात ऊर्ध्वं मर्दयेद्गव्येन गोमयग्रहणं कपिला वा धवला वा अलाभे तदन्या गौः स्याद्दोषवर्जिता कपिलागोर्भस्मोक्तं लब्धं गोभस्म नो चेदन्यगोक्षारं यत्र क्वापि स्थितं च यत्तन्न हि धार्यं संस्कारसहितं धार्यम् । तत्रैते श्लोका भवन्ति । विद्याशक्तिः समस्तानां शक्तिरित्यभिधीयते । गुणत्रयाश्रया विद्या सा विद्या च तदाश्रया ॥ १ ॥ गुणत्रयमिदं धेनुर्विद्याभूद्गोमयं शुभम् । मूत्रं

चोपनिषत्प्रोक्तं कुर्याद्भस्म ततः परम् ॥ २ ॥ वत्सस्तु स्मृतयश्चास्य तत्संभूतं तु गोमयम् । आगाव इति मन्त्रेण धेनुं तत्राभिमन्त्रयेत् ॥ ३ ॥ गावो भगो गाव इति प्राशयेत्तर्पणं जलम् । उपोष्य च चतुर्दश्यां शुक्ले कृष्णेऽथवा व्रती ॥ ४ ॥ परेद्युः प्रातरुत्थाय शुचिर्भूत्वा समाहितः । कृतस्नानो धौतवस्त्रः पयोर्द्धं च सृजेच्च गाम् ॥ ५ ॥ उत्थाप्य गां प्रयत्नेन गायत्र्या मूत्रमाहरेत् । सौवर्णे राजते ताम्रे धारयेन्मृण्मये घटे ॥ ६ ॥ पौष्करेऽथ पलाशे वा पात्रे गोशृङ्ग एव वा । आदधीत हि गोमूत्रं गन्धद्वारेति गोमयम् ॥ ७ ॥ अभूमिपातं गृह्णीयात्पात्रे पूर्वोदिते गृही । गोमयं शोधयेद्विद्वान्श्रीर्मे भजतु मन्त्रतः ॥ ८ ॥ अलक्ष्मीर्म इति मन्त्रेण गोमयं धान्यवर्जितम् । संत्वासिञ्चामि मन्त्रेण गोमूत्रं गोमये क्षिपेत् ॥ ९ ॥ पञ्चानां त्वितिमन्त्रेण पिण्डानां च चतुर्दश । कुर्यात्संशोध्य किरणैः

सौरकैराहरेत्ततः ॥ १० ॥ निदध्यादथ पूर्वोक्तपात्रे गोमयपिण्डकान् । स्वगृह्योक्तविधानेन प्रतिष्ठाप्याग्निमीजयेत् ॥ ११ ॥ पिण्डांश्च निक्षिपेत्तत्र आद्यन्तं प्रणवेन तु । षडक्षरस्य सूक्तस्य व्याकृतस्य तथाक्षरैः ॥ १२ ॥ स्वाहान्ते जुहुयात्तत्र वर्णदेवाय पिण्डकान् । आघारावाज्यभागौ च प्रक्षिपेद्व्याहृतीः सुधीः ॥ १३ ॥ ततो निधनपतये त्रयोविंशज्जुहोति च । होतव्या पञ्च ब्रह्माणि नमो हिरण्यबाहवे ॥ १४ ॥ इति सर्वाहुतीर्हुत्वा चतुर्थ्यन्तैश्च मन्त्रकैः । ऋतं सत्यं कद्रुद्राय यस्य वैकंकतीति च ॥ १५ ॥ एतैश्च जुहुयाद्विद्वाननाज्ञातत्रयं तथा । व्याहृतीरथ हुत्वा च ततः स्विष्टकृतं हुनेत् ॥ १६ ॥ इध्मशेषं तु निर्वर्त्य पूर्णपात्रोदकं तथा । पूर्णमसीति यजुषा जलेनान्येन बृंहयेत् ॥ १७ ॥ ब्राह्मणेष्वमृतमिति तज्जलं शिरसि क्षिपेत् । प्राच्यामिति दिशं

लिङ्गैर्दिक्षु तोयं विनिक्षिपेत् ॥ १८ ॥ ब्राह्मणे दक्षिणा दत्त्वा शान्त्यै पुलकमाहरेत् । आहरिष्यामि देवाना सर्वेषां कर्मगुप्तये ॥ १९ ॥ जातवेदसमेनं त्वां पुलकैश्छादया-म्यहम् । मन्त्रेणानेन तं वह्निं पुलकैश्छादयेत्ततः ॥ २० ॥ त्रिदिनं ज्वलनस्थित्यै छादनं पुलकैः स्मृतम् । ब्राह्मणान्भोजयेद्भक्त्या स्वयं भुञ्जीत वाग्यतः ॥ २१ ॥ भस्माधिक्यमभीप्सुस्तु अधिकं गोमयं हरेत् । दिनत्रयेण यदि वा एकस्मिन्दिवसेऽथवा ॥ २२ ॥ तृतीये वा चतुर्थे वा प्रातः स्नात्वा सिताम्बरः । शुक्लयज्ञोपवीती च शुक्ल-माल्यानुलेपनः ॥ २३ ॥ शुक्लदन्तो भस्मदिग्धो मन्त्रेणानेन मन्त्रवित् । ॐ तद्ब्रह्मेति चोच्चार्य पौलकं भस्म संत्यजेत् ॥ २४ ॥ तत्र चावाहनमुखानुपचारांस्तु षोडश । कुर्याद्व्याहृतिभिस्त्वेवं ततोऽग्निमुपसंहरेत् ॥ २५ ॥ अग्निर्भस्मेति मन्त्रेण

गृह्णीयाद्भस्म चोत्तरम् । अग्निरित्यादिमन्त्रेण प्रमृज्य च ततः परम् ॥ २६ ॥ संयोज्य गन्धसलिलैः कपिलामूत्रकेण वा । चन्द्रकुङ्कुमकाश्मीरमुशीरं चन्दनं तथा ॥ २७ ॥ अगरुत्रितयं चैव चूर्णयित्वा तु सूक्ष्मतः । क्षिपेद्भस्मनि तच्चूर्णमोमिति ब्रह्ममन्त्रतः॥ २८ ॥ प्रणवेनाहरेद्विद्वान्बृहतो वटकानथ । अणोरणीयानीति हि मन्त्रेण च विचक्षणः ॥ २९ ॥ इत्थं भस्म सुसंपाद्य शुष्कमादाय मन्त्रवित् । प्रणवेन विमृज्याथ सप्तप्रणवमन्त्रितम् ॥ ३० ॥ ईशानेति शिरोदेशं मुखं तत्पुरुषेण तु । ऊरुदेशमघोरेण गुह्यं वामेन मन्त्रयेत् ॥ ३१ ॥ सद्योजातेन वै पादान्सर्वाङ्गं प्रणवेन तु । तत उद्धूल्य सर्वाङ्गमापादतलमस्तकम् ॥ ३२ ॥ आचम्य वसनं धौतं ततश्चैतत्प्रधारयेत् । पुनराचम्य कर्म स्वं कर्तुमर्हसि सत्तम ॥ ३३ ॥ अथ चतुर्विधं

ततश्शिष्यो गुरुं परिपृच्छति । भगवन् त्साऽऽलम्बनिरालम्बयोगौ कथमिति ब्रूहि । साऽऽलम्बस्तु समस्तकर्माऽतिदूरतया करचरणाऽऽदिमूर्तिविशिष्टं मण्डलाऽऽद्यालम्बनँ साऽऽलम्बयोगः । निरालम्बस्तु समस्तनामरूपकर्माऽतिदूरतया सर्वकामाऽऽद्यन्तःकरण-वृत्तिसाक्षितया तदालम्बनशून्यतया च भावनं निरालम्बयोगः। अथ च निरालम्बयोगा-ऽधिकारी कीदृशो भवति। अमानित्वाऽऽदिलक्षणोपलक्षितो यः पुरुषस्स एव निरालम्ब-योगाऽधिकारी कार्यः कश्चिदस्ति। तस्मात्सर्वेषामधिकारिणामनधिकारिणां भक्तियोग एव प्रशस्यते । भक्तियोगो निरुपद्रवः । भक्तियोगान्मुक्तिः । बुद्धिमतामनायासेनाऽचिरादेव तत्त्वज्ञानं भवति। तत्कथमिति । भक्तवत्सलस्स्वयमेव सर्वेभ्यो मोक्षविघ्नेभ्यो भक्तिनिष्ठान् त्सर्वान् परिपालयति । सर्वाऽभीष्टान्प्रयच्छति। मोक्षं दापयति । चतुर्मुखाऽऽदीनां सर्वे-

षामपि विना विष्णुभक्त्या कल्पकोटिभिर्मोक्षो न विद्यते। कारणेन विना कार्यं नोदेति। भक्त्या विना ब्रह्मज्ञानं कदाऽपि न जायते। तस्मात्त्वमपि सर्वोपायान्परित्यज्य भक्तिमाश्रय। भक्तिनिष्ठो भव। भक्तिनिष्ठो भव। भक्त्या सर्वसिद्धयस्सिध्यन्ति। भक्त्यसाध्यं न किञ्चिदस्ति। एवंविधं गुरूपदेशमाकर्ण्य सर्वं परमतत्त्वरहस्यमवबुध्य सर्वसँशयान्विधूय क्षिप्रमेव मोक्षँ साधयामीति निश्चित्य ततश्शिष्यस्समुत्थाय प्रदक्षिणनमस्कारं कृत्वा गुरुभ्यो गुरुपूजां विधाय गुर्वनुज्ञया क्रमेण भक्तिनिष्ठो भूत्वा भक्त्यतिशयेन पक्कं विज्ञानं प्राप्य तस्मादनायासेन शिष्यः क्षिप्रमेव साक्षान्नाराऽयणो बभूवेत्युपनिषत् ॥ ततः प्रोवाच भगवान् महाविष्णुश्चतुर्मुखमवलोक्य ब्रह्मन् परमतत्त्वरहस्यं ते सर्वं कथितम्। तत्स्मरणमात्रेण मोक्षो भवति। तदनुष्ठानेन सर्वमविदितं विदितं भवति। यत्स्वरूपज्ञानिनस्सर्वमवि

दितं विदितं भवति । तत्सर्वं परमरहस्यं कथितम् । गुरुः क इति । गुरुस्साक्षादादि-
नाराऽयणः पुरुषः । स आदिनाराऽयणोऽहमेव । तस्मान्मामेकँ शरणं व्रज । मद्भक्ति-
निष्ठो भव । मदीयोपासनां कुरु । मामेव प्राऽऽप्स्यसि । मद्व्यतिरिक्तँ सर्वं बाधितम् ।
मद्व्यतिरिक्तमबाधितं नकिञ्चिदस्ति । निरतिशयाऽऽनन्दाऽद्वितीयोऽहमेव । सर्वपरि-
पूर्णोऽहमेव । सर्वाऽऽश्रयोऽहमेव । वाचामगोचरनिराकारपरब्रह्मस्वरूपोऽहमेव । मद्व्य-
तिरिक्तमणुमात्रं न विद्यते । इत्येवं महाविष्णोः परमिममुपदेशं लब्ध्वा पितामहः परमा-
ऽऽनन्दं प्राऽप । विष्णोः कराऽभिमर्शनेन दिव्यज्ञानं प्राऽऽप्य पितामहस्ततस्समुत्थाय
प्रदक्षिणनमस्कारान्विधाय विविधोपचारैर्महाविष्णुं प्रपूज्य प्राऽञ्जलिर्भूत्वा विनयेनोपस-
ङ्गम्य भगवन् भक्तिनिष्ठां मे प्रयच्छ । त्वदभिन्नं मां परिपालय कृपाऽऽलय । तथैव साधु-

साध्विति साधुप्रशँसापूर्वकं महाविष्णुः प्रोवाच। मदुपासकस्सर्वोत्कृष्टस्स भवति। मदुपासनया सर्वमङ्गलानि भवन्ति। मदुपासनया सर्वं जयति। मदुपासकस्सर्ववन्द्यो भवति। मदीय्योपासकस्याऽसाध्यं न किञ्चिदस्ति। सर्वेबन्धाः प्रविनश्यन्ति। सद्वृत्तमिव सर्वे देवास्तँ सेवन्ते। महाश्रेयाँसि च सेवन्ते। मदुपासकस्तस्मान्निरतिशयाऽद्वैतपरमाऽऽनन्दलक्षणपरब्रह्म भवति। योवै मुमुक्षुरनेन मार्गेण सम्यगाचरति स परमाऽऽनन्दलक्षणपरब्रह्म भवति। यस्तु परम तत्त्वरहस्याऽऽथर्वणमहानाराऽयणोपनिषदमधीते स सर्वेभ्यः पापेभ्यो मुक्तो भवति। ज्ञानाऽज्ञानकृतेभ्यः पातकेभ्यो मुक्तो भवति। महापातकेभ्यः पूतो भवति। रहस्यकृतप्रकाशकृतचिरकालाऽत्यन्तकृतेभ्यस्तेभ्यस्सर्वेभ्यः पापेभ्यो मुक्तो भवति। स सकललोकाञ्जयति। स सकलमन्त्रजपनिष्ठो

भवति । स सकलवेदाऽन्तरहस्याऽधिगतपरमाऽर्थज्ञो भवति । स सकलभोगभुग्भवति । स सकलयोगविद्भवति । स सकलजगत्परिपालको भवति । सोऽद्वैतपरमाऽऽनन्दलक्षणपरब्रह्म भवति । इदं परमतत्त्वरहस्यं न वाच्यं गुरुभक्तिविहीनाय । न चाऽशुश्रूषवे वाच्यम् । न तपोविहीनायनाऽस्तिकाय । न दाम्भिकाय मद्भक्तिविहीनाय । मात्सर्याङ्कितततनवे न वाच्यम् । न वाच्यं मदसूयापराय कृतघ्नाय । इदं परमरहस्यं मद्भक्तेष्वभिधास्यति । मद्भक्तिनिष्ठो भूत्वा मामेव प्राऽऽप्स्यति । आवयोर्य इमँ संवादमध्येष्यति । स नरो ब्रह्मनिष्ठो भवति । श्रद्धावाननसूयुश्शृणुयात्पठति वा य इमँ संवादमावयो स्स पुरुषोमत्सायुज्यमेति । ततो महाविष्णुस्तिरोदधे । ततो ब्रह्मा स्वस्थानं जगामेत्युपनिषत् ॥ इत्याथर्वणमहानाराऽयणोपनिषदि परमसायुज्यमुक्तिस्वरूपनिरूपणं नामाऽष्ट-

मोऽध्यायः ॥ उत्तरकाण्डस्समाप्तः ॥ ॥ ॐ भद्र ङ्कर्णेभिरिति शान्तिः । इति त्रिपाद्विभूतिमहानाराऽयणोपनिषत्समाप्ता ॥

अथाऽद्वयतारकोपनिषत् ॥ ॐ द्वैताऽसम्भवविज्ञानसांसिद्धाऽद्वयतारकम् । तारकं ब्रह्मेति गीतं वन्दे श्रीरामवैभवम् ॥ ॐ पूर्णमद इति शान्तिः । ॐ अथाऽतोऽद्वयतारकोपनिषदं व्याख्यास्यामो यतये जितेन्द्रियाय शमदमाऽऽदिषड्गुणपूर्णाय । चित्स्वरूपोऽहमिति सदा भावयन् त्सम्यङ्निमीलिताऽक्षः किञ्चिदुन्मीलिताऽक्षो वाऽन्तर्दृष्ट्या भ्रूदहरादुपरि सच्चिदानन्दतेजःकूटरूपं परम्ब्रह्माऽवलोकयन् तद्रूपो भवति । गर्भजन्मजरामरणसँसारमहद्भयात् सन्तारयति तस्मात्तारकमिति । जीवेश्वरौ मायिकौ विज्ञाय सर्वविशेषं नेति नेतीति विहाय यदवशिष्यते तदद्वयं ब्रह्म तत्सिध्यै लक्ष्यत्रयाऽनुसन्धानः कर्तव्यः ।

देहमध्ये ब्रह्मनाडी सुषुम्ना सूर्यरूपिणी पूर्णचन्द्राऽऽभा वर्तते। सा तु मूलाऽऽधारादारभ्य ब्रह्मरन्ध्रगामिनी भवति। तन्मध्ये तटित्कोटिसमानकान्त्या मृणालसूत्रवत्सूक्ष्माऽङ्गी कुण्डलिनीति प्रसिद्धाऽस्ति। तां दृष्ट्वा मनसैव नरस्सर्वपापविनाशद्वारा मुक्तो भवति। फालोर्ध्वगललाटविशेषमण्डले निरन्तरं तेजस्तारकयोगविष्फुरणेन पश्यति चेत्सिद्धो भवति। तर्जन्यग्रोन्मीलितकर्णरन्ध्रद्वये तत्र फूत्कारशद्वो जायते। तत्र स्थिते मनसि चक्षुर्मध्यगतनीलज्योतिस्थलं विलोक्याऽन्तर्दृष्ट्या निरतिशयसुखं प्राऽऽप्नोति। एवँ हृदये पश्यति। एवमन्तर्लक्ष्यलक्षणं मुमुक्षुभिरुपाऽऽस्यम्॥ अथ बहिर्लक्ष्यलक्षणं नासिकाऽग्रे चतुर्भिष्षड्भिरष्टभिर्दशभिर्द्वादशभिः क्रमादङ्गुलाऽन्ते नीलद्युतिश्यामत्वसदृग्र(द्र)क्तभङ्गीस्फुरत्पीतशुक्लवर्णद्वयोपेतव्योम यदि पश्यति। स तु योगी भवति। चलदृष्ट्या

व्योमभागवीक्षितुः पुरुषस्य दृष्ट्यग्रे ज्योतिर्मयूखा (आपगा) वर्तन्ते । तद्दर्शनेन योगी भवति । तप्तकाञ्चनसङ्काशज्योतिर्मयूखा अपाङ्गाऽन्ते भूमौ वा पश्यति । तद्दृष्टि स्थिरा भवति । शिर्षोपरि द्वादशाऽङ्गुलसमीक्षितुरमृतत्वं भवति । यत्र कुत्र स्थितस्य शिरसि व्योमज्योतिर्दृष्टं चेत्स तु योगी भवति ॥ अथ मध्यलक्ष्यलक्षणं प्रातश्चित्राऽऽदिवर्णाऽखण्डसूर्यचक्रवद्वह्निज्वालाऽऽवलीवत्तद्विहीनाऽन्तारिक्षवत्पश्यति । तदाकाराऽऽकारितयाऽवतिष्ठति । तद्भूयोदर्शनेन गुणरहिताऽऽकाशं भवति । विष्फुरत्तारकाऽऽकारसन्दीप्यमानाऽगाढतमोपमं परमाऽऽकाशं भवति । कालाऽनलसमद्योतमानं महाऽऽकाशं भवति । सर्वोत्कृष्टपरमद्युतिप्रद्योतमानं तत्त्वाऽऽकाशं भवति । कोटिसूर्यप्रकाशवैभवसङ्काशँ सूर्याऽऽकाशं भवति । एवं बाह्याऽभ्यन्तरस्थव्योमपञ्चकं तारकलक्ष्यम् । तद्दर्शी

विमुक्तफलस्ताहग्व्योमसमानो भवति । तस्मात्तारक एव लक्ष्यममनस्कफलप्रदं भवति । तत्तारकं द्विविधं पूर्वार्धतारकमुत्तरार्धममनस्कं चेति । तदेष श्लोको भवति । तद्योगं च द्विधा विद्धि पूर्वोत्तरविधानतः । पूर्वं तु तारकं विद्यादमनस्कं तदुत्तरमिति । अक्ष्यन्तस्तारयोश्चन्द्रसूर्यप्रतिफलनं भवति । तारकाभ्यां सूर्यचन्द्रमण्डलदर्शनं ब्रह्माऽण्डमिव पिण्डाऽण्डशिरोमध्यस्थाऽऽकाशे रवीन्दुमण्डलद्वितयमस्तीति निश्चित्य तारकाभ्यां तद्दर्शनमात्राण्युभयैक्यदृष्ट्या मनोयुक्तं ध्यायेत् । तद्योगाऽभावे इन्द्रियप्रवृत्तेरनवकाशात् । तस्मादन्तर्दृष्ट्या तारकएवाऽनुसन्धेयः । तत्तारकं द्विविधं मूर्तितारकममूर्तितारकं चेति । यदिन्द्रियाऽन्तं तन्मूर्तिमत् । यद्भ्रूयुगाऽतीतं तदमूर्तिमत् । सर्वत्राऽन्तः पदाऽर्थविवेचने मनोयुक्ताऽभ्यास इष्यते । तारकाभ्यां तदूर्ध्वस्थसत्त्वदर्शनान्मनो-

युक्तेनाऽन्तरीक्षणेन सच्चिदानन्दस्वरूपं ब्रह्मैव। तस्माच्छुक्लतेजोमयं ब्रह्मेति सिद्धम्। तद्ब्रह्म मनस्सहकारिचक्षुषांऽन्तर्दृष्ट्या वेद्यं भवति। एवममूर्तितारकमपि मनोयुक्तेन चक्षुषैव दहरादिकं वेद्यं भवति रूपग्रहणप्रयोजनस्य मनश्चक्षुरधीनत्वाद्बाह्यवदान्तरेऽप्यात्ममनश्चक्षुस्संयोगेनैव रूपग्रहणकार्योदयात्। तस्मान्मनोयुक्ताऽन्तर्दृष्टिस्तारकप्रकाशा भवति। भ्रूयुगमध्यबिले दृष्टिं तद्द्वारोर्ध्वस्थिततेज आविर्भूतं तारकयोगो भवति। तेन सह मनोयुक्तं तारकँ सुसंयोज्य प्रयत्नेन भ्रूयुग्मँ साऽवधानतया किञ्चिदूर्ध्वमुत्क्षेपयेत्। इति पूर्वभागी तारकयोगः। उत्तरं त्वमूर्तिमदमनस्कमित्युच्यते। तालुमूलोर्ध्वभागे महाज्ज्योतिर्मयूखो (ण्डलो) वर्तते। तद्योगिभिर्ध्येयम्। तस्मादणिमाऽऽदिसिद्धिर्भवति। अन्तर्बाह्यलक्ष्ये दृष्टौ निमेषोन्मेषवर्जितायाँ सत्याँ शाम्भवी मुद्रा भवति।

तन्मुद्राऽऽरूढज्ञानि (ना) निवासाति (द्) भूमिः पवित्रा भवति। तद्दृष्ट्वा सर्वे लोकाः पवित्रा भवन्ति। तादृशपरमयोगिपूजा यस्य लभ्यते सोऽपि मुक्तो भवति। अन्तर्लक्ष्यजलज्योतिस्स्वरूपं भवति। परमगुरूपदेशेन सहस्राऽरे जलज्योतिर्वा बुद्धि-गुहानिहितज्योतिर्वा षोडशाऽन्तस्थतुरीयचैतन्यं वाऽन्तर्लक्ष्यं भवति। तद्दर्शनँ सदा-चार्यमूलम्। आचार्यो वेदसम्पन्नो विष्णुभक्तो विमत्सरः। योगज्ञो योगनिष्ठश्च सदा-योगाऽऽत्मकश्शुचिः॥ गुरुभक्तिसमायुक्तः पुरषज्ञो विशेषतः। एवं लक्षणसम्पन्नो गुरुरि-त्यभिधीयते॥ गुशब्दस्त्वन्धकारस्स्याद्रुशब्दस्तन्निरोधकः। अन्धकारनिरोधित्वाद्गुरुरि-त्यभिधीयते॥ गुरुरेव परम्ब्रह्म गुरुरेव परा गतिः॥ गुरुरेव परा विद्या गुरुरेव पराऽय-णम्॥ गुरुरेव परा काष्ठा गुरुरेव परन्धनम्। यस्मात्तदुपदेष्टाऽसौ तस्माद्गुरुतरो गुरु-

515

रिति । यस्सकृदुच्चारयति तस्य सँसारमोचनं भवति । सर्वजन्मकृतं पापं तत्क्षणादेव नश्यति । सर्वान्कामानवाप्नोति । सर्वपुरुषाऽर्थसिद्धिर्भवति । य एवं वेदेत्युपनिषत् ॥ ॐ पूर्णमदइति शान्तिः ॥ इत्यद्वयतारकोपनिषत्समाप्ता ॥

अथ रामरहस्योपनिषत् ॥ कैवल्यश्रीस्वरूपेण राजमानं महोऽव्ययम् । प्रतियोगिविनिर्मुक्तं श्रीरामपदमाश्रये ॥ ॐ भद्रङ्कर्णेभिरिति शान्तिः । ॐ रहस्यँ रामतपनं वासुदेवं च मुद्गलम् । शाण्डिल्यं पैङ्गलं भिक्षुं महच्छारीरकँ शिखा ॥ १ ॥ ॐ सनकाऽऽद्यायोगिवर्या अन्ये च ऋषयस्तथा । प्रह्लादाऽऽद्या विष्णुभक्ता हनूमन्तमथाऽब्रुवन् ॥ २ ॥ वायुपुत्र महाबाहो किं तत्त्वं ब्रह्मवादिनाम् । पुराणेष्वष्टादशसु स्मृतिष्वष्टादशस्वपि ॥ ३ ॥ चतुर्वेदेषु शास्त्रेषु (विद्यास्वाध्यात्मिकेऽपिच । सर्वेषु विद्यादानेषु विघ्नसू-

येंशशक्तिषु। एतेषु मध्ये किं तत्त्वं) कथय त्वं महाबल ॥३॥ हनूमान् होवाच ॥ भो योगीन्द्राश्च ऋषयो विष्णुभक्तास्तथैवच ॥ शृणुध्वं मामकीं वाचं भवबन्धविनाशिनीम् ॥ ४ ॥ एतेषु चैव सर्वेषु तत्त्वं च ब्रह्मतारकम् । राम एव परम्ब्रह्म राम एव परं तपः ॥ राम एव परं तत्त्वँ श्रीरामो ब्रह्मतारकम् ॥ ५ ॥ वायुपुत्रेणोक्तास्ते योगीन्द्रा-ऋषयो विष्णुभक्ता हनूमन्तं पप्रच्छुः । रामस्याऽङ्गानि नो ब्रूहीति । हनूमान्होवाच । वायुपुत्रं विघ्नेशं वाणीं दुर्गां क्षेत्रपालकँ सूर्यं चन्द्रं नाराऽयणं नारसिँह्मं वायुदेवं वाराहं तत्सर्वान् त्समात्रान् त्सीतां लक्ष्मणँ शत्रुघ्नं भरतं बिभीषणँ सुग्रीवमङ्गदं जाम्बवन्तं प्रणवमेतान् रामस्याऽङ्गानि जानीथाः । तान्यङ्गानि विना रामो विघ्नकरो भवति । पुनर्वायुपुत्रेणोक्तास्ते हनूमन्तं पप्रच्छुः । आञ्जनेय महाबल विप्राणां ग्रहस्थानां प्रणवाऽधि-

516

रा०रह०

कारः कथं स्यादिति । स होवाच श्रीराम एवोवाचेति । येषामेव षडक्षराऽधिकारो वर्तते तेषां प्रणवाऽधिकारस्स्यान्नाऽन्येषाम् । केवलमकारोकारमकाराऽर्धमात्रासहितं प्रणवमूह्य यो राममन्त्रं जपति तस्य शुभकरोऽहं स्याम् । तस्य प्रणवस्याऽकारस्योकारस्य मकारस्याऽर्धमात्रायाश्च ऋषिश्छन्दो देवता तत्तद्वर्णा वर्णावस्थानँ स्वरवेदाऽग्निगुणानुच्चार्याऽन्वहं प्रणवमन्त्राद्द्विगुणं जप्त्वा पश्चाद्राममन्त्रं यो जपेत् स रामो भवतीति रामेणोक्तास्तस्माद्रामाऽङ्गं प्रणवः कथित इति ॥ विभीषण उवाच ॥ सिंहाऽऽसने समासीनँ रामं पौलस्त्यसूदनम् । प्रणम्य दण्डवद्भूमौ पौलस्त्यो वाक्यमब्रवीत् ॥ ६ ॥ रघुनाथ महाबाहो केवलं कथितं त्वया । अङ्गानाँ सुलभं चैव कथनीयं च सौलभम् ॥ ७ ॥ श्रीराम उवाच । अथ पञ्च दण्डकानि पितृघ्नो मातृघ्नो ब्रह्मघ्नो गुरुहननः

॥९११॥ ६०

कोटियतिघ्नोऽनेककृतपापो यो मम षण्णवतिकोटिनामानि जपति तेभ्यः पापेभ्यः प्रमुच्यते । स्वयमेव सच्चिदानन्दस्वरूपो भवेन्न किम् । पुनरुवाच बिभीषणः । तत्राऽप्यशक्तोऽयं किं करोति । स होवाचेमम् । कैकसेय पुरश्चरणविधावशक्तो यो मम महोपनिषदं मम गीतां मन्नामसहस्रं मद्विश्वरूपं ममाऽष्टोत्तरशतँ रामशताऽभिधानं नारदोक्तस्तवराजँ हनूमत्प्रोक्तं मन्त्रराजाऽऽत्मकस्तवँ सीतास्तवं च रामषडक्षरीत्यादिभिर्मन्त्रैर्यो मां नित्यँ स्तौति तत्सदृशो भवेन्न किं भवेन्न किम् ॥ इति प्रथमोऽध्यायः ॥ १ ॥ सनकाऽऽद्या मुनयो हनूमन्तं पप्रच्छुः । आञ्जनेय महाबल तारकब्रह्मणो रामचन्द्रस्य मन्त्रग्रामं नो ब्रूहीति । हनूमान्होवाच । वन्हिस्थँ शयनं विष्णोरर्धचन्द्रविभूषितम् । एकाऽक्षरो मनुः प्रोक्तो मन्त्रराजस्सुरद्रुमः ॥ १ ॥ ब्रह्मा मुनिस्स्याद्गायत्रं छन्दो रामोऽस्य

देवता । दीर्घाऽर्धेन्दुयुजाऽङ्गानि कुर्याद्दन्द्यात्मनो मनोः ॥ २ ॥ बीजशक्त्यादिबीजेन इष्टाऽर्थे विनियोजयेत् । सरयूतीरमन्दारवेदिकापङ्कजाऽऽसने ॥ ३ ॥ श्यामं वीराऽऽसनाऽऽसीनं ज्ञानमुद्रोपशोभितम् । वामोरुन्यस्ततद्धस्तँ सीतालक्ष्मणसंयुतम् ॥ ४ ॥ अवेक्षमाणमात्मानमात्मन्यमिततेजसम् । शुद्धस्फटिकसङ्काशं केवलं मोक्षकाङ्क्षया ॥ ५ ॥ चिन्तयन्परमाऽऽत्मानं भानुलक्षं जपेन्मनुम् । वन्हिर्नाराऽयणो नाड्यो जाठरः केवलोऽपि च ॥ ६ ॥ द्व्यक्षरो मन्त्रराजोऽयँ सर्वाऽभीष्टप्रदस्ततः । एकाऽक्षरोक्तमृष्यादि स्यादाद्येन षडङ्गकम् ॥ ७ ॥ तारमायारमाऽनङ्गवाक्स्व (न्त्स्व) बीजैश्चषड्विधः । त्र्यक्षरो मन्त्रराजस्स्यात्सर्वाऽभीष्टफलप्रदः ॥ ८ ॥ द्व्यक्षरश्चन्द्रभद्राऽन्तो द्विविधश्चतुरक्षरः । ऋष्यादि पूर्ववज्ज्ञेयमेतयोश्चाविचक्षणैः ॥ ९ ॥ सप्रतिष्ठौ रमौ वायौ हृत्प-

ह्वाऽर्णो मनुर्मतः । विश्वामित्रऋषिः प्रोक्तः पङ्क्तिश्छन्दोऽस्य देवता ॥ १० ॥ राम-
भद्रो बीजशक्तिः प्रथमाऽर्णमिति क्रमात् । भ्रूमध्ये हृदि नाभ्यूर्वोः पादयोर्विन्यसेन्म-
नुम् ॥ ११ ॥ षडङ्गं पूर्ववद्विद्यान्मन्त्राऽर्णैर्मनुनाऽऽत्मकम् । मध्ये वनं कल्पतरोर्मूले
पुष्पलताऽऽसने ॥ १२ ॥ लक्ष्मणेन प्रगुणितमक्ष्णः कोणेन सायकम् । अवेक्षमाणं
जानक्या कृतव्यजनमीश्वरम् ॥ १३ ॥ जटाभारलसच्छीर्षं श्यामं मुनिगणाऽऽवृतम् ।
लक्ष्मणेन धृतच्छत्रमथवा पुष्पकोपरि ॥ १४ ॥ दशाऽऽस्यमथनँ शान्तँ ससुग्रीवविभीष-
णम् । एवं लब्ध्वा जयाऽर्थी तु वर्णलक्षं जपेन्मनुम् ॥ १५ ॥ स्वकामशक्तिवाग्लक्ष्मी-
स्तवाऽऽद्याः पञ्चवर्णकाः । षडक्षरष्षड्विधस्स्याच्चतुर्वर्गफलप्रदः ॥ १६ ॥ पञ्चाशन्मातृका-
मन्त्रवर्णप्रत्येकपूर्वकम् । लक्ष्मीवाङ्मन्मथाऽऽदिश्च ताराऽऽदिस्स्यादनेकधा ॥ १७ ॥

श्रीमाया(राम)मन्मथैकैकं बीजाऽऽद्यन्तर्गतो मनुः। चतुर्वर्णस्स एव स्यात्षड्वर्णो वाञ्छिद-प्रदः ॥ १८ ॥ स्वाहाऽन्तो हुंफडन्तो वा नत्यन्तो वा भवेदयम्। अष्टाविँशत्युत्तरशत-भेदष्षड्वर्ण ईरितः ॥ १९ ॥ ब्रह्मा संमोहनश्शक्तिर्दक्षिणामूर्त्तिरेव च। अगस्त्यश्च शिवः प्रोक्ता मुनयोऽनुक्रमादिमे ॥ २० ॥ छन्दो गायत्रसंज्ञं च श्रीरामश्चैव देवता। अथवा कामबीजादेर्विश्वामित्रो मुनिर्मनोः ॥२१॥ छन्दो देव्यादिगायत्री रामभद्रोऽस्य देवता। बीजशक्ती यथापूर्वँ षड्वर्णान्विन्यसेत्क्रमात् ॥ २२ ॥ ब्रह्मरन्ध्रे भ्रुवोर्मध्ये हृन्नाभ्यूरुषु पादयोः। बीजैष्षड्दीर्घयुक्तैर्वा मन्त्राऽर्णैर्वा षडङ्गकम् ॥ २३ ॥ कालाऽम्भोधरकान्ति-कान्तमनिशं वीराऽऽसनाऽध्यासितं मुद्रां ज्ञानमयीं दधानमपरँ हस्ताऽम्बुजं जानुनि। सीतां पार्श्वगताँ सरोरुहकरां विद्युन्निभां राघवं पश्यन्तं मुकुटाऽङ्गदाऽऽदिविविधाऽऽक-

ल्पोज्ज्वलाऽङ्गं भजे ॥ २४ ॥ रामश्च चन्द्रभद्राऽन्तो ङेऽन्तो नतियुतो द्विधा । सप्ता-ऽक्षरो मन्त्रराजस्सर्वकामफलप्रदः ॥ २५ ॥ ताराऽऽदिसहितस्सोऽपि द्विविधोऽष्टा-ऽक्षरो मतः । तारं रामश्चतुर्थ्यन्तः क्रोडाऽस्त्रं वन्हितल्पगा ॥ २६ ॥ अष्टाऽर्णोयं परो मन्त्रो ऋष्यादिस्स्यात्षडर्णवत् । पुनरष्टाऽक्षरस्यांऽथ राम एव ऋषिस्स्मृतः ॥ २७ ॥ गायत्रं छन्द इत्यस्य देवता राम एव च । ताँरं श्रीबीजयुग्मञ्च बीजशक्त्यादयो-मताः ॥ २८ ॥ षडङ्गं च ततः कुर्यान्मन्त्राऽर्णैरेव बुद्धिमान् । तारं श्रीबीजयुग्मं च रामाय नम उच्चरेत् ॥ २९ ॥ ग्लौमों बीजं वदेन्मायां हृद्रामाय पुनश्च ताम् । शिवो-मारामममन्त्रोऽयं वस्वर्णस्तु वसुप्रदः ॥ ३० ॥ ऋषिस्सदाशिवः प्रोक्तो गायत्रं छन्द उच्यते । शिवोमारामचन्द्रोऽत्र देवता परिकीर्तितः ॥ ३१ ॥ दीर्घया माययाऽङ्गानि

तारपञ्चाऽर्णयुक्तया। रामं त्रिणेत्रँ सोमाऽर्धधारिणँ शूलिनं परम्॥ भस्मोद्धूलितसर्वाऽङ्गं कपर्दिनमुपाऽऽस्महे ॥ ३२ ॥ रामाऽभिरामाँ सौन्दर्यसीमाँ सोमाऽवतँसिकाम्। पाशाऽङ्कुशधनुर्बाणधरां ध्यायेत्त्रिलोचनाम्॥ ३३ ॥ ध्यायन्नेवं वर्णलक्षं जपतर्पणतत्परः। बिल्वपत्रैः फलैः पुष्पैस्तिलाऽऽज्यैः पङ्कजैर्हुनेत्॥ ३४ ॥ स्वयमायान्ति निधयस्सिद्धयश्च सुरेप्सिताः। पुनरष्टाऽक्षरस्याऽथ ब्रह्मगायत्रराघवाः ॥ ३५ ॥ ऋष्यादयस्तु विज्ञेयाश्श्रीबीजं ममशक्तिकम्। तत्प्रीत्यै विनियोगश्च मन्त्राऽर्णैरङ्गकल्पना ॥ ३६ ॥ केयूराऽङ्गदकङ्कणैर्मणिगणैर्विद्योतमानँ सदा रामं पार्वणचन्द्रकोटिसदृशच्छत्रेण वै राजितम्। हेमस्तम्भसहस्रषोडशयुते मध्ये महामण्डपे देवेशं भरताऽऽदिभिः परिवृतँ रामं भजे श्यामलम्॥ ३७ ॥ किं मन्त्रैर्बहुभिर्विनश्वरफलैरायाससाध्यैर्वृथा किञ्चिल्लो-

भवितानमात्रविफलैस्सँसारदुःखाऽऽवहैः । एकस्सन्नपि सर्वमन्त्रफलदो लोभाऽऽदि-
दोषोज्झितश्श्रीरामश्शरणं ममेति सततं मन्त्रोऽयमष्टाऽक्षरः ॥ ३८ ॥ एवमष्टाऽक्षर-
स्सम्यक् सप्तधा परिकीर्तितः । रामसप्ताऽक्षरो मन्त्र आद्यन्ते तारसंयुतः ॥ ३९ ॥
नवाऽर्णो मन्त्रराजस्स्याच्छेषँ षड्वर्णवन्न्यसेत् । जानकीवल्लभं ङेऽन्तं वन्हेर्जायाहुमा-
दिकम् ॥ ४० ॥ दशाऽक्षरोऽयं मन्त्रस्स्यात्सर्वाऽभीष्टफलप्रदः । दशाऽक्षरस्य मन्त्रस्य
वसिष्ठोऽस्य ऋषिर्विराट् ॥ ४१ ॥ छन्दोऽस्य देवता रामस्सीतापाणिपरिग्रहः । आद्यो
बीजं द्विठश्शक्तिः कामेनाऽङ्गं क्रिया मता ॥ ४२ ॥ शिरोललाटभ्रूमध्ये तालुकर्णे
( ण्ठे ) षु हृद्यपि । नाभ्यूरुजानुपादेषु दशाऽर्णान्विन्यसेन्मनोः ॥ ४३ ॥ अयोध्या-
नगरे रत्नचित्रे सौवर्णमण्डपे । मन्दारपुष्पैराबद्धविताने तोरणाऽञ्चिते ॥ ४४ ॥ सिंहा-

ऽऽसने समासीनं पुष्पकोपरि राघवम् । रक्षोभिहरिभिर्देवैर्दिव्ययानगतैश्शुभैः ॥ ४५ ॥ सँस्तूयमानं मुनिभिः प्रह्वैश्च परिसेवितम् । सीताऽलङ्कृतवामाऽङ्गं लक्ष्मणेनोपसेवितम् ॥ ४६ ॥ श्यामं प्रसन्नवदनँ सर्वाऽऽभरणभूषितम् । ध्यायन्नेवं जपेन्मन्त्रं वर्णलक्ष मनन्यधीः ॥ ४७ ॥ रामं ङेऽन्तं धनुष्पाणयेऽन्तस्स्याद्वन्हिसुन्दरी । दशाऽक्षरोऽयं मन्त्रस्स्यान्मुनिर्ब्रह्मा विराट् स्मृतः ॥ ४८ ॥ छन्दस्तु देवता प्रोक्तो रामो राक्षसमर्दनः । शेषं तु पूर्ववत्कुर्याच्चापबाणधरँ स्मरेत् ॥ ४९ ॥ तारमायारमाऽनङ्गवाक्स्वबीजैश्च षड्विधः । दशाऽर्णो मन्त्रराजस्स्याद्द्वद्वर्णाऽऽत्मको मनुः ॥ ५० ॥ शेषं षडर्णवज्ज्ञेयं न्यासध्यानाऽऽदिकं बुधैः । द्वादशाऽक्षरमन्त्रस्य श्रीराम ऋषिरुच्यते ॥ ५१ ॥ जगती छन्द इत्युक्तँ श्रीरामो देवता मतः । प्रणवो बीजमित्युक्तः क्लीं शक्तिर्ह्रीं च कीलकम् ॥ ५२ ॥

मन्त्रेणाऽङ्गानि विन्यस्य शिष्टं पूर्ववदाचरेत् । तारं मायाँ समुच्चार्य भरताऽग्रज इत्यपि ॥ ५३ ॥ रामं (म) क्लीं वन्हिजायाऽन्तं मन्त्रोऽयं द्वादशाऽक्षरः । ॐ हृद्भगवते राम- चन्द्रभद्रौ च ङेयुतौ ॥ ५४ ॥ अर्काऽर्णो द्विविधोऽप्यस्य ऋषिध्यानाऽऽदि पूर्ववत् । छन्दस्तु जगती चैव मन्त्राऽर्णैरङ्गकल्पना ॥ ५५ ॥ श्रीरामेति पदं चोत्का जयराम ततः परम् । जयद्वयं वदेत्प्राज्ञो रामेति मनुराजकः ॥ ५६ ॥ त्रयोदशाऽर्ण ऋष्यादि पुर्ववत्सर्वकामदः । पदद्वयद्विरावृत्तेरङ्गं ध्यानं दशाऽर्णवत् ॥ ५७ ॥ ताराऽऽदिसहित- स्सोऽपि सचतुर्दशवर्णकः । त्रयोदशाऽर्णमुच्चार्य पश्चाद्रामेति योजयेत् ॥ ५८ ॥ सवै पञ्चदशाऽर्णस्तु जपतां कल्पभूरुहः । नमश्च सीतापतये रामायेति हनद्वयम् ॥ ५९ ॥ ततस्तु कवचाऽस्त्राऽन्तष्षोडशाऽक्षर ईरितः । तस्याऽगस्त्यऋषिश्छन्दो बृहती देवता

च सः ॥ ६० ॥ रां बीजँ शक्तिरस्त्रं च कीलकँ हुमितीरितम् । द्विपञ्चत्रिचतुर्वर्णैस्सर्वैः रङ्गं न्यसेत्क्रमात् ॥ ६१ ॥ तारादिसहितस्सोऽपि मन्त्रस्ससदशाऽक्षरः । तारं नमो भगवते रामं ङेऽन्तं महा ततः ॥ ६२ ॥ पुरुषाय पदं पश्चाद्धृदन्तोऽष्टादशाऽक्षरः । विश्वामित्रो मुनिश्छन्दो गायत्रं देवता च सः ॥ ६३ ॥ कामाऽऽदिसहितस्सोऽपि मन्त्र एकोनविंशकः । तारं नमो भगवते रामायेतिपदं वदेत् ॥ ६४ ॥ सर्वशब्दँ समुच्चार्य सौभाग्यं देहि मे वदेत् । वह्निजायां ततोच्चार्य मन्त्रो विंशाऽर्णको मतः ॥ ६५ ॥ तारं नमो भगवते रामाय सकलं वदेत् । आपन्निवारणायेति वन्हिजायां ततो वदेत् ॥६६॥ एकविंशाऽर्णको मन्त्रस्सर्वाऽभीष्टफलप्रदः । तार रमाँ ( रामं ) स्वबीजं च ततो दाशरथाय च ॥ ६७ ॥ ततस्सीतावल्लभाय सर्वाऽभीष्टपदं वदेत् । ततो दाय हृदन्तोऽयं

मन्त्रोद्वाविंशदक्षरः ॥ ६८ ॥ तारं नमो भगवते वीररामाय संवदेत् । कल शत्रून् हन द्वन्द्वं वन्हिजायां ततो वदेत् ॥ ६९ ॥ त्रयोविंशाऽक्षरो मन्त्रस्सर्वशत्रुनिबर्हणः । विश्वामित्रो मुनिः प्रोक्तो गायत्रीछन्द उच्यते ॥७०॥ देवता वीररामोऽसौ बीजाऽऽद्याः पूर्ववन्मताः । मूलमन्त्रविभागेन न्यासान्कृत्वा विचक्षणः ॥ ७१ ॥ शरं धनुषि सन्धाय तिष्ठन्तं रावणोन्मुखम् । वज्रपाणिरथाऽऽरूढं रामं ध्यात्वा जपेन्मनुम् ॥ ७२ ॥ तारं नमो भगवते श्रीरामाय पदं वदेत् । तारकब्रह्मणे चोक्त्वा मां तारय पदं वदेत् ॥ ७३ ॥ नमस्ताराऽऽत्मको मन्त्रश्चतुर्विंशतिवर्णकः । बीजाऽऽदिकं यथापूर्वं सर्वं कुर्यात्षडर्ण-वत् ॥ ७४ ॥ कामस्तारोनतिश्चैव ततो भगवते पदम् । रामचन्द्राय चोच्चार्य सक-लेति पदंवदेत् ॥ ७५ ॥ जनवश्यकरायेति स्वाहा कामाऽऽत्मको मनुः । सर्ववश्यकरो

मन्त्रः पञ्चविंशतिवर्णकः ॥ ७६ ॥ आदौ तारेण संयुक्तो मन्त्रष्षड्विंशदक्षरः । अन्तेऽपितारसंयुक्तस्सप्तविंशतिवर्णकः ॥ ७७ ॥ तारं नमो भगवते रक्षोघ्नविशदाय च । सर्वविघ्नान्त्समुच्चार्य निवारयपदद्वयम् ॥ ७८ ॥ स्वाहान्तो मन्त्रराजोऽयमष्टाविंशतिवर्णकः । अन्ते तारेण संयुक्त एकोनत्रिंशदक्षरः ॥ ७९ ॥ आदौ स्वबीजसंयुक्त स्त्रिंशद्वर्णाऽऽत्मको मनुः । अन्तेऽपि तेन संयुक्त एकत्रिंशाऽऽत्मकस्स्मृतः ॥ ८० ॥ रामभद्र महेष्वास रघुवीर नृपोत्तम । भो दशाऽऽस्याऽन्तकाऽस्माकं श्रियं दापय देहि मे ॥ ८१ ॥ आनुष्टुभ ऋषी रामश्छन्दोऽनुष्टुप्स देवता । रां बीजमस्य यं शक्तिरिष्टाऽर्थे विनियोजयेत् ॥ ८२ ॥ पादं हृदि च विन्यस्य पादं शिरसि विन्यसेत् । शिखायां पञ्चभिर्न्यस्य त्रिवर्णैः कवचं न्यसेत् ॥ ८३ ॥ नेत्रयोः पञ्चवर्णैश्च दापयेत्यस्त्रमुच्यते ।

चापबाणधरं श्यामं ससुग्रीवबिभीषणम् ॥ ८४ ॥ हत्वा रावणमायाऽन्तं कृतत्रैलोक्य-
रक्षणम् । रामभद्रं हृदि ध्यात्वा दशलक्षं जपेन्मनुम् ॥ ८५ ॥ वदेद्दाशरथायेति विद्म-
हेति पदं ततः । सीतापदं समुद्धृत्य वल्लभाय ततो वदेत् ॥ ८६ ॥ धीमहीति वदे-
त्तन्नो रामश्चापि प्रचोदयात् । ताराऽऽदिरेषा गायत्री मुक्तिमेव प्रयच्छति ॥ ८७ ॥
मायाऽऽदिरपि वैदुष्टयं रामाऽऽदिश्च श्रियः पदम् । मदनेनाऽपि संयुक्ता समोहयति
मेदिनीम् ॥ ८८ ॥ पञ्च त्रीणि षडर्णैश्च त्रीणि चत्वारि वर्णकैः । चत्वारि च चतुर्व-
र्णैरङ्गन्यासं प्रकल्पयेत् ॥ ८९ ॥ बीजध्यानाऽऽदिकं सर्वं कुर्यात्षड्वर्णवत्क्रमात् ।
तारं नमो भगवते चतुर्थ्यां रघुनन्दनम् ॥ ९० ॥ रक्षोघ्नविशदं तद्वन्मधुरेति वदेत्ततः।
प्रसन्नवदनं ङेऽन्तं वदेदमिततेजसे ॥ ९१ ॥ बलरामौ चतुर्थ्यन्तौ विष्णुं ङेऽन्तं नति-

स्ततः । प्रोक्तो मालामनुस्सप्तचत्वारिंशद्भिरक्षरैः ॥ ९२ ॥ ऋषिश्छन्दो देवताऽऽदिब्रह्माऽऽनुष्टुभराघवाः । सप्तर्तुसप्तदशषड्रुद्रसङ्ख्यैः षडङ्गकम् ॥ ९३ ॥ ध्यानं दशाऽक्षरं प्रोक्तं लक्षमेकं जपेन्मनुम् । श्रियं सीता चतुर्थ्यन्ता स्वाहाऽन्तोऽयं षडक्षरः॥९४॥ जनकोऽस्य ऋषिश्छन्दो गायत्री देवता मनोः । सीता भगवती प्रोक्ता श्रीं बीजं नतिशक्तिकम् ॥ ९५ ॥ कीलं सीता चतुर्थ्यन्तमिष्टाऽर्थे विनियोजयेत् । दीर्घस्वरयुताऽऽद्येन षडङ्गानि प्रकल्पयेत् ॥ ९६ ॥ स्वर्णाऽऽभामम्बुजकरां रामाऽऽलोकनतत्पराम् । ध्यायेत्षट्कोणमध्यस्थरामाऽङ्कोपरिशोभिताम् ॥९७॥ लकारं तु समुद्धृत्य लक्ष्मणाय नमोऽन्तकः । अगस्त्यऋषिरस्याऽथ गायत्रं छन्द उच्यते ॥९८॥ लक्ष्मणो देवता प्रोक्तो लं बीजं शक्तिरस्य हि । नमस्तु विनियोगो हि पुरुषार्थचतुष्टये ॥ ९९ ॥ दीर्घ-


॥५१८॥

भाजा स्वबीजेन षडङ्गानि प्रकल्पयेत् । द्विभुजं स्वर्णरुचिरतनुं पद्मनिभेक्षणम् ॥१००॥
धनुर्बाणधरं देवं रामाऽऽराधनतत्परम् । भकारं तु समुद्धृत्य भरताय नमोऽन्तकः ॥१०१॥
अगस्त्यऋषिरस्याऽथ शेषं पूर्ववदाचरेत् । भरतं श्यामलं शान्तं रामसेवापराऽयणम्
॥ १०२ ॥ धनुर्बाणधरं वीरं कैकेयीतनयं भजे । शं बीजं तु समुद्धृत्य शत्रुघ्नाय
नमोऽन्तकः । ऋष्यादयो यथापूर्वं विनियोगोऽरिनिग्रहे ॥ १०३ ॥ द्विभुजं स्वर्णव-
र्णाऽऽभं रामसेवापराऽयणम् । लवणाऽसुरहन्तारं सुमित्रातनयं भजे ॥ १०४ ॥ हं ह-
नूमांश्चतुर्थ्यन्तं हृदन्तो मन्त्रराजकः । रामचन्द्रऋषिः प्रोक्तो योजयेत्पूर्ववत्क्रमात्
॥ १०५ ॥ द्विभुजं स्वर्णवर्णाऽऽभं रामसेवापराऽयणम् । मौञ्जीकौपीनसहितं मां
ध्यायेद्रामसेवकम् इति ॥ १०६ ॥ इति रामरहस्योपनिषदि द्वितीयोऽध्यायः ॥

सनकाऽऽद्या मुनयो हनूमन्तं पप्रच्छुः। आञ्जनेय महाबल पूर्वोक्तमन्त्राणां पूजापीठम-नुब्रूहीति। हनूमान् होवाच। आदौ षट्कोणम्। तन्मध्ये रामबीजं सश्रीकम्। तदधो-भागे द्वितीयाऽन्तं साध्यम्। बीजोर्ध्वभागे षष्ठयन्तं साधकम्। पार्श्वे दृष्टिबीजे। तत्प-रितो जीवप्राणशक्तिवश्यबीजानि। तत्सर्वं सन्मुखोन्मुखाभ्यां प्रणवाभ्यां वेष्टनम्। अग्नीशाऽसुरवायव्यपुरःपृष्ठेषु षट्कोणेषु दीर्घभाञ्जि हृदयाऽऽदिमन्त्राः क्रमेण। रां रीं रूं रैं रौं रः इति दीर्घभाजि तद्युक्तहृदयाऽऽद्यङ्गाऽऽन्तम्। षट्कोणपार्श्वे रमामायाबीजे। कोणा-ऽग्रेवाराहं हुमिति। तद्बीजाऽन्तराले कामबीजम्। परितो वाग्भवम्। ततो वृत्तत्रयं साऽष्टपत्रम्। तेषु दलेषु स्वरानष्टवर्गान्प्रतिदलं मालामनुवर्णषट्कम्। अन्ते पञ्चाऽक्ष-रम्। तद्दलकपोलेष्वष्टवर्गान्। पुनरष्टदलपद्मम्। तेषु दलेषु नाराऽयणाऽष्टाऽक्षरीमन्त्रः।

तद्दलकपोलेषु श्रीबीजम् । ततोवृत्तम् । ततो द्वादशदलम् । तेषु दलेषु वासुदेवन्द्वादशा-ऽक्षरीमन्त्रः । तद्दलकपोलेष्वादिक्षाऽन्तान् (आदित्यान्) । ततो वृत्तम् । ततष्षोडशद-लम् । तेषु दलेषु हुं फट् नतिसहितरामद्वादशाऽक्षरम् । तद्दलकपोलेषु मायाबीजम् । सर्वत्र प्रतिकपोलं द्विरावृत्त्या हूं स्त्रं भ्रं ब्रं भ्रमं श्रुं ज्रम् । ततो वृत्तम् । ततो द्वात्रिं-शद्दलपद्मम् । तेषु दलेषु नृसिंह्ममन्त्रराजाऽऽनुष्टुभमन्त्रः । तद्दलकपोलेष्वष्टवस्वेका-दशरुद्रद्वादशाऽऽदित्यमन्त्राः प्रणवाऽऽदिनमोऽन्ताश्चतुर्थ्यन्ताः क्रमेण । तद्बहिर्वषट्कारं परितः । ततो रेखात्रययुक्तं भूपुरम् । द्वादशदिक्षु राश्यादिभूषितम् । अष्टनागैरधिष्ठितम् । चतुर्दिक्षु नारसिंह्मबीजम् । विदिक्षु वाराहबीजम् । एतत्सर्वाऽऽत्मकं यन्त्रं सर्वकामप्रदं मोक्षप्रदं च । एकाऽक्षराऽऽदिनवाऽक्षराऽन्तानामेतद्यन्त्रं भवति । तद्दशाऽऽवरणाऽऽत्मकं

भवति । षट्कोणमध्ये साऽङ्गं राघवं यजेत् । षट्कोणेष्वङ्गैः प्रथमाऽऽवृतिः । अष्टदलमूले आत्माऽऽद्यावरणम् । तदग्रे वासुदेवाऽऽद्यावरणम् । द्वितीयाऽष्टदलमूले धृष्ट्याद्यावरणम् । तदग्रेहनूमदाद्यावरणम् । द्वादशदलेषु वसिष्ठाऽऽद्यावरणम् । षोडशदलेषु नीलाऽऽद्यावरणम् । द्वात्रिंशद्दलेषु ध्रुवाऽऽद्यावरणम् । भूपुराऽन्तरिन्द्राऽऽद्यावरणम् । तद्बहिर्वज्राऽऽद्यावरणम् । एवमभ्यर्च्य मनुं जपेत् ॥ अथ दशाऽक्षराऽदिद्वात्रिंशदक्षराऽन्तानां मन्त्राणां पूजापीठमुच्यते । आदौ षट्कोणम् । तन्मध्ये स्वबीजम् । तन्मध्ये साध्यनामानि । एवं कामबीजवेष्टनम् । तं शिष्टेन नवाऽर्णेन वेष्टनम् । षट्कोणेषु षडङ्गान्यग्नीशाऽसुरवायव्यपूर्वपृष्ठेषु । तत्कपोलेषु श्रीमाये । कोणाऽग्रे क्रोधम् । ततो वृत्तम् । ततोऽष्टदलम् । तेषु दलेषु षट्त्सङ्ख्यया मालामनुवर्णान् । तद्दलकपोलेषु षोडश

स्वराः । ततो वृत्तम् । तत्परित आदिक्षाऽन्तम् । तद्बहिर्भूपुरं साऽष्टशूलाऽग्रम् । दिक्षु विदिक्षु नारसिंह्मवाराहे । एतन्महायन्त्रम् । आधारशक्त्यादिवैष्णवपीठम् । अङ्गैः प्रथमाऽऽवृतिः । मध्ये रामम् । वामभागे सीताम् । तत्पुरतश्शार्ङ्गं शरं च । अष्टदलमूले हनूमदादिद्वितीयाऽऽवरणम् । धृष्ट्यादितृतीयाऽऽवरणम् । इन्द्राऽऽदिभिश्चतुर्थी । वज्राऽऽदिभिः पञ्चमी । एतद्यन्त्राऽऽराधनपूर्वकं दशाऽक्षराऽऽदिमन्त्रं (मनूत्) जपेत् ॥

इति रामरहस्योपनिषदि तृतीयोऽध्यायः ॥ सनकाऽऽद्या मुनयो हनूमन्तं पप्रच्छुः । श्रीराममन्त्राणां पुरश्चरणविधिमनुब्रूहीति । हनूमान्होवाच । नित्यं त्रिषवणस्नायी पयो मूलफलादिभुक् । अथवा पायसाऽऽहारो हविष्यान्नाऽदएव वा ॥ १ ॥ षड्रसैश्च परित्यक्त स्स्वाऽश्रमोक्तविधिं चरन् । वनिताऽऽदिषु वाक्कर्ममनोभिर्निस्पृहश्शुचिः ॥ २ ॥ भूमिशायी

ब्रह्मचारी निष्कामो गुरुभक्तिमान् । स्नानपूजाजपध्यानहोमतर्पणतत्परः ॥ ३ ॥ गुरूपदिष्टमार्गेण ध्यायन्राममनन्यधीः । सूर्येन्दुगुरुदीपाऽऽदिगोब्राह्मणसमीपतः ॥ ४ ॥ श्रीरामसन्निधौ मौनी मन्त्राऽर्थमनुचिन्तयन् । व्याघ्रचर्माऽऽसने स्थित्वा स्वस्तिकाऽऽद्यासनक्रमात् ॥ ५ ॥ तुलसीपारिजातश्रीवृक्षमूलाऽऽदिकस्थले । पद्माऽक्षतुलसीकाष्ठरुद्राऽक्षकृतमालया ॥ ६ ॥ मातृकामालया मन्त्री मनसैव मनुं जपेत् । अभ्यर्च्य वैष्णवे पीठे जपेदक्षरलक्षकम् ॥ ७ ॥ तर्पयेत्तद्दशांऽशेन पायसात्तद्दशांऽशतः । जुहुयाद्गोघृतेनैव भोजयेत्तद्दशांऽशतः ॥ ८ ॥ ततःपुष्पाऽञ्जलिं मूलमन्त्रेण विधिवच्चरेत् । ततस्सिद्धमनुर्भूत्वा जीवन्मुक्तो भवेन्मुनिः ॥९॥ अणिमाऽऽदिर्भजत्येनं यूनं वरवधूरिव । ऐहिकेषु च कार्येषु महाऽऽपत्सु च सर्वदा ॥ १० ॥ नैव योज्यो राममन्त्रः केवलं मोक्षसाधकः । ऐहिके समनुप्राप्ते

मा स्मरेद्रामसेवकम् ॥ ११ ॥ यो रामं संस्मरेन्नित्यं भक्त्या मनुपराऽयणः । तस्याऽह-मिष्टसंसिध्यै दीक्षितोऽस्मि मुनीश्वराः ॥ १२ ॥ वाञ्छिताऽर्थं प्रदास्यामि भक्तानां राघवस्य तु । सर्वथा जागरूकोऽस्मि रामकार्यधुरन्धरः ॥ १३ ॥ इति रामरहस्योपनिषदि चतुर्थोऽध्यायः ॥ सनकाऽऽद्या मुनयो हनूमन्तं पप्रच्छुः । श्रीराममन्त्राऽर्थमनुब्रूहीति । हनूमान्होवाच । सर्वेषु राममन्त्रेषु मन्त्रराजष्षडक्षरः । एकधा द्विविधा त्रेधा चतुर्धा-पञ्चधा तथा ॥ १ ॥ षट्सप्तधाऽष्टधा चैव बहुधाऽयं व्यवस्थितः । षडक्षरस्य माहात्म्यं शिवो जानाति तत्त्वतः ॥ २ ॥ श्रीराममन्त्रराजस्य सम्यगर्थोऽयमुच्यते । नाराऽयणाऽष्टाऽक्षरे च शिवपञ्चाऽक्षरे तथा । साऽर्थकाऽर्णद्वयं रामो रमन्ते यत्र योगिनः । रकारो वन्हिवचनः प्रकाशः पर्यवस्यति ॥ ३ ॥ सच्चिदानन्दरूपोऽस्य परमाऽऽत्मार्थ उच्यते ।

व्यञ्जनं निष्कलं ब्रह्म प्राणो मायेति च स्वरः ॥ ४ ॥ व्यञ्जनैस्स्वरसंयोगं विद्धि तत्प्राणयोजनम् । रेफो ज्योतिर्मये तस्मात्कृतमाकारयोजनम् ॥ ५ ॥ मकारोऽभ्युदयाऽर्थत्वात्स मायेति च कीर्त्यते । सोऽयं बीजँ स्वकं यस्मात्समायं ब्रह्मचोच्यते ॥ ६ ॥ सबिन्दुस्सोपि पुरुषश्शिवसूर्येन्दुरूपवान् । ज्योतिस्तस्य शिखा रूपं नादस्सप्रकृतिर्मतः ॥ ७ ॥ प्रकृतिः पुरुषश्चोभौ समायाद्ब्रह्मणस्स्मृतौ । बिन्दुनादाऽऽत्मकं बीजं वन्हिसोमकलाऽऽत्मकम् ॥ ८ ॥ अग्नीषोमाऽऽत्मकं रूपं रामबीजे प्रतिष्ठितम् । यथैव वटबीजस्थः प्राकृतश्च महान्द्रुमः ॥ ९ ॥ तथैव रामबीजस्थं जगदेतच्चराऽचरम् । बीजोक्तमुभयाऽर्थत्वं रामनामनि दृश्यते ॥ १० ॥ बीजं मायाविनिर्मुक्तं परं ब्रह्मेति कीर्त्यते । मुक्तिदं साधकानां च मकारो मुक्तिदो मतः ॥ ११ ॥ मारूपत्वादतो रामो भुक्ति-

मुक्तिफलप्रदः । आद्यो रा तत्पदाऽर्थस्स्यान्मकारस्त्वम्पदाऽर्थवान् ॥ १२ ॥ तयो स्संयोजनमसीत्यर्थे तत्त्वविदो विदुः । नमस्त्वमर्थो विज्ञेयो रामस्तत्पदमुच्यते ॥ १३ ॥ असीत्यर्थे चतुर्थी स्यादेवं मन्त्रेषु योजयेत् । तत्त्वमस्याऽऽदिवाक्यं तु केवलं मुक्तिदं यतः ॥ १४ ॥ भुक्तिमुक्तिप्रदं चैतत्तस्मादप्यतिरिच्यते । मनुष्वेतेषु सर्वेषामधिकारोऽस्ति देहिनाम् ॥ १५ ॥ मुमुक्षूणां विरक्तानां तथाचाऽऽश्रमवासिनाम् । प्रणवत्वात्सदा ध्येयो यतीनां च विशेषतः । राममन्त्राऽर्थविज्ञानी जीवन्मुक्तो न सँशयः ॥ १६ ॥ य इमामुपनिषदमधीते सोऽग्निपूतो भवति । स वायुपूतो भवति । सुरापानात्पूतो भवति । स्वर्णस्तेयात्पूतो भवति । ब्रह्महत्यात्पतो भवति । स राममन्त्राणां कृतपुरश्चरणो रामचन्द्रो भवति । तदेतदृचाऽभ्युक्तम् । सदा रामोऽहमस्मीति तत्त्वतः प्रवदन्ति

ये । न ते सँसारिणो नूनँ राम एव न सँशयः ॥ ॐ सत्यमित्युपनिषत् ॥ ॐ भद्रं कर्णेभिरिति शान्तिः ॥ इति श्रीरामरहस्योपनिषत्समाप्ता ॥ सर्वसाराऽऽदि रामरहस्याऽऽन्तग्रन्थाः ३००० । ईशावास्याऽऽदिरामरहस्याऽन्तगन्थाः ८३४८

अथ रामपूर्वतापिन्युपनिषत् ॥ श्रीरामतापिनीयाऽर्थं भक्तध्येयकलेवरम् । विकलेवरकैवल्यं श्रीरामब्रह्म मे गतिः ॥ ॐ भद्रं कर्णेभिरिति शान्तिः ॥ ॐ चिन्मयेऽस्मिन्महाविष्णौ जाते दशरथे हरौ । रघोः कुलेऽखिलं राति राजते यो महीस्थितः ॥ १ ॥ स राम इति लोकेषु विद्वद्भिः प्रकटीकृतः । राक्षसा येन मरणं यान्ति स्वोद्रेकतोऽथवा ॥ २ ॥ रामनाम भुवि ख्यातमभिरामेण वा पुनः । राक्षसान्मर्त्यरूपेण राहुर्मनसिजं यथा ॥ ३ ॥ प्रभाहीनाँस्तथा कृत्वा राज्याऽर्हाणां महीभृताम् । धर्ममार्गे

चरित्रेण ज्ञानमार्गं च नामतः ॥ ४ ॥ तथा ध्यानेन वैराग्यमैश्वर्यँ स्वस्य पूजनात् ।
तथा रात्यस्य रामाऽऽख्या भुवि स्यादथ तत्त्वतः ॥ ५ ॥ रमन्ते योगिनोऽनन्ते नित्या-
ऽऽनन्दे चिदात्मनि । इति रामपदेनाऽसौ परम्ब्रह्माऽभिधीयते ॥ ६ ॥ चिन्मयस्या-
ऽद्वितीयस्य निष्कलस्याऽशरीरिणः । उपासकानां कार्याऽर्थे ब्रह्मणो रूपकल्पना ॥ ७ ॥
रूपस्थानां देवतानां पुँरूयङ्गाऽस्त्राऽऽदिकल्पना । द्विचत्वारिषडष्टानां दश द्वादश
षोडश ॥ ८ ॥ अष्टादशाऽमी कथिता हस्ताश्शङ्खाऽऽदिभिर्युताः । सहस्राऽन्तास्तथा
तासां वर्णवाहनकल्पना ॥ ९ ॥ शक्तिसेनाकल्पना च ब्रह्मण्येवँ हि पञ्चधा । कल्पि-
तस्य शरीरस्य तस्य सेनाऽऽदिकल्पना ॥ १० ॥ ब्रह्माऽऽदीनां वाचकोऽयं मन्त्रोऽन्व-
र्थोऽऽदिसंज्ञिकः । जप्तव्यो मन्त्रिणा नैवं विना देवः प्रसीदति ॥ ११ ॥ क्रियाकर्मे-

ज्यकर्तॄणामर्थं मन्त्रो वदत्यथ । मननात्त्राणनान्मन्त्रस्सर्ववाच्यस्य वाचकः ॥ १२ ॥ सोऽभयस्याऽस्य देवस्य विग्रहो यन्त्रकल्पना । विना यन्त्रेण चेत्पूजा देवता न प्रसीदति ॥ १३ ॥ इति रामपूर्वतापिन्युपनिषदि प्रथमोपनिषत् ॥ स्वभूर्ज्योतिर्मयोऽनन्तरूपी स्वेनैव भासते । जीवत्वेन समो यस्य सृष्टिस्थितिलयस्य च ॥ १ ॥ कारणत्वेन चिच्छक्त्या रजस्सत्त्वतमोगुणैः । यथैव वटबीजस्थः प्राकृतश्च महान्द्रुमः ॥२॥ तथैव रामबीजस्थं जगदेतच्चराऽचरम् । रेफाऽऽरूढा मूर्त्तयस्स्युश्शक्तयस्तिस्र एव चेति ॥३॥ इति रामतापिन्युपनिषदि द्वितीयोपनिषत् ॥ सीतारामौ तन्मयावत्र पूज्यौ जातान्याभ्यांभुवनानि द्विसप्त । स्थितानि च प्रहतान्येव तेषु ततो रामो मानवो माययाऽधात् ॥१॥ जगत्प्राणायाऽऽत्मनेऽस्मै नमस्स्यान्नमस्त्वैक्यं प्रवदेत्प्राग्गुणेनेति ॥ इति रामतापिन्यु०

तृतीयोपनिषत् ॥ जीववाची नमो नाम चाऽऽत्मारामेति गीयते । तदात्मिका या चतुर्थी तथा मायेति गीयते ॥ १ ॥ मन्त्रोऽयं वाचको रामो वाच्यस्स्याद्योग एतयोः । फलदश्चैव सर्वेषाँ साधकानां न सँशयः ॥ २ ॥ यथा नामी वाचकेन नाम्ना योऽभिमुखो भवेत् । तथा बीजाऽऽत्मको मन्त्रो मन्त्रिणोऽभिमुखो भवेत् ॥ ३ ॥ बीजशक्तिं न्यसेद्दक्षवामयोस्तनयोरपि । कीलो मध्ये विना भाव्यस्स्ववाञ्छाविनियोगवान् ॥ ४ ॥ सर्वेषामेव मन्त्राणां एष साधारणःक्रमः । अत्र रामोऽनन्तरूपस्तेजसा वह्निना समः ॥ ५ ॥ सत्त्वनुष्णगुर्विश्वश्चेदग्नीषोमाऽऽत्मकं जगत् । उत्पन्नस्सीतया भाति चन्द्रश्चन्द्रिकया यथा ॥ ६ ॥ प्रकृत्या सहितश्श्यामः पीतवासा जटाधरः । द्विभुजः कुण्डली रत्नमाली धीरो धनुर्धरः ॥ ७ ॥ प्रसन्नवदनो जेता धृष्टयष्टकविभूषितः । प्रकृत्या पर-

मेश्वर्या जगद्योन्याऽङ्किताऽङ्कभृत् ॥८॥ हेमाऽऽभया द्विभुजया सर्वाऽलङ्कृतया चिता। श्लिष्टः कमलधारिण्या पुष्टः कोसलजाऽऽत्मजः ॥९॥ दक्षिणे लक्ष्मणेनाऽथ सधनुष्पाणिना पुनः। हेमाऽऽभेनाऽनुजेनैव तथा कोणत्रयं भवेत् ॥१०॥ तथैव तस्य मन्त्रस्य यस्याऽणुश्च स्वङेऽन्तया। एवं त्रिकोणरूपँ स्यात्तं देवा ये समाययुः ॥ ११ ॥ स्तुतिं चक्रुश्च जगतः पतिं कल्पतरौ स्थितम्। कामरूपाय रामाय नमो मायामयाय च ॥१२॥ नमो वेदाऽऽदिरूपाय ओङ्काराय नमो नमः। रमाधराय रामाय श्रीरामायाऽऽत्ममूर्त्तये ॥ १३ ॥ जानकीदेहभूषाय रक्षोघ्नाय शुभाऽङ्गिने। भद्राय रघुवीराय दशाऽऽस्याऽन्तकरूपिणे ॥ १४ ॥ रामभद्र महेष्वास रघुवीर नृपोत्तम। भो दशाऽऽस्याऽन्तकाऽस्माकँ रक्षां देहि श्रियं च ते ॥ १५ ॥ त्वमै (मी) श्वर्यं (र्यो) दापयाऽथ संप्रत्याश्वरि-

मारणम् । कुर्विंतिस्तुत्य देवाऽऽद्याः तेन सार्धँ सुखँ स्थिताः ॥ १६ ॥ स्तुवन्त्येवँ हि ऋषयस्तदा रावण आसुरः । रामपत्नीं वनस्थां यस्स्वनिवृत्त्यर्थमाददे ॥ १७ ॥ स रावण इति ख्यातो यद्वा रावाच्च रावणः । तव्द्याजेनेक्षितुँ सीताँ रामो लक्ष्मण एव च ॥ १८ ॥ विचेरतुस्तदा भूमौ देवीँ सन्दृश्य चाऽऽसुरम् । हत्वा कबन्धँ शबरीं गत्वा तस्याऽऽज्ञया तया ॥ १९ ॥ पूजितो वायुपुत्रेण भक्तेन च कपीश्वरम् । आहूय शँसताँ सर्वमाद्यन्तँ रामलक्ष्मणौ ॥ २० ॥ स तु रामे शङ्कितस्सन्प्रत्यया‌ऽर्थे च दुन्दुभेः । विग्रहं दर्शयामास यो रामस्तमचिक्षिपत् ॥ २१ ॥ सप्तसालान्विभिद्याऽऽशु मोदते राघवस्तदा । तेन हृष्टः कपीन्द्रोऽसौ सरामस्तस्य पत्तनम् ॥ २२ ॥ जगामाऽगर्जद-नुजो वालिनो वेगतो गृहात् । तदा वाली निर्जगाम तं वालिनमथाऽऽह्वे ॥ २३ ॥

S31

निहत्य राघवो राज्ये सुग्रीवँ स्थापयेत्ततः । हरीनाहूय सुग्रीवस्त्वाह चाऽऽशाविदोऽधुना ॥ २४ ॥ आदाय मैथिलीमद्य ददताऽऽश्वाशु गच्छत । ततस्ततार हनुमानब्धिं लङ्काँ समाययौ ॥ २५ ॥ सीतां दृष्ट्वाऽसुरान्हत्वा पुरं दग्ध्वा तथा स्वयम् । आगत्य रामेण सह न्यवेदयत तत्त्वतः ॥ २६ ॥ तदा रामः क्रोधरूपी तानाहूयाऽथ वानरान् । तैस्सार्धमादायाऽस्त्राणि पुरीं लङ्काँ समाययौ ॥ २७ ॥ तां दृष्ट्वा तदधीशेन सार्धं युद्धमकारयत् । घटश्रोत्रसहस्राऽक्षजिह्वयां युक्तं तमाहवे ॥ २८ ॥ हत्वा बिभीषणं तत्र स्थाप्याऽथ जनकाऽऽत्मजाम् । आदायाऽङ्कस्थितां कृत्वा स्वपुरं तैर्जगाम सः ॥ २९ ॥ ततस्सिह्माऽऽसनस्थस्सन् द्विभुजो रघुनन्दनः । धनुर्धरः प्रसन्नाऽऽत्मा सर्वाऽऽभरणभूषितः ॥ ३० ॥ मुद्रां ज्ञानमयीं याम्ये वामे तेजःप्रकाशिनीम् । धृत्वा व्याख्या-

ननिरतश्चिन्मयः परमेश्वरः ॥ ३१ ॥ उदग्दक्षिणयोस्स्वस्य शत्रुघ्नभरतौ धृतः । हनू-
मन्तं च श्रोतारमग्रतस्स्यात्त्रिकोणगम् ॥ ३२ ॥ भरताऽधस्तु सुग्रीवँ शत्रुघ्नाऽधो बिभी-
षणम् । पश्चिमे लक्ष्मणं तस्य धृतच्छत्रँ सचामरम् ॥ ३३ ॥ तदधस्तौ तालवृन्तकरौ
त्र्यश्रं पुनर्भवेत् । एवँ षट्कोणमादौ स्वदीर्घाऽङ्गैरेष संयुतः ॥ ३४ ॥ द्वितीयं वासुदेवा-
ऽऽद्यैराग्नेयाऽऽदिषु संयुतः । तृतीयं वायुसूनुं च सुग्रीवं भरतं तथा ॥ ३५ ॥ बिभीषणं
लक्ष्मणं च अङ्गदं चाऽरिमर्दनम् । जाम्बवन्तं च तैर्युक्तस्ततो धृष्टिर्जयन्तकः ॥ ३६ ॥
विजयश्च सुराष्ट्रश्च राष्ट्रवर्धन एव च । अशोको धर्मपालश्च सुमन्त्रश्चैभिरावृतः ॥ ३७ ॥
तत स्सहस्रदृग्वन्हिर्धर्मज्ञो वरुणोऽनिलः । इन्द्रीशधात्रनन्ताश्च दशभिश्चैभिरावृतः॥ ३८॥
बहिस्तदायुधैः पूज्यो नीलाऽऽदिभिरलङ्कृतः । वसिष्ठवामदेवाऽऽदिमुनिभिस्समुपासितः

॥ ३९ ॥ एवमुद्देशतः प्रोक्तं निर्देशस्तस्य चाऽधुना । त्रिरेखापुटमालिख्य मध्ये तार-
द्वयं लिखेत् ॥ ४० ॥ तन्मध्ये बीजमालिख्य तदधस्साध्यमालिखेत् । द्वितीयाऽ (यं)
न्तं च तस्योर्ध्वे षष्ठ्यन्तँ साधकं तथा ॥ ४१ ॥ कुरुद्वयं च तत्पार्श्वे लिखेद्बीजा-
ऽन्तरे रमाम् । तत्सर्वं प्रणवाभ्यां च वेष्टयेच्छुद्धबुद्धिमान् ॥ ४२ ॥ दीर्घभाजि षडश्रे
तु लिखेद्बीजँ हृदादिभिः । कोणपार्श्वे रमामाये तदग्रेऽनङ्गमालिखेत् ॥ ४३ ॥ क्रोधं
कोणाऽग्राऽन्तरेषु लिख्य मन्त्र्यभितो गिरम् । वृत्तत्रयँ साऽष्टपत्रँ सरोजे विलिखे-
त्स्वरान् ॥ ४४ ॥ केसरे चाऽष्टपत्रे च वर्गाऽष्टकमथाऽऽलिखेत् । तेषु मालामनोर्वर्णा-
न्विलिखेदूर्मिसङ्ख्यया ॥ ४५ ॥ अन्ते पञ्चाऽक्षराण्येवं पुनरष्टदलं लिखेत् । तेषु नारा-
ऽयणाऽष्टाऽर्णाल्लूँ लिख्य तत्केसरे रमाम् ॥ ४६ ॥ तद्बहिर्द्वादशदलं विलिखेद्द्वादशा-

ऽक्षरम् । अथों नमो भगवते वासुदेवाय इत्ययम् ॥ ४७ ॥ आदिक्षाऽन्तान्केसरेषु वृत्ताऽऽकारेण संलिखेत् । तद्बहिष्षोडशदलं लिख्य तत्केसरे ह्नियम् ॥ ४८ ॥ वर्मा-ऽस्त्रनतिसंयुक्तं दलेषु द्वादशाऽक्षरम् । तत्सन्धिष्विरजादीनां मन्त्रान्मन्त्री समालिखेत् ॥ ४९ ॥ ह्नं स्त्रँ भ्रं व्रं लूमँ श्रं ज्रं ( स्त्रँ-स्त्रं-भृं-वृं-लृमँ-श्रं-जृं ) च लिखेत् सम्यक्त तो बहिः । द्वात्रिंशाऽरं महापद्मं नादबिन्दुसमायुतम् ॥ ५० ॥ विलिखेन्मन्त्रराजा-ऽर्णांस्तेषु पात्रेषु यत्नतः । ध्यायेदष्टवसूनेकादशरुद्रांश्च तत्र वै ॥ ५१ ॥ द्वादशेनाँश्च धातारं वषट्कारं च तद्बहिः । भूत (भू) गृहं वज्रशूलाऽऽढ्यँ रेखात्रयसमन्वितम् ॥५२॥ द्वारोपेतं च राश्यादिभूषितं फणिसंयुतम् । अनन्तो वासुकिश्चैव तक्षः कार्कोटपद्मकः ॥ ५३ ॥ महापद्मश्च शङ्खश्च गुलिकोऽष्टौ प्रकीर्तिताः । एवं मण्डलमालिख्य तस्य दिक्षु

विदिक्षु च ॥५४॥ नारसिह्मं चं वाराहं लिखेन्मन्त्रद्वयं तथा। कूटो रेफाऽ(रुभा)नुग्र-
हेन्दुनादशक्त्यादिभिर्युतः ॥ ५५ ॥ यो नृसिह्मस्समाख्यातो ग्रहमारणकर्मणि। अन्त्याऽ-
ङ्घ्रीशावियद्बिन्दुनादैर्बीजं च सौकरम् ॥ ५६ ॥ हुंकारं चाऽत्र रामस्य मालामन्त्रोऽ-
धुनेरितः। तारो नतिश्च निद्रायास्स्मृतिर्मेदश्च कामिका ॥ ५७ ॥ रुद्रेण संयुता
वन्हिर्मेधाऽमरविभूषिता। दीर्घा क्रूरयुता ह्लादिन्यथो दीर्घसमायुता ॥ ५८ ॥ क्षुधा क्रोधि-
न्यमोघा च विश्वमप्यथ मेधया। युक्ता दीर्घज्वालिनी च सुसूक्ष्मा मृत्युरूपिणी ॥५९॥
सप्रतिष्ठा ह्लादिनी त्वक्क्ष्वेलप्रीतिश्च साऽमरा। ज्योतिस्तीक्ष्णाऽग्निसंयुक्ता श्वेताऽनुस्वा-
रसंयुता ॥६०॥ कामिकाऽपञ्चमू (मो) लाऽन्तस्तान्ताऽन्तो थाऽन्त इत्यथ। स साऽन-
ऽन्तो दीर्घयुतो वायुस्सूक्ष्मयुतो विषः ॥ ६१ ॥ कामिका कामका रुद्रयुक्ताऽथोऽथ (घोऽध)

स्थिराऽऽतपा । तापनी दीर्घयुक्ता भूरिनलोऽनन्तगोऽनिलः ॥ ६२ ॥ नाराऽयणाऽऽत्मकः कालः प्राऽणो(णाऽम्)भो विद्यया युतः । पीताऽरातिस्तथा लाऽन्तो योन्या युक्तस्ततो नतिः ॥ ६३ ॥ सप्तचत्वारिँशद्वर्णगुणाऽन्तस्स्पृङ्मनुस्स्वयम् । राज्याभिषिक्तस्य तस्य रामस्योक्तक्रमाल्लिखेत् ॥ ६४ ॥ इदँ सर्वाऽऽत्मकं यन्त्रं प्रागुक्तमृषिसेवितम् । सेवकानां मोक्षकरमायुरारोग्यवर्धनम् ॥ ६५ ॥ अपुत्राणां पुत्रदं च बहुना किमनेन वै । प्राप्नु-वन्ति क्षणात्सम्यगत्र धर्मादिकानपि ॥ ६६ ॥ इदँ रहस्यं परममीश्वरेणाऽपि दुर्गमम् । इदं यन्त्रँ समाख्यातं न देयं प्राकृते जने ॥ ६७ ॥ इति ॥ इति तुरीयोपनिषत् ॥

ॐ भूताऽऽदिकँ शोधयेद्द्वारपूजां कृत्वा पद्माऽऽद्यासनस्थः प्रसन्नः । अर्चाविधावस्य पीठाऽधरोर्ध्वपार्श्वाऽर्चनं मध्यपद्माऽर्चनं च ॥ १ ॥ कृत्वा मृदुश्लक्ष्णसुतूलिकायाँ

रत्नाऽऽसने देशिकमर्चयित्वा । शक्तिं चाऽऽधाराऽऽख्यका कूर्मनागौ पृथिव्यब्जे स्वाऽऽसनाऽधः प्रकल्प्य ॥ २ ॥ विघ्नेशं दुर्गां क्षेत्रपालं च वाणीं बीजाऽऽदिकाँश्चाऽग्निदेशाऽऽदिकाँश्च । पीठस्याऽङ्घ्रिष्वेष धर्माऽऽदिकाँश्च नन्दीपूर्वांस्तांस्तत्तद्दिक्ष्वर्चयेच्च ( नत्वा पूर्वाऽऽद्यासु दिक्ष्वर्चयेच्च ) ॥ ३ ॥ मध्ये क्रमादर्कविध्वग्नितेजाँस्युपर्युपर्यादिमैरर्चितानि । रजस्सत्त्वं तम एतानि वृत्तत्रयं बीजाऽऽढ्यं क्रमाद्भावयेच्च ॥ ४ ॥ आशाव्याशास्वप्यथाऽऽत्मानमन्तराऽऽत्मानं वा परमाऽऽत्मानमन्तः । ज्ञानाऽऽत्मानं चाऽर्चयेत्तस्य दिक्षु मायाविद्ये ये कलापारतत्त्वे ॥ ५ ॥ सम्पूजयेद्विमलाऽऽदीश्च शक्तीरभ्यर्चयेद्देवमावाहयेच्च । अङ्गव्यूहाऽनिलजाऽऽद्यैश्च पूज्य धृष्ट्यादिकैर्लोकपालैस्तदस्त्रैः ॥ ६ ॥ वसिष्ठाऽऽद्यैर्मुनिभिर्नीलमुख्यैराराधयेद्राघवं चन्दनाऽऽद्यैः । मुख्योपहारैर्विविधैश्च पूज्यै-

स्तस्मै जपाऽऽदींश्च सम्यक् प्रकल्प्य ॥ ७ ॥ एवं भूतं जगदाधारभूतँ रामं वन्दे सच्चिदानन्दरूपम् । गदाऽरिशङ्खाऽब्जधरं भवाऽरिँ स यो ध्यायेन्मोक्षमाप्नोति सर्वः ॥ ८ ॥ विश्वव्यापी राघवो यस्तदानीमन्तर्दधे शङ्खचक्रे. गदाऽब्जे । धृत्वा रमासहितस्साऽनुजश्च सपत्तनस्साऽनुगस्सर्वलोकी ॥ ९ ॥ तद्भक्ता ये लब्धकामाँश्च भुक्त्वा तथा पदं परमं यान्ति ते च । इमा ऋचस्सर्वकामाऽर्थदाश्च ये ते पठन्त्यमला यान्तिमोक्षम् ॥ १० ॥ इति पञ्चमोपनिषत् । चिन्मयेऽस्मिंस्त्रयोदश । स्वभूर्ज्योतिस्तिस्त्रः । सीतारामावेका । जीववाची षट्षष्टिः । भूतादिकमेकादश । पञ्चखण्डेषु त्रिनवतिः । इति श्रीरामपूर्वतापिन्युपनिषत्समाप्ता ॥

अथ रामोत्तरतापिन्युपनिषत् ॥ ॐ बृहस्पतिरुवाच याज्ञवल्क्यम् । यदनु

कुरुक्षेत्रं देवानां देवयजनँ सर्वेषां भूताना ब्रह्मसदनमविमुक्तं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम् । तस्माद्यत्र क्व च न गच्छति तदेव मन्येतेतीदं वै कुरुक्षेत्रं देवानां देवयजनँ सवेषां भूतानां ब्रह्मसदनम् । अत्र हि जन्तोः प्राऽणेपूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे । येनाऽसावमृती भूत्वा मोक्षी भवति । तस्मादविमुक्तमेव निषेवेत । अविमुक्तं न विमुञ्चेत् । एवमेवैतद्याज्ञवल्क्य ॥ १ ॥ अथ हैनं भारद्वाजः पप्रच्छ याज्ञवल्क्यं किं तारकं किं तारयतीति । स होवाच याज्ञवल्क्यस्तारकं दीर्घाऽनलं बिन्दुपूर्वकं दीर्घाऽनलं पुनर्मांय नमश्चन्द्राय नमो भद्राय नम इत्येतद्ब्रह्माऽऽत्मिकास्सच्चिदानन्दाऽऽख्या इत्युपासितव्यम् । अकारः प्रथमाऽक्षरो भवति । उकारो द्वितीयाऽक्षरो भवति । मकार स्त्रितीयाऽक्षरोभवति । अर्धमात्रश्चतुर्था-

ऽक्षरो भवति । बिन्दुः पञ्चमाऽक्षरो भवति । नादष्षष्ठाऽक्षरो भवति । तारकत्वात्तारको भवति । तदेव तारकं ब्रह्म त्वं विद्धि । तदेवोपासितव्यमिति ज्ञेयम् ॥ गर्भजन्मजरा-मरणसँसारमहद्भयात्सन्तारयतीति ॥ तस्मादुच्यते षडक्षरं तारकमिति ॥ य एतत्तारकं ब्रह्म ब्राह्मणो नित्यमधीते। स पाप्मानं तरति । स मृत्युं तरति । स ब्रह्महत्यां तरति । स भ्रूणहत्यां तरति । स वीरहत्यां तरति । स सर्वहत्यां तरति । स सँसारं तरति । स सर्वं तरति । सोऽविमुक्तमाश्रितो भवति । स महान्भवति । सोऽमृतत्वं च गच्छति ॥२॥ अत्रैते श्लोका भवन्ति ॥ अकाराऽक्षरसम्भूतस्सौमित्रिर्विश्वभावनः । उकाराऽक्षरस-म्भूतश्शत्रुघ्नस्तैजसाऽऽत्मकः ॥१॥ प्राऽऽज्ञाऽऽत्मकस्तु भरतो मकाराऽक्षरसम्भवः । अर्ध-मात्राऽऽत्मको रामो ब्रह्माऽऽनन्दैकविग्रहः ॥२॥ श्रीरामसान्निध्यवशाज्जगदाधारकारिणी ।

उत्पत्तिस्थितिसँहारकारिणी सर्वदेहिनाम् ॥ ३ ॥ सा सीता भवति ज्ञेया मूलप्रकृतिसं-
ज्ञिता । प्रणवत्वात्प्रकृतिरिति वदन्ति ब्रह्मवादिनः ॥ ४ ॥ इति ॥ ओमित्येतदक्षरमिदँ
सर्वं तस्योपव्याख्यानं भूतं भव्यं भविष्यदिति । सर्वमोङ्कार एव । यच्चाऽन्यात्त्रिकालाऽतीतं
तदप्योङ्कार एव । सर्वँ ह्येतद्ब्रह्म । अयमात्मा ब्रह्म । सोऽयमात्मा चतुष्पाज्जागरितस्थानो
बहिःप्रज्ञस्सप्ताऽङ्ग एकोनविशँतिमुख स्थूलभुग्वैश्वानरः प्रथमः पादः ॥ स्वप्नस्थानोऽन्तः
प्रज्ञस्सप्ताऽङ्ग एकोनविशँतिमुखः प्रविविक्तभुक् तैजसो द्वितीयः पादः ॥ यत्र सुप्तो न
कं च न कामं कामयते न कं च न स्वप्नं पश्यति तत्सुपुप्तम् । सुपुप्तस्थान एकीभूतः
प्रज्ञानघन एवाऽऽनन्दमयो ह्यानन्दभुक् चेतोमुखः प्राऽऽज्ञस्तृतीयः पादः ॥ एष सर्वेश्वर
एष सर्वज्ञ एषोऽन्तर्याम्येष योनिस्सर्वस्य प्रभवाऽप्ययौ हि भूतानाम् । नाऽन्तःप्रज्ञं न

बहिः प्रज्ञं नोभयतःप्रज्ञं न प्रज्ञं नाऽप्रज्ञं न प्रज्ञानघनमदृश्यमव्यवहार्यमग्राह्यमलक्षण-मचिन्त्यमव्यपदेश्यमेकाऽऽत्मप्रत्ययसारं प्रपञ्चोपशमँ शान्तँ शिवमद्वैतं चतुर्थं मन्यन्ते । स आत्मा स विज्ञेयस्सदोज्ज्वलोऽविद्यातत्कार्यहीनस्स्वाऽऽत्मबन्धहरस्सर्वदा द्वैतर-हित आनन्दरूपस्सर्वाऽधिष्ठानसन्मा(त्तामा)त्रो निरस्ताऽविद्यातमोमोहोऽहमेवेति सम्भा-व्याऽहमोन्तत्सद्यत्परम्ब्रह्म रामचन्द्राश्चिदात्मकः । सोऽहमोन्तद्रामभद्रपरञ्ज्योतीरसोऽह-मोमित्यात्मानमादाय मनसा ब्रह्मणैकीकुर्यात् ॥ सदा रामोऽहमस्मीति तत्त्वतः प्रवदन्ति ये । न ते सँसारिणो नूनँ राम एव न सँशयः ॥ इत्युपनिषत् ॥ यएवं वेद स मुक्तो भव-तीति याज्ञवल्क्यः ॥ अथ हैनमत्रिः पप्रच्छ याज्ञवल्क्यं य एषोऽनन्तोऽव्यक्तपारिपूर्णा-ऽऽनन्दैकचिदात्मा तं कथमहं विजानीयामिति । स होवाच याज्ञवल्क्यः । सोऽविमुक्त

उपाऽऽस्योऽयम् । एषोऽनन्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठित इति । सोऽविमुक्तः कस्मिन् प्रतिष्ठित इति । वरणायां नास्यां च मध्ये प्रतिष्ठित इति ॥ का वै वरणा का च नासीति । जन्माऽन्तरकृतान्त्सर्वान्दोषान् वारयतीति तेन वरणा भवतीति । सर्वानिन्द्रियकृतान्पापान्नाशयतीति तेन नासी भवतीति । कतमच्चाऽस्य स्थानं भवतीति । भ्रुवोर्घ्राणस्य च यस्सन्धिस्स एष द्यौर्लोकस्य परस्य च सन्धिर्भवतीति । एतद्वै सन्धिँ सन्ध्यां ब्रह्मविद उपाऽऽसत इति । सोऽविमुक्त उपाऽऽस्य इति । सोऽविमुक्तं ज्ञानमाचष्टे यो वा एतदेवं वेद ॥ अथ तं प्रत्युवाच । श्रीरामस्य मनुं काश्यां जजाप वृषभध्वजः । मन्वन्तरसहस्रैस्तु जपहोमाऽर्चनाऽऽदिभिः ॥ १ ॥ ततः प्रसन्नो भगवाञ् छ्रीरामः प्राऽऽह शङ्करम् । वृणीष्व यदभीष्टं तद्दास्यामि परमेश्वर ॥२॥ इति ॥ अथ सच्चिदानन्दाऽऽत्मानँ

श्रीराममीश्वरः पप्रच्छ। मणिकर्ण्यां मम क्षेत्रे गङ्गायां वा तटे पुनः। म्रियते देही तज्जन्तो मुक्तिर्नाऽतो वराऽन्तरम् ॥३॥ इति ॥ अथ स होवाच श्रीरामः ॥ क्षेत्रेऽस्मिन्तव देवेश यत्र कुत्राऽपि वा मृताः। कृमिकीटाऽऽदयोऽप्याशु मुक्तास्सन्तु न चाऽन्यथा ॥ ४ ॥ अविमुक्ते तव क्षेत्रे सर्वेषां मुक्तिसिद्धये। अहँ सन्निहितस्तत्र पाषाणप्रतिमाऽऽदिषु ॥५॥ क्षेत्रेऽस्मिन्योऽर्चयेद्भक्त्या मन्त्रेणाऽनेन माँ शिव। ब्रह्महत्याऽऽदिपापेभ्यो मोक्षयिष्यामि मा शुचः ॥६॥ त्वत्तो वा ब्रह्मणो वाऽपि ये लभन्ते षडक्षरम्। जीवन्तो मन्त्रसिद्धास्स्युर्मुक्ता मां प्राप्नुवन्ति ते ॥ ७ ॥ मुमूर्षोर्दक्षिणे कर्णे यस्य कस्याऽपि वा स्वयम्। उपदेक्ष्यसि मन्मन्त्रँ स मुक्तो भविता शिव ॥८॥ इति ॥ श्रीरामचन्द्रेणोक्तम् ॥ अथ हैनं भारद्वाजो याज्ञवल्क्यमुवाचाऽथ कैर्मन्त्रैस्तुतश्श्रीरामचन्द्रः प्रीतो भवति। स्वाऽऽत्मानं

दर्शयति । तान्नो ब्रूहि भगवन्निति । स होवाच याज्ञवल्क्यः ॥ पूर्वँ सत्यलोके श्रीराम-चन्द्रेणैवँ शिक्षितो ब्रह्मा पुनरेतया गाथया नमस्करोति ॥ विश्वरूपधरं विष्णुं नाराऽय-णमनामयम् । पर्णाऽऽनन्दैकविज्ञानं परम्ब्रह्मस्वरूपिणम् ॥ मनसा सँस्मरन्ब्रह्म तुष्टाव परमेश्वरम् । ॐ यो ह वै श्रीरामचन्द्रस्स भगवानद्वैतपरमाऽऽनन्द आत्मा यत्परम्ब्रह्म भूर्भुवस्सुवस्तस्मै वै नमो नमः ॥ १ ॥ यथा प्रथममन्त्रोक्तावाद्यन्तौ तथा सर्वमन्त्रेषु ज्ञातव्यौ ॥ यश्चाऽखण्डैकरसाऽऽत्मा ॥ २ ॥ यच्च ब्रह्माऽऽनन्दाऽमृतम् ॥ ३ ॥ यत्ता-रकं ब्रह्म ॥ ४ ॥ यो ब्रह्मा विष्णुर्महेश्वरो यस्सर्वदेवाऽऽत्मा ॥ ५ ॥ ये सर्वे वेदा-स्साऽङ्गास्सशाखास्सेतिहासपुराणाः ॥ ६ ॥ यो जीवाऽन्तराऽऽत्मा ॥ ७ ॥ यस्सर्वभू-ताऽन्तराऽऽत्मा ॥ ८ ॥ ये देवाऽसुरमनुष्याऽऽदिभावाः ॥ ९ ॥ ये मत्स्यकूर्माऽऽद्यव-

ताराः ॥ १० ॥ योऽन्तःकरणचतुष्टयाऽऽत्मा ॥ ११ ॥ यश्च प्राऽणः ॥ १२ ॥ यश्च यमः ॥ १३ ॥ यश्चाऽन्तकः ॥ १४ ॥ यश्च मृत्युः ॥ १५ ॥ यच्चाऽमृतम् ॥ १६ ॥ यानि च पञ्च महाभूतानि ॥ १७ ॥ य स्स्थावरजङ्गमाऽऽत्मा ॥ १८ ॥ ये पञ्चाऽग्नयः ॥ १९ ॥ यास्सप्त महाव्याहृतयः ॥ २० ॥ या विद्या ॥ २१ ॥ या सरस्वती ॥ २२ ॥ या लक्ष्मीः ॥ २३ ॥ या गौरी ॥ २४ ॥ या जानकी ॥ २५ ॥ यच्च त्रैलोक्यम् ॥ २६ ॥ यस्सूर्यः ॥ २७ ॥ यस्सोमः ॥ २८ ॥ यानि च नक्षत्राणि ॥ २९ ॥ ये च नव ग्रहाः ॥ ३० ॥ ये चाऽष्टौ लोकपालाः ॥ ३१ ॥ ये चाऽष्टौ वसवः ॥ ३२ ॥ ये चैकादश रुद्राः ॥ ३३ ॥ ये च द्वादशाऽऽदित्याः ॥ ३४ ॥ यच्च भूतं भव्यं भविष्यत् ॥ ३५ ॥ यद्ब्रह्माऽण्डस्य बहिर्व्याप्तम् ॥ ३६ ॥ यो हिरण्यगर्भः ॥ ३७ ॥ या

प्रकृतिः ॥ ३८ ॥ यश्चोङ्कारः ॥ ३९ ॥ शाश्वतस्त्रोऽर्धमात्राः ॥ ४० ॥ यः परमपुरुषः ॥ ४१ ॥ यश्च महेश्वरः ॥ ४२॥ यश्च महादेवः ॥४३॥ य ॐ नमो भगवते वासुदेवाय ॥ ४४ ॥ यो महाविष्णुः ॥ ४५ ॥ यः परमाऽऽत्मा ॥ ४६ ॥ यो विज्ञानाऽऽत्मा ॥ ४७ ॥ ॐ यो ह वै श्रीरामचन्द्रस्स भगवानद्वैतपरमाऽऽनन्द आत्मा। यस्सच्चिदानन्दाऽद्वैतैकचिदात्मा भूर्भुवस्सुवस्तस्मै वै नमो नमः॥ इति तान्ब्रह्माऽब्रवीत् । सप्तचत्वारिँशन्मन्त्रैर्नित्यं देवँ स्तुध्वम् । ततो देवः प्रीतो भवति । स्वाऽऽत्मानं दर्शयति । तस्माद्य एतैर्मन्त्रैर्नित्यं देवँ स्तौति स देवं पश्यति। सोऽमृत्वं च गच्छतीति महोपनिषत् ॥५॥ अथ हैनं भारद्वाजो याज्ञवल्क्यमुपसमेत्योवाच श्रीराममन्त्रराजस्य माहात्म्यमनुब्रूहीति । स होवाच याज्ञवल्क्यः। स्वप्रकाशः परञ्ज्योतिस्स्वानुभूत्यैकचिन्मयः ॥ तदेव

रामचन्द्रस्य मनोराद्यक्षरस्स्मृतः ॥ १ ॥ अखण्डैकरसाऽऽनन्दस्तारकब्रह्मवाचकः ।
रामायेति सुविज्ञेयस्सत्याऽऽनन्दचिदात्मकः ॥ २ ॥ नमःपदँ सुविज्ञेयं पूर्णाऽऽनन्दैक-
कारणम् । सदा नमन्ति हृदये सर्वे देवा मुमुक्षवः ॥ ३ ॥ इति ॥ य एतं मन्त्रराजँ
श्रीरामचन्द्रषडक्षरं नित्यमधीते सोऽग्निपूतो भवति । स वायुपूतो भवति । स आदि-
त्यपूतो भवति । स सोमपूतो भवति । स ब्रह्मपूतो भवति । स विष्णुपूतो भवति । स
रुद्रपूतो भवति । स सर्वैर्देवैर्ज्ञातो भवति । स सर्वक्रतुभिरिष्टवान्भवति । तेनेतिहास-
पुराणानाँ रुद्राणाँ शतसहस्राणि जप्तानि सफलानि भवन्ति । श्रीरामचन्द्रमनुस्मरणेन
गायत्र्याश्शतसहस्राणि जप्तानि फलानि भवन्ति । प्रणवानामयुतकोटिजपा भवन्ति ।
दश पूर्वान्दशोत्तरान्पुनाति । स पङ्क्तिपावनो भवति । स महान्भवति । सोऽमृतत्वं च

गच्छति ॥ अत्रैते श्लोका भवन्ति । गाणापत्येषु शैवेषु शाक्तसौरेष्वभीष्टदः । वैष्णवेष्वपि सर्वेषु राममन्त्रः फलाऽधिकः ॥ ४ ॥ गाणपत्याऽऽदिमन्त्रेषु कोटिकोटिगुणाऽधिकः । मन्त्रस्तेष्वप्यनायासफलदोऽयँ षडक्षरः ॥ ५ ॥ षडक्षरोऽयं मन्त्रस्स्यात्सर्वाऽघौघनिवारणः । मन्त्रराज इति प्रोक्तस्सर्वेषामुत्तमोत्तमः ॥ ६ ॥ कृतं दिने यद्दुरितं पक्षमासर्त्तुवर्षजम् । सर्वं दहति निश्शेषं तूलराशि ( तूलाऽचल ) मिवाऽनलः ॥ ७ ॥ ब्रह्महत्यासहस्राणि ज्ञानाऽज्ञानकृतानि च । स्वर्णस्तेयसुरापानगुरुतल्पाऽयुतानि च ॥ ८ ॥ कोटिकोटिसहस्राणि उपपातकजान्यपि । सर्वाण्यपि प्रणश्यन्ति राममन्त्राऽनुकीर्त्तनात् ॥ ९ ॥ भूतप्रेतपिशाचाऽऽद्याः कूश्माण्डब्रह्मराक्षसाः । दूरादेव प्रधावन्ति राममन्त्रप्रभावतः ॥ १० ॥ ऐहलौकिकमैश्वर्यँ स्वर्गाऽऽद्यं पारलौकिकम् । कैवल्यं भगवत्त्वं

च मन्त्रोऽयँ साधयिष्यति ॥ ११ ॥ ग्राम्याऽऽरण्यपशुघ्नत्वँ सञ्चितं दुरितं च यत् । मद्यपानेन यत्पापं तदप्याशु विनाशयेत् ॥ १२ ॥ अभक्ष्यभक्षणोत्पन्नं मिथ्याज्ञानसमुद्भवम् । सर्वं विलीयते राममन्त्रस्याऽस्यैव कीर्तनात् ॥ १३ ॥ श्रोत्रियस्वर्णहरणाद्यच्च पापमुपस्थितम् । रत्नाऽऽदेश्चाऽपहारेण तदप्याशु विनाशयेत् ॥ १४ ॥ ब्राह्मणं क्षत्रियं वैश्यँ शूद्रँ हत्वा च किल्बिषम् । सञ्चिनोति नरो मोहाद्यद्यत्तदपि नाशयेत् ॥ १५ ॥ गत्वाऽपि मातरं मोहादगम्याश्चैव योषितः । उपाऽऽस्याऽनेन मन्त्रेण रामस्तदपि नाशयेत् ॥ १६ ॥ महापातकपापिष्ठसङ्गत्या सञ्चितं च यत् । नाशयेत्तत्कथाऽऽलापशयनाऽऽसनभोजनैः ॥ १७ ॥ पितृमातृवधोत्पन्नं बुद्धिपूर्वमघं च यत् । तदनुष्ठानमात्रेण सर्वमेतद्विलीयते ॥ १८ ॥ यत्प्रयागाऽऽदितीर्थोक्तप्रायश्चित्तशतै-

रपि । नैवाऽपनोद्यते पापं तदप्याशु विनाशयेत् ॥ १९ ॥ पुण्यक्षेत्रेषु सर्वेषु कुरुक्षेत्रा-ऽऽदिषु स्वयम् । बुद्धिपूर्वमघं कृत्वा तदप्याशु विनाशयेत् ॥ २० ॥ कृच्छ्रैस्तप्तपराका-ऽऽद्यैर्नानाचान्द्राऽयणैरपि । पापं च नाऽपनोद्यं यत्तदप्याशु विनाशयेत् ॥ २१ ॥ आत्मतुल्यसुवर्णाऽऽदिदानैर्बहुविधैरपि । किञ्चिदप्यपरिक्षीणं तदप्याशु विनाशयेत् ॥ २२ ॥ अवस्थात्रितयेष्वेव बुद्धिपूर्वमघं च यत् । तन्मन्त्रस्मरणेनैव निश्शेषं प्रविलीयते ॥ २३ ॥ अवस्थात्रितयेष्वेवं मूलबन्धमघं च यत् । तत्तन्मन्त्रोपदेशेन सर्वमेतत्प्रणश्यति ॥ २४ ॥ आब्रह्मबीजदोषाश्च नियमाऽतिक्रमोद्भवाः । स्त्रीणां च पुरुषाणां च मन्त्रेणाऽनेन नाशिताः ॥ २५ ॥ येषुयेष्वपि देशेषु रामभद्र उपाऽऽस्यते । दुर्भिक्षाऽऽदिभयं तेषु न भवेत्तु कदा च न ॥ २६ ॥ शान्तः प्रसन्नवदनो ह्यक्रोधो भक्तवत्सलः । अनेन सदृशो

मन्त्रो जगत्स्वपि न विद्यते ॥ २७ ॥ सम्यगाराधितो रामः प्रसीदत्येव सत्वरम् । ददात्यायुष्यमैश्वर्यमन्ते विष्णुपदं च यत् ॥ २८ ॥ तदेतदृचाभ्युक्तम् । ऋचो अक्षरे परमे व्योमन्यस्मिन्देवा अधिविश्वे निषेदुः । यस्तन्न वेद किमृचा करिष्यति । य इत्त-द्विदुस्त इमे समासते । तद्विष्णोः परमं पदँ सदा पश्यन्ति सूरयः । दिवीव चक्षु-राततम् । तद्विप्रासो विपन्यवो जागृवाँसस्समिन्धते । विष्णोर्यत्परमं पदम् । ॐ सत्य-मित्युपनिषत् ॥ ६ ॥ ॐ भद्रं कर्णेभिरिति शान्तिः ॥ इतिश्रीरामोत्तरतापिन्युपनिषत्समाप्ता ॥

अथ वासुदेवोपनिषत् ॥ यत्सर्वहृदयाऽऽगारं यत्र सर्वं प्रतिष्ठितम् । वस्तुतो यन्निराधारं वासुदेवपदं भजे ॥ ॐ आप्यायन्त्विति शान्तिः ॥ ॐ नमस्कृत्य भगवा-न्नारदस्सर्वेश्वरं वासुदेवं पप्रच्छ अधीहि भगवन्नूर्ध्वपुण्ड्रविधिं द्रव्यमन्त्रस्थानाऽऽदि-

सहितं मे ब्रूहीति । तँ होवाच भगवान्वासुदेवो वैकुण्ठस्थानादुत्पन्नं मम प्रीति-करं मद्भक्तैर्ब्रह्माऽऽदिभिर्धारितं विष्णुचन्दनं ममाऽङ्गे प्रतिदिनमालिप्तं गोपीभिः प्रक्षालनाद्गोपीचन्दनमाख्यातं मदङ्गलेपनं पुण्यं चक्रतीर्थाऽन्तस्थितं चक्रसमायुक्तं पीतवर्णं मुक्तिसाधनं भवति । अथ गोपीचन्दनं नमस्कृत्वोद्धृत्य गोपीचन्दन पापघ्न विष्णुदेहसमुद्भव । चक्राऽऽङ्कित नमस्तुभ्यं धारणान्मुक्तिदो भव । इमं मे गङ्गे इति जलमादाय विष्णोर्नुकमिति मर्दयेत् । अतो देवा अवन्तु न इत्येतैर्मन्त्रैर्वि-ष्णुगायत्र्या केशवाऽऽदिनामभिर्वा धारयेत् । ब्रह्मचारी वानप्रस्थो वा ललाटहृदयक-ण्ठबाहुमूलेषु वैष्णवगायत्र्या कृष्णाऽऽदिनामभिर्वा धारयेत् । इति त्रिवारमभिमन्त्र्य शङ्खचक्रगदापाणे द्वारकानिलयाऽच्युत । गोविन्द पुण्डरीकाऽक्ष रक्ष माँ शरणाऽऽगत-

मिति ध्यात्वा गृहस्थो ललाटाऽऽदिद्वादशस्थलेष्वनामिकाऽङ्गुल्या वैष्णवगायत्र्या केशवाऽऽदिनामभिर्वा धारयेत् । ब्रह्मचारी गृहस्थो वा ललाटहृदयकण्ठबाहुमूलेषु वैष्णवगायत्र्या कृष्णाऽऽदिनामभिर्वा धारयेत् । यतिस्तर्जन्या शिरोललाटहृदयेषु प्रणवेनैव धारयेत् । ब्रह्माऽऽदयस्त्रयो मूर्त्तयस्तिस्रो व्याहृतयस्त्रीणि छन्दाँसि त्रयोऽग्नय इति ज्योतिष्मन्तस्त्रयः कालास्तिस्रोऽवस्थास्त्रय आत्मानः पुण्ड्रास्त्रय ऊर्ध्वा अकार उकार मकार एते प्रणवमयोर्ध्वपुण्ड्रास्तदात्मा । सदेतदोमिति । तानेकधा समभवत् । ऊर्ध्वमुन्नमयत इत्योङ्काराऽधिकारी । तस्मादूर्ध्वपुण्ड्रं धारयेत् । परमहंसो ललाटे प्रणवेनैकमूर्ध्वपुण्ड्रं वा धारयेत् । तत्त्वप्रदीपप्रकाशं स्वाऽऽत्मानं पश्यन्योगी मत्सायुज्यमवाऽऽप्नोति । अथ वा न्यस्तहृदयपुण्ड्रमध्ये वा हृदयकमलमध्ये वा । तस्य मध्ये वह्निशिखा

॥ ५१ ॥ निरिच्छो वर्त्तते कार्ये स जीवन्मुक्त उच्यते । येन धर्ममधर्मं च मनोमननमीहितम् ॥ ५२ ॥ सर्वमन्तःपरित्यक्तं स जीवन्मुक्त उच्यते । यावती दृश्यकलना सकलेयं विलोक्यते ॥ ५३ ॥ सा येन सुष्ठु सन्त्यक्ता स जीवन्मुक्त उच्यते । कट्वम्ललवणं तिक्तममृष्टं मृष्टमेव च ॥ ५४ ॥ सममेव च यो भुङ्क्ते स जीवन्मुक्त उच्यते। जरामरणमापच्च राज्यं दारिद्र्यमेव च ॥ ५५ ॥ रम्यमित्येव यो भुङ्क्ते स जीवन्मुक्त उच्यते । धर्माऽधर्मौ सुखं दुःखं तथा मरणजन्मनी ॥ ५६ ॥ धिया येन सुसन्त्यक्तं स जीवन्मुक्त उच्यते । उद्वेगाऽऽनन्दरहितस्समया स्वच्छया धिया ॥ ५७ ॥ न शोचते न चोदेति स जीवन्मुक्त उच्यते । सर्वेच्छास्सकलाश्शङ्कास्सर्वेहास्सर्वनिश्चयाः ॥ ५८ ॥ धिया येन परित्यक्तास्स जीवन्मुक्त उच्यते । जन्मस्थितिविनाशेषु सोदयाऽस्तमयेषु

च ॥ ५९ ॥ सममेव मनो यस्य स जीवन्मुक्त उच्यते । न किं च न द्वेष्टि तथा न किञ्चिदपि काङ्क्षति ॥ ६० ॥ भुङ्क्ते यः प्रकृतान्भोगान्त्स जीवन्मुक्त उच्यते । शान्तसंसारकलनः कलावानपि निष्कलः ॥ ६१ ॥ यस्सचित्तोऽपि निश्चित्तस्स जीवन्मुक्त उच्यते । यस्समस्ताऽर्थजालेषु व्यवहार्यपि निस्स्पृहः ॥ ६२ ॥ पराऽर्थेष्विव पूर्णाऽऽत्मा स जीवन्मुक्त उच्यते । जीवन्मुक्तपदं त्यक्त्वा स्वदेहे कालसात्कृते ॥ ६३ ॥ विशत्यदेहमुक्तत्वं पवनोऽस्पन्दतामिव । विदेहमुक्तो नोदेति नाऽस्तमेति न शाम्यति ॥ ६४ ॥ न सन्नाऽसन्न दूरस्थो न चाऽहं न च नेतरः । ततस्तिमितगम्भीरं न तेजो न तमस्ततम् ॥ ६५ ॥ अनाख्यमनभिव्यक्तं सत्किञ्चिदवशिष्यते । न शून्यं नाऽपि चाऽऽकारि न दृश्यं नाऽपि दर्शनम् ॥६६॥ न च भूतपदाऽर्थौघसदनं तत्तया स्थितम् ।

किमप्यव्यपदेशाऽऽत्मा पूर्णात्पूर्णतराऽऽकृतिः ॥ ६७ ॥ न सन्नाऽसन्न सदसन्न भावो भावनं न च । चिन्मात्रं चैत्यरहितमनन्तमजरं शिवम् ॥ ६८ ॥ अनादिमध्यपर्यन्तं यदनादि निरामयम् । द्रष्टृदर्शनदृश्यानां मध्ये यद्दर्शनं स्मृतम् ॥ ६९ ॥ नाऽतः परतरं किञ्चिन्निश्चयोस्त्यपरो मुने । स्वयमेव त्वया ज्ञातं गुरुतश्च पुनश्श्रुतम् ॥ ७० ॥ स्वसङ्कल्पवशाद्बद्धो निस्सङ्कल्पाद्विमुच्यते । तेन स्वयं त्वया ज्ञातं ज्ञेयं यस्य महाऽऽत्मनः ॥ ७१ ॥ भोगेभ्यो ह्यरतिर्जाता दृश्याद्वा सकलादिह । प्राऽऽप्तं प्राऽऽप्तव्यमखिलं भवता पूर्णचेतसा ॥ ७२ ॥ स्वरूपे तपसि ब्रह्मन्मुक्तस्त्वं भ्रान्तिमुत्सृज । अतिबाह्यं तथा बाह्यमन्तराऽभ्यन्तरं धियः ॥ ७३ ॥ शुक पश्यन्न पश्येस्त्वं साक्षी सम्पूर्णकेवलः । विशश्राम शुकस्तूष्णीं स्वस्थे परमवस्तुनि ॥ ७४ ॥ वीतशोकभया-

ऽऽयासो निरीहश्छिन्नसंशयः । जगाम शिखरं मेरोस्समाध्यर्थमखण्डितम् ॥ ७५ ॥ तत्र वर्षसहस्राणि निर्विकल्पसमाधिना । देशे स्थित्वा शशामाऽसावात्मन्यस्नेहदीपवत् ॥ ७६ ॥ व्यपगतकलनाकलङ्कशुद्धस्स्वयममलाऽऽत्मनि पावने पदेऽसौ । सलिलकण इवाऽम्बुधौ महाऽऽत्मा विगलितवासनमेकता जगाम ॥ ७७ ॥ इति महोपनिषत् ॥ इति द्वितीयोऽध्यायः ॥ निदाघो नाम मुनिराट् प्राऽऽप्तविद्यश्च बालकः । विहृतस्तीर्थयात्राऽर्थं पित्राऽनुज्ञातवान्स्स्वयम् ॥ १ ॥ साऽर्धत्रिकोटितीर्थेषु स्नात्वा गृहमुपाऽऽगतः । स्वोदन्तं कथयामास ऋभुं नत्वा महायशाः ॥ २ ॥ साऽर्धत्रिकोटितीर्थेषु स्नानपुण्यप्रभावतः । प्रादुर्भूतो मनसि मे विचारस्सोऽयमीदृशः ॥ ३ ॥ जायते मृतये लोको म्रियते जननाय च । अस्थिरास्सर्वे एवेमे सचराऽचरचेष्टिताः ॥ ४ ॥ सर्वाऽऽपदां पदं पापा

भावा विभवभूमयः । अयश्शलाकासदृशाः परस्परमसङ्गिनः ॥ ५ ॥ शुष्यन्ते केवला भावा मनःकल्पनयाऽनया । भावेष्वरतिरायाता पथिकस्य मरुष्विव ॥ ६ ॥ शाम्यतीदं कथं दुःखमिति तप्तोऽस्मि चेतसा । चिन्तानिचयचक्राणि नाऽऽनन्दाय धनानि मे ॥ ७ ॥ सम्प्रसूतकलत्राणि गृहाण्युग्राऽऽपदामिव । इयमस्मिं स्थितोदारा संसारे परिपेलवा ॥ ८ ॥ श्रीर्मुने परिमोहाय साऽपि नूनं न शर्मदा । आयुः पल्लव कोणाऽग्रलम्बाऽम्बुकणभङ्गुरम् ॥ ९ ॥ उन्मत्त इव सन्त्यज्य याम्यकाण्डे शरीरकम् । विषयाऽऽशीविषाऽऽसङ्गपरिझर्झरचेतसाम् ॥ १० ॥ अप्रौढाऽऽत्मविवेकानामायुरायासकारणम् । युज्यते वेष्टनं वायोराकाशस्य च खण्डनम् ॥ ११ ॥ ग्रथनं च तरङ्गाणामास्था नाऽऽयुषि युज्यते । प्राऽऽप्यं सम्प्राऽऽप्यते येन भूयो येन न शोच्यते ॥१२॥

पराया निर्वृते स्थानं यत्तज्जीवितमुच्यते । तरवोऽपि हि जीवन्ति जीवन्ति मृगपाक्षिणः ॥ १३ ॥ स जीवति मनो यस्य मननेनोपजीवति । जातास्त एव जगति जन्तवस्साधुजीविताः ॥ १४॥ ये पुनर्नेह जायन्ते शेषा जरठगर्दभाः । भारो विवेकिनश्शास्त्रं भारो ज्ञानं च रागिणः ॥ १५ ॥ अशान्तस्य मनो भारो भारो नाऽऽत्मविदो वपुः । अहङ्कारवशादापदहङ्काराद्दुराधयः ॥ १६ ॥ अहङ्कारवशादीहा नाऽहङ्कारात्परो रिपुः । अहङ्कारवशाद्यद्यन्मया भुक्तं चराऽचरम् ॥ १७ ॥ तत्तत्सर्वमवस्त्वेव वस्त्वहङ्काररिक्तता । इतश्चेतश्च सुव्यग्रं व्यर्थमेवाऽभिधावति ॥ १८ ॥ मनो दूरतरं याति ग्रामे कौलेयको यथा । क्रूरेण जडतां याता तृष्णाभार्याऽनुगामिना ॥ १९ ॥ वशः कौलेयकेनेव ब्रह्मन्मुक्तोऽस्मि चेतसा । अप्याब्धिपानान्महतस्सुमेरून्मूलनादपि ॥ २० ॥

अपि वह्न्यशनाद्ब्रह्मन्विषमश्चित्तनिग्रहः । चित्तं कारणमर्थानां तस्मिन्त्सति जगत्त्रयम् ॥ २१ ॥ तस्मिन् क्षीणे जगत्क्षीणं तच्चिकित्स्यं प्रयत्नतः । यांयामहं मुनिश्रेष्ठ संश्रयामि गुणश्रियम् ॥ २२ ॥ तान्तां कृन्तति मे तृष्णा तन्त्रीमिव कुमूषिका । पदं करोत्यलङ्घ्येऽपि तृप्ता विफलमीहते ॥ २३ ॥ चिरं तिष्ठति नैकत्र तृष्णा चपलमर्कटी । क्षणमायाति पातालं क्षणं याति नभस्थलम् ॥ २४ ॥ क्षणं भ्रमति दिक्कुञ्जे तृष्णा हृत्पद्मषट्पदी । सर्वसंसारदुःखानां तृष्णैका दीर्घदुःखदा ॥ २५ ॥ अन्तःपुरस्थमपि या योजयत्यतिसङ्कटे । तृष्णाविषूचिकामन्त्रश्चिन्तात्यागो हि स द्विज ॥ २६ ॥ स्तोकेनाऽऽनन्दमायाति स्तोकेनाऽऽयाति खेदताम् । नाऽस्तिदेहसमश्शोच्यो नीचो गुणविवर्जितः ॥ २७ ॥ कलेवरमहङ्कारगृहस्थस्य महागृहम् । लुठत्वभ्येतु वा स्थैर्यं

किमनेन गुरो मम ॥ २८ ॥ पङ्क्तिबद्धेन्द्रियपशुं वल्गत्तृष्णागृहाऽङ्गणम् । चित्तभृत्यजनाऽऽकीर्णं नेष्टं देहगृहं मम ॥ २९ ॥ जिह्वामर्कटिकाऽऽक्रान्तवदनद्वारभीषणम् । दृष्टदन्ताऽस्थिशकलं नेष्टं देहगृहं मम ॥ ३० ॥ रक्तमांसमयस्याऽस्य सबाह्याऽभ्यन्तरे मुने । नाशैकधर्मिणो ब्रूहि कैव कायस्य रम्यता ॥ ३१ ॥ तडित्सु शरदभ्रेषु गन्धर्वनगरेषु च । स्थैर्यं येन विनिर्णीतं स विश्वसितु विग्रहे ॥ ३२ ॥ शैशवे गुरुतो भीतिर्मातृतः पितृतस्तथा । जनतो ज्येष्ठबालाच्च शैशवं भयमन्दिरम् ॥ ३३ ॥ स्वचित्तबिलसंस्थेन नानाविभ्रमकारिणा । बलात्कामपिशाचेन विवशः परिभूयते ॥ ३४ ॥ दासाः पुत्राः स्त्रियश्चैव बान्धवास्सुहृदस्तथा । हसन्त्युन्मत्तकमिव नरं वार्धककम्पितम् ॥ ३५ ॥ दैन्यदोषमयी दीर्घा वर्धते वार्धके स्पृहा । सर्वाऽऽपदामेकसखी हृदि

दाहप्रदायिनी ॥ ३६ ॥ क्वचिद्वा विद्यते यैषा संसारे सुखभावना । आयुस्तम्बमिवाऽऽसाद्य कालस्तामपि कृन्तति ॥ ३७ ॥ तृणं पांसुं महेन्द्रं च सुवर्णं मेरुसर्षपम् । आत्मम्भरितया सर्वमात्मसात्कर्त्तुमुद्यतः ॥ ३८ ॥ कालोऽयं सर्वसंहारी तेनाऽऽक्रान्तं जगत्त्रयम् । मांसपाञ्चालिकायास्तु यन्त्रलोलेऽङ्गपञ्जरे ॥ ३९ ॥ स्नाय्वस्थिग्रन्थिशालिन्या स्त्रियः किमिव शोभनम् । त्वङ्मांसरक्तबाष्पाऽम्बु पृथक्कृत्वा विलोचने ॥ ४० ॥ समालोकय रम्यं चेत्किं मुधा परिमुह्यसि । मेरुशृङ्गतटोल्लासिगङ्गाचलरयोपमा ॥ ४१ ॥ दृष्टा यस्मिन्मुने मुक्ताहारस्योल्लासशालिता । श्मशानेषु दिगन्तेषु स एव ललनास्तनः ॥ ४२ ॥ श्वभिरास्वाद्यते काले लघुपिण्ड इवाऽन्धसः । केशकज्जलधारिण्यो दुस्पर्शा लोचनप्रियाः ॥ ४३ ॥ दुष्कृताऽग्निशिखा नार्यो दहन्ति तृणवन्नरम् । ज्वलतामति-

दूरेऽपि सरसा अपि नीरसाः ॥ ४४ ॥ स्त्रियो हि नरकाऽग्नीनामिन्धनं चारु दारुणम् । कामनाम्ना किरातेन विकीर्णा मुग्धचेतसः ॥ ४५ ॥ नार्यो नरविहङ्गानामङ्गबन्धनवागुराः । जन्मपल्वलमत्स्यानां चित्तकर्दमचारिणाम् ॥ ४६ ॥ पुंसां दुर्वासनारज्जुर्नारीबडिशपिण्डिका । सर्वेषां दोषरत्नानां सुसमुद्गिकयाऽनया ॥ ४७ ॥ दुःखश्रृङ्खलया नित्यमलमस्तु मम स्त्रिया । यस्य स्त्री तस्य भोगेच्छा निस्त्रीकस्य क्व भोगभूः ॥ ४८ ॥ स्त्रियं त्यक्त्वा जगत्त्यक्तं जगत्त्यक्त्वा सुखी भवेत् । दिशोऽपि न हि दृश्यन्ते देशोऽप्यन्योपदेशकृत् ॥ ४९ ॥ शैला अपि विशीर्यन्ते शीर्यन्ते तारका अपि । शुष्यन्त्यपि समुद्राश्च ध्रुवोऽप्यध्रुवजीवनः ॥ ५० ॥ सिद्धा अपि विनश्यन्ति जीर्यन्ते दानवाऽऽदयः ॥ परमेष्ठ्यपि निष्ठावान् हीयते हरिरप्यजः ॥ ५१ ॥ भावोऽप्यभावमायाति

जीर्यन्ते वै दिगीश्वराः। ब्रह्मा विष्णुश्च रुद्रश्च सर्वा वा भूतजातयः ॥ ५२ ॥ नाशमेवा-ऽनुधावन्ति सलिलानीव वाडवम् । आपदः क्षणमायान्ति क्षणमायान्ति सम्पदः ॥५३॥ क्षणं जन्माऽथ मरणं सर्वं नश्वरमेव तत् । अशूरेण हतारशूरा एकेनाऽपि शतं हतम् ॥ ५४ ॥ विषं विषयवैषम्यं न विषं विषमुच्यते । जन्माऽन्तरघ्ना विषया एकजन्महरं विषम् ॥५५॥ इति मे दोषदावाग्निदग्धे सम्प्रति चेतसि । स्फुरन्ति हि न भोगाऽऽशा मृगतृष्णासरस्स्वपि ॥ ५६ ॥ अतो मां बोधयाऽऽशु त्वं तत्त्वज्ञानेन वै गुरो । नो चेन्मौनं समास्थाय निर्मानो गतमत्सरः ॥ ५७ ॥ भावयन्मनसा विष्णुं लिपिकर्मा-ऽर्पितोपम इति महोपनिषत् ॥ इति तृतीयोऽध्यायः ॥ निदाघ तव नाऽस्त्यन्यज्ज्ञेयं ज्ञानवतां वर । प्रज्ञया त्वं विजानासि ईश्वराऽनुगृहीतया ॥ १ ॥ चित्तमालिन्यस-

ज्ञातं मार्जयामि भ्रमं मुने । मोक्षद्वारे द्वारपालाश्चत्वारः परिकीर्त्तिताः ॥ २ ॥ शमो विचारस्सन्तोषश्चतुर्थस्साधुसङ्गमः । एकं वा सर्वयत्नेन सर्वमुत्सृज्य संश्रयेत् ॥ ३ ॥ एकस्मिन्वशगे यान्ति चत्वारोऽपि वशं गताः । शास्त्रैस्सज्जनसम्पर्कपूर्वैकैश्च तपोदमैः ॥ ४ ॥ आदौ संसारमुक्त्यर्थं प्रज्ञामेवाऽभिवर्धयेत् । स्वाऽनुभूतेश्च शास्त्रस्य गुरोश्चैवैकवाक्यता ॥ ५ ॥ यस्याऽभ्यासेन तेनाऽऽत्मा सततं चाऽवलोक्यते । सङ्कल्पाऽऽशानुसन्धानवर्जनं चेत्प्रातिक्षणम् ॥ ६ ॥ करोषि तदचित्तत्वं प्राऽऽप्त एवाऽसि पावनम् । चेतसो यदकर्त्तृत्वं तत्समाधानमीरितम् ॥ ७ ॥ तदेव केवली भावं साऽशुभा निर्वृतिः परा । चेतसा सम्परित्यज्य सर्वभावाऽऽत्मभावनाम् ॥ यथा तिष्ठसि तिष्ठ त्वं मूकाऽन्धबधिरोपमः ॥ ८ ॥ सर्वं प्रशान्तमजमेकमनादिमध्यमाभास्वरं स्वदनमात्रमचैत्यचिह्नम् । सर्वं

प्रशान्तमिति शब्दमयी च दृष्टिर्बाधाऽर्थमेव हि मुधैव तदोमितीदम् ॥ ९ ॥ सर्वं किञ्चिदिदं दृश्यं दृश्यते चिज्जगद्गतम् । चिन्निष्पन्दांशमात्रं तन्नाऽन्यदस्तीति भावय ॥ १० ॥ नित्यप्रबुद्धचित्तस्त्वं कुर्वन्वाऽपि जगत्क्रियाम् । आत्मैकत्वं विदित्वा त्वं तिष्ठाऽक्षुब्धमहाऽब्धिवत् ॥ ११ ॥ तत्वाऽवबोध एवाऽसौ वासनातृणपावकः । प्रोक्त-स्समाधिशब्देन न तु तूष्णीमवस्थितिः ॥ १२ ॥ निरिच्छे संस्थिते रत्ने यथा लोकः प्रवर्त्तते । सत्तामात्रे परे तत्त्वे तथैवाऽयं जगद्गणः ॥ १३ ॥ अतश्चाऽऽत्मनि कर्तृत्वम-कर्तृत्वं च वै मुने । निरिच्छत्वादकर्त्ताऽसौ कर्त्ता सन्निधिमात्रतः ॥१४॥ ते द्वे ब्रह्मणि विन्देते कर्तृताऽकर्तृते मुने । यत्रैवैष चमत्कारस्तमाश्रित्य स्थिरो भव ॥१५॥ तस्मान्नि-त्यमकर्त्ताऽहमिति भावनयेद्धया। परमाऽमृतनाम्नी सा समतैवाऽवशिष्यते ॥ १६ ॥ निदाघ

शृणु सत्त्वस्था जाता भुवि महागुणाः। ते नित्यमेवाऽभ्युदिता मुदिताः ख इवेन्दवः॥१७॥ नाऽऽपदि ग्लानिमायान्ति निशि हेमाऽम्बुजं यथा। नेहन्ते प्रकृतादन्यद्रमन्ते शिष्टवर्त्मनि ॥ १८ ॥ आकृत्यैव विराजन्ते मैत्र्यादिगुणवृत्तिभिः। समास्समरसास्सौम्यस्सततं साधुवृत्तयः ॥ १९ ॥ अब्धिवद्धृतमर्यादा भवन्ति विशदाऽऽशयाः। नियतिं न विमुञ्चन्ति महान्तो भास्करा इव ॥ २० ॥ कोऽहं कथमिदं चेति संसारमलमाततम्। प्रविचार्यं प्रयत्नेन प्राऽऽज्ञेन सहसाऽधुना ॥२१॥ नाऽकर्मसु नियोक्तव्यं नाऽनार्येण सहाऽऽवसेत्। द्रष्टव्यस्सर्वसंहर्त्ता न मृत्युरवहेलया ॥ २२ ॥ शरीरमस्थिमांसं च त्यक्त्वा रक्ताऽऽद्यशोभनम्। भूतमुक्तावलीतन्तुं चिन्मात्रमवलोकयेत् ॥ २३ ॥ उपाऽऽदेयाऽनुपतनं हेयैकाऽन्तविसर्जनम्। यदेतन्मनसो रूपं तद्बाह्यं विद्धि नेतरत् ॥ २४ ॥ गुरुशास्त्रोक्त-

मार्गेण स्वाऽनुभूत्या च चिद्घने । ब्रह्मैवाऽहमिति ज्ञात्वा वीतशोको भवेन्मुनिः ॥२५॥ यत्र निशिताऽसिशतपातनमुत्पलताडनवत्सोढव्यमग्निना दाहो हिमसेचनमिवाऽङ्गारा-ऽऽवर्त्तनं चन्दनचर्चेव निरवधिनाराचविकिरपातो निदाघविनोदनधारागृहशीकरवर्षण-मिव स्वशिरश्छेदस्सुखनिद्रेव मूकी करणमाननमुद्रेव बाधिर्यं महानुपचय इवेदं नाऽव-हेलनया भवितव्यमेवं दृढवैराग्याद्बोधो भवति ॥ गुरुवाक्यसमुद्भूतस्वाऽनुभूत्यादिशु-द्धया । यस्याऽभ्यासेन तेनाऽऽत्मा सततं चाऽवलोक्यते ॥ २६ ॥ विनष्टदिग्भ्रमस्याऽपि यथापूर्वं विभाति दिक् । तथा विज्ञानविध्वस्तं जगन्नाऽस्तीति भावय ॥२७॥ न धना-न्युपकुर्वन्ति न मित्राणि न बान्धवाः । न कायक्लेशवैधुर्यं न तीर्थाऽऽयतनाऽऽश्रयः ॥ २८ ॥ केवलं तन्मनोमात्रजयेनाऽऽसाद्यते पदम् । यानि दुःखानि या तृष्णा दुस्सहा

ये दुराधयः ॥ २९ ॥ शान्तचेतस्सु तत्सर्वं तमोऽर्केष्विव नश्यति । मातरीव परं यान्ति विषमाणि मृदूनि च ॥ ३० ॥ विश्वासमिह भूतानि सर्वाणि शमशालिनि । न रसायनपानेन न लक्ष्म्याऽऽलिङ्गितेन च ॥ ३१ ॥ न तथा सुखमाप्नोति शमेनाऽन्तर्यथा जनः । श्रुत्वा स्पृष्ट्वा च भुक्त्वा च दृष्ट्वा ज्ञात्वा शुभाऽशुभम् ॥ ३२ ॥ न हृष्यति ग्लायति यस्स शान्त इति कथ्यते । तुषारकरबिम्बाऽच्छं मनो यस्य निराकुलम् । मरणोत्सवयुद्धेषु स शान्त इति कथ्यते ॥ ३३ ॥ तपस्विषु बहुज्ञेषु याजकेषु नृपेषु च । बलवत्सु गुणाऽऽढ्येषु शमवानेव राजते ॥ ३४ ॥ सन्तोषाऽमृतपानेन ये शान्तास्तृप्तिमागताः । आत्माऽऽरामा महाऽऽत्मानस्ते महापदमागताः ॥ ३५ ॥ अप्राऽऽप्तं हि परित्यज्य सम्प्राऽऽप्ते समतां गतः । अदृष्टखेदाऽखेदो यस्सन्तुष्ट इति कथ्यते ॥३६॥

नाऽभिनन्दत्यसम्प्राऽऽप्तं प्राऽऽप्तं भुङ्क्ते यथेप्सितम् ॥ यस्स सौम्यसमाचारस्सन्तुष्ट इति कथ्यते ॥ ३७ ॥ रमते धीर्यथाप्राऽऽप्ते साध्वीवाऽन्तःपुराऽजिरे । सा जीवन्मुक्ततोदेति स्वरूपाऽऽनन्ददायिनी ॥ ३८ ॥ यथाक्षणं यथाशास्त्रं यथादेशं यथासुखम् । यथासम्भवसत्सङ्गमिमं मोक्षपथक्रमम् ॥ ३९ ॥ तावद्विचारयेत्प्राऽऽज्ञो यावद्विश्रान्तिमात्मनि । तुर्यविश्रान्तियुक्तस्य निवृत्तस्य भवाऽर्णवात् ॥ ४० ॥ जीवतोऽजीवतश्चैव गृहस्थस्याऽथवा यतेः । नाऽकृतेन कृतेनाऽर्थो न श्रुतिस्मृतिविभ्रमैः ॥ ४१ ॥ निर्मन्दर इवाऽम्भोधिस्स तिष्ठति यथास्थितः । सर्वाऽऽत्मवेदनं शुद्धं यदोदेति तवाऽऽत्मकम् ॥ ४२ ॥ भाति प्रसृतिदिक्कालबाह्यं चिद्रूपदेहकम् । एवमात्मा यथा यत्र समुल्लासमुपाऽऽगतः ॥ ४३ ॥ तिष्ठत्याशु तथा तत्र तद्रूपश्च विराजते । यदिदं दृश्यते सर्वं जगत्स्थावरजङ्ग-

मम् ॥४४॥ तत्सुषुप्ताविव स्वप्नः कल्पाऽन्ते प्रविनश्यति । ऋतमात्मा परम्ब्रह्म सत्यमित्यादिका बुधैः ॥ ४५ ॥ कल्पिता व्यवहाराऽर्थं यस्य संज्ञा महाऽऽत्मनः । यथा कटकशब्दाऽर्थः पृथग्भावो न काञ्चनात् ॥ ४६ ॥ न हेमकटकात्तद्वज्जगच्छब्दाऽर्थता परा । तेनेयमिन्द्रजालश्रीर्जे ( क्रीडा ) गति(ः) प्रवितन्यते ॥ ४७ ॥ द्रष्टुर्दृश्यस्य सत्ताऽन्तर्बन्ध इत्यभिधीयते । द्रष्टा दृश्यवशाद्बद्धो दृश्याऽभावे विमुच्यते ॥ ४८ ॥ जगत्त्वमहमित्यादिसर्गाऽऽत्मा दृश्यमुच्यते । मनसैवे ( स्तेने ) न्द्रजालश्रीर्जगति ( र्जागती ) प्रवितन्यते ॥ ४९ ॥ यावदेतत्सम्भवति तावन्मोक्षो न विद्यते । ब्रह्मणा तन्यते विश्वं मनसैव स्वयम्भुवा ॥ ५० ॥ मनोमयमतो विश्वं यन्नाम परिदृश्यते । न बाह्ये नाऽपि हृदये सद्रूपं विद्यते मनः ॥ ५१ ॥ यदर्थं प्रतिभानं तन्मन इत्यभिधीयते । सङ्कल्पनं

मनो विद्धि सङ्कल्पस्तन्न विद्यते ॥ ५२ ॥ यत्र सङ्कल्पनं तत्र मनोऽस्तीत्यवगम्यताम् । सङ्कल्पमनसी भिन्ने न कदा च न केन चित् ॥ ५३ ॥ सङ्कल्पजाते गलिते स्वरूपमवशिष्यते । अहं त्वं जगदित्यादौ प्रशान्ते दृश्यसम्भ्रमे ॥ ५४ ॥ स्यात्तादृशी केवलता दृश्ये सत्तामुपाऽऽगते । महाप्रलयसम्पत्तौ ह्यसत्तां समुपाऽऽगते ॥ ५५ ॥ अशेषदृश्ये सर्गाऽऽदौ शान्तमेवाऽवशिष्यते । अस्त्यनस्तमितो भास्वानजो देवो निरामयः ॥ ५६ ॥ सर्वदा सर्वकृत्सर्वः परमाऽऽत्मेत्युदाहृतः । यतो वाचो निवर्तन्ते यो मुक्तैरवगम्यते ॥५७॥ यस्य चाऽऽत्माऽऽदिकास्संज्ञाः कल्पिता न स्वभावतः । चित्ताऽऽकाशं चिदाकाशमाकाशं च तृतीयकम् ॥ ५८ ॥ द्वाभ्यां शून्यतरं विद्धि चिदाकाशं महामुने । देशाद्देशाऽन्तरप्राऽऽप्तौ संविदो मध्यमेव यत् ॥ ५९ ॥ निमेषेण चिदाकाशं

तद्विद्धि मुनिपुङ्गव । तस्मिन्निरस्तानिश्शेषसङ्कल्पास्थितिमेषि चेत् ॥ ६० ॥ सर्वाऽऽत्मकं पदं शान्तं तदा प्राऽऽप्नोष्यसंशयः । उदितौदार्यसौन्दर्यवैराग्यरसगर्भिणी ॥ ६१ ॥ आनन्दस्यन्दिनी यैषा समाधिरभिधीयते । दृश्याऽसम्भवबोधेन रागद्वेषाऽऽदितानवे ॥ ६२ ॥ रतिर्बलोदिता याऽसौ समाधिरभिधीयते । दृश्याऽसम्भवबोधो हि ज्ञानं ज्ञेयं चिदात्मकम् ॥ ६३ ॥ तदेव केवली भावं ततोऽन्यत्सकलं मृषा । मत्त ऐरावतो बद्ध-स्सर्षपीकोणकोटरे ॥ ६४ ॥ मशकेन कृतं युद्धं सिंहौघैरे(र)णुकोटरे । पद्माऽक्षे स्थापितो मेरुर्निर्गीर्णो भृङ्गसूनुना ॥ ६५ ॥ निदाघ विद्धि तादृक्त्वं जगदेतद्भ्रमाऽऽत्मकम् । चित्तमेव हि संसारो रो (रा) गाऽऽदिक्लेशदूषितम् ॥ ६६ ॥ तदेव तैर्विनिर्मुक्तं भवाऽन्त इति कथ्यते । मनसा भाव्यमानो हि देहतां याति देहकः ॥ ६७ ॥ देहवासनया

मुक्तो देहधर्मैर्न लिप्यते । कल्पं क्षणी करोत्यन्तः क्षणं नयति कल्पताम् ॥ ६८ ॥ मनोविलाससंसार इति मे निश्चिता मतिः ॥ ६९ ॥ ना(ऽ)विरतो दुश्चरितान्ना(-) (ऽ)शान्तो ना(ऽ)समाहितः । ना(ऽ)शान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात् ॥७०॥ तद्ब्रह्माऽऽनन्दमद्वन्द्वं निर्गुणं सत्यचिद्घनम् । विदित्वा स्वाऽऽत्मनो रूपं न बिभेति कदा च न ॥ ७१ ॥ परात्परं यन्महतो महान्तं स्वरूपतेजोमयशाश्वतं शिवम् । कविं पुराणं पुरुषं सनातनं सर्वेश्वरं सर्वदेवैरुपाऽऽस्यम् ॥ ७२ ॥ अहं ब्रह्मेति नियतं मोक्षहे-तुर्महाऽऽत्मनाम् । द्वे पदे बन्धमोक्षाय निर्ममेति ममेति च । ममेति बध्यते जन्तुर्निर्ममेति विमुच्यते ॥ ७३ ॥ जीवेश्वराऽऽदिरूपेण चेतनाऽचेतनाऽऽत्मकम् । ईक्षणाऽऽदिप्रवेशा-ऽन्ता सृष्टिरीशेन कल्पिता ॥७४॥ जाग्रदादिविमोक्षाऽन्तस्संसारो जीवकल्पितः । त्रिणा-

चिकाऽऽदियोगाऽन्ता ईश्वरभ्रान्तिमाश्रिताः ॥ ७५ ॥ लोकायताऽऽदिसाङ्ख्याऽन्ता जीवविभ्रान्तिमाश्रिताः । तस्मान्मुमुक्षुभिर्नैव मतिर्जीवेशवादयोः ॥ ७६ ॥ कार्या किन्तु ब्रह्मतत्त्वं निश्चलेन विचार्यताम् । अविशेषेण सर्वं तु यः पश्यति चिदन्वयात् ॥ ७७ ॥ स एव साक्षाद्विज्ञानी स शिवस्स हरिर्विधिः । दुर्लभो विषयत्यागो दुर्लभं तत्त्वदर्शनम् ॥ ७८ ॥ दुर्लभा सहजाऽवस्था सद्गुरोः करुणां विना । उत्पन्नशक्तिबोधस्य त्यक्तनिश्शेषकर्मणः ॥ ७९ ॥ योगिनस्सहजाऽवस्था स्वयमेवोपजायते । यदा ह्येवैष एतस्मिन्नल्पमप्यन्तरं नरः । विजानाति तदा तस्य भयं स्यान्नाऽत्र संशयः ॥ ८० ॥ सर्वगं सच्चिदानन्दं ज्ञानचक्षुर्निरीक्षते । अज्ञानचक्षुर्नेक्षेत भास्वन्तं भानुमन्धवत् ॥ ८१ ॥ प्रज्ञानमेव तद्ब्रह्म सत्यप्रज्ञानलक्षणम् । एवं ब्रह्मपरिज्ञानादेव मर्त्योऽमृतो भवेत् ॥ ८२ ॥

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चाऽस्य कर्माणि तस्मिन्दृष्टे परा-ऽवरे ॥ ८३ ॥ अनात्मतां परित्यज्य निर्विकारो जगत्स्थितौ । एकनिष्ठतयाऽन्तस्थ-संविन्मात्रपरो भव ॥ ८४ ॥ मरुभूमौ जलं सर्वं मरुभूमात्रमेव तत् । जगत्त्रयमिदं सर्वं चिन्मात्रं स्वविचारतः ॥ ८५ ॥ लक्ष्याऽलक्ष्यमतिं त्यक्त्वा यस्तिष्ठेत्केवलाऽऽत्म-ना। शिव एव स्वयं साक्षादयं ब्रह्मविदुत्तमः ॥ ८६ ॥ अधिष्ठानमनौपम्यमवाङ्मन-सगोचरम्। नित्यं विभुं सर्वगतं सुसूक्ष्मं च तदव्ययम् ॥ ८७ ॥ सर्वशक्तेर्महेशस्य विलासो हि मनो जगत्। संयमाऽसंयमाभ्यां च संसारं शान्तिमन्वगात् ॥ ८८ ॥ मनोव्याधेश्चिकित्सार्ऽथमुपायं कथयामि ते। यद्यत्स्वाऽभिमतं वस्तु तत्त्यजन् मोक्षम-श्नुते ॥ ८९ ॥ स्वाऽऽयत्तमेकाऽन्तहितं स्वेप्सिततत्यागवेदनम्। यस्य दुष्करतां यातं

धिक्तं पुरुषकीटकम् ॥ ९० ॥ स्वपौरुषैकसाध्येन स्वेप्सिततत्यागरूपिणा । मनःप्रशममात्रेण विना नाऽस्ति शुभा गतिः ॥ ९१ ॥ असङ्कल्पनशस्त्रेण छिन्नं चित्तमिदं यदा । सर्वं सर्वगतं शान्तं ब्रह्म सम्पद्यते तदा ॥ ९२ ॥ भव भावनया मुक्तो मुक्तः परमया धिया । धारयाऽऽत्मानमव्यग्रो ग्रस्ताचित्तं चितः पदम् ॥ ९३ ॥ परं पौरुषमाश्रित्य नीत्वा चित्तमचित्तताम् । ध्यानतो हृदयाऽऽकाशे चिति चिच्चक्रधारया ॥९४॥ मनो मारय निश्शङ्कं त्वां प्रबध्नन्ति नाऽरयः । अयं सोऽहमिदं तन्म एतावन्मात्रकं मनः ॥ ९५ ॥ तदभावनमात्रेण दात्रेणेव विली ( लू ) यते । छिन्नाऽभ्रमण्डलं व्योम्नि यथा शरदि धूयते ॥ ९६ ॥ वातेन कल्पकेनैव तथाऽन्तर्धूयते मनः । कल्पाऽन्तपवना वान्तु यान्तु चैकत्वमर्णवाः ॥ ९७ ॥ तप ( पत ) न्तु द्वादशाऽऽदित्या नाऽस्ति

निर्मनसः क्षतिः । असङ्कल्पनमात्रैकसाध्ये सकलसिद्धिदे ॥ ९८ ॥ असङ्कल्पाऽतिसा-
म्राज्ये तिष्ठाऽवष्टब्धतत्पदः । न हि चञ्चलताहीनं मनः क्व च न दृश्यते ॥ ९९ ॥
चञ्चलत्वं मनोधर्मो वह्नेर्धर्मो यथोष्णता । एषा हि चञ्चलाऽस्पन्दशक्तिश्चित्तत्वसंस्थिता
॥ १०० ॥ तां विद्धि मानसीं शक्तिं जगदाडम्बराऽऽत्मिकाम् । यत्तु चञ्चलताहीनं
तन्मनोऽमृतमुच्यते ॥ १०१ ॥ तदेव च तपश्शास्त्रसिद्धाऽन्ते मोक्ष उच्यते । तस्य चञ्च-
लता यैषा त्वविद्या वासनाऽऽत्मिका ॥ १०२ ॥ वासनाऽपरनाम्नीं तां विचारेण विना-
शय। पौरुषेण प्रयत्नेन यस्मिन्नेव पदे मनः ॥ १०३ ॥ योज्यते तत्पदं प्राऽऽप्य निर्वि-
कल्पो भवाऽनघ । अतः पौरुषमाश्रित्य चित्तमाक्रम्य चेतसा ॥ १०४ ॥ विशोकं
पदमालम्ब्य निरातङ्कः स्थिरोभव । मन एव समर्थं हि मनसो दृढनिग्रहे ॥ १०५ ॥

अराजकस्समर्थस्स्याद्राज्ञो निग्रहकर्मणि । तृष्णाग्राहगृहीतानां संसाराऽर्णवपातिनाम्
॥ १०६ ॥ आवर्त्तैरूह्यमानानां दूरं स्वमन एव नौः । मनसैव मनश्छित्वा पाशं पर-
मबन्धनम् ॥ १०७ ॥ भवादुत्तारयाऽऽत्मानं नाऽसावन्येन तार्यते । ययोदेति मनो-
नाम्नी वासना वासिताऽन्तरा ॥ १०८ ॥ तान्तां परिहरेत्प्राऽऽज्ञस्ततोऽविद्याक्षयो भवेत्।
भोगैकवा(व)सनां त्यत्का त्यज त्वं भेदवासनाम् ॥ १०९ ॥ भावाभावौ ततस्त्यत्का
निर्विकल्पस्सुखी भव । एष एव मनोनाशस्त्वविद्यानाश एव च ॥ ११० ॥ यत्तत्संवे-
द्यते किञ्चित्तत्राऽऽस्थापरिवर्जनम् । अनास्थैव हि निर्वाणं दुःखमास्थापरिग्रहः ॥१११॥
अविद्याऽविद्यमानैव नष्टप्रज्ञेषु दृश्यते । नाम्नैवाऽङ्गीकृताऽऽकारा सम्यक्प्रज्ञस्य सा
कुतः ॥ ११२ ॥ तावत्संसारभृगुषु स्वाऽऽत्मना सह देहिनम् । आन्दोलयति नीरन्ध्रं

दुःखकण्टकशालिषु ॥ ११३ ॥ अविद्या यावदस्यास्तु नोत्पन्ना क्षयकारिणी । स्वयमात्माऽवलोकेच्छा मोहसङ्क्षयकारिणी ॥ ११४ ॥ अस्याः परं प्रपश्यन्त्यास्स्वाऽऽत्मनाशः प्रजायते । दृष्टे सर्वगते बोधे स्वयं ह्येषा विलीयते ॥ ११५ ॥ इच्छामात्रमविद्येयं तन्नाशो मोक्ष उच्यते । स चाऽसङ्कल्पमात्रेण सिद्धो भवति वै मुने ॥ ११६ ॥ मनागपि मनोव्योम्नि वासनारजनीक्षये । कालिका तनुतामेति चिदादित्यप्रकाशनात् ॥ ११७ ॥ चैत्याऽनुपातरहितं सामान्येन च सर्वगम् । यच्चित्तत्वमनाख्येयं स आत्मा परमेश्वरः ॥ ११८ ॥ सर्वं च खल्विदं ब्रह्म नित्यचिद्घनमक्षतम् । कल्पनाऽन्या मनोनाम्नी विद्यते न हि का च न ॥ ११९ ॥ न जायते न म्रियते किञ्चिदत्र जगत्त्रये । न च भावविकाराणां सत्ता क्व च न विद्यते ॥ १२० ॥ केवलं केवलाऽऽभासं सर्व-

सामान्यमक्षतम् । चैत्याऽनुपातरहितं चिन्मात्रमिह विद्यते ॥ १२१ ॥ तस्मिन्नित्ये तते शुद्धे चिन्मात्रे निरुपद्रवे । शान्ते शमसमाभोगे निर्विकारे चिदात्मनि ॥ १२२ ॥ यैषा स्वभावाऽभिमतं स्वयं सङ्कल्प्य धावति । चिच्चैत्यं स्वयमम्लानं माननान्मन उच्यते ॥ १२३ ॥ अतस्सङ्कल्पसिद्धेयं सङ्कल्पेनैव नश्यति । नाऽहं ब्रह्मेति सङ्कल्पात्सुदृढाद्बध्यते मनः ॥ १२४ ॥ सर्वं ब्रह्मेति सङ्कल्पात्सुदृढान्मुच्यते मनः । कृशोऽहं दुःखबद्धोऽहं हस्तपादाऽऽदिमानहम् ॥ १२५ ॥ इतिभावाऽनुरूपेण व्यवहारेण बध्यते । नाऽहं दुःखी न मे देहो बन्धः कोऽस्याऽऽत्मनि स्थितः ॥ १२६ ॥ इति-भावाऽनुरूपेण व्यवहारेण मुच्यते । नाऽहं मांसं न चाऽस्थीनि देहादन्यः परोऽस्म्य-हम् । इति निश्चितवानन्तःक्षीणाऽविद्यो विमुच्यते ॥ १२७ ॥ कल्पितेयमविद्येयमना-

त्मन्यात्मभावनात् । परं पौरुषमाश्रित्य यत्नात्परमया धिया ॥ भोगेच्छां दूरतस्त्यक्त्वा निर्विकल्पस्सुखी भव ॥ १२८ ॥ मम पुत्रो मम धनमहं सोऽयमिदं मम । इतीयमिन्द्रजालेन वासनैव विवल्गति ॥ १२९ ॥ मा भवाऽज्ञो भव ज्ञस्त्वं जहि संसारभावनाम् । अनात्मन्यात्मभावेन किमज्ञ इव रोदिषि ॥ १३० ॥ कस्तवाऽयं जडो मूको देहो मांसमयोऽशुचिः । यदर्थं सुखदुःखाभ्यामवशः परिभूयसे ॥ १३१ ॥ अहो नु चित्रं यत्सत्यं ब्रह्म तद्विस्मृतं नृणाम् । तिष्ठतस्तव कार्येषु माऽस्तु रागाऽनुरञ्जना ॥ १३२ ॥ अहो नु चित्रं पद्मोत्थैर्बद्धास्तन्तुभिरद्रयः । अविद्यमाना याऽविद्या तया विश्वं खिलीकृतम् ॥ १३३ ॥ इदं तद्वज्रतां यातं तृणमात्रं जगत्त्रयम् इत्युपनिषत् ॥ इति चतुर्थोऽध्यायः ॥ ऋभुः ॥ अथाऽपरं प्रवक्ष्यामि शृणु तात यथाय(त)

थम् । अज्ञानभूस्सप्तपदा ज्ञभूस्सप्तपदैव हि ॥ १ ॥ पदाऽन्तराण्यसङ्ख्यानि प्रभव-न्त्यन्यथैतयोः । स्वरूपाऽवस्थितिर्मुक्तिस्तद्भ्रंशोऽहन्त्ववेदनम् ॥ २ ॥ शुद्धसन्मात्रसंवित्ते-स्स्वरूपान्न चलन्ति ये । रागद्वेषाऽऽदयो भावास्तेषां नाऽज्ञत्वसम्भवाः ॥ ३ ॥ यस्स्व-रूपपरिभ्रंशश्चेत्याऽर्थे चिति मज्जनम् । एतस्मादपरो मोहो न भूतो न भविष्यति ॥ ४ ॥ अर्थादर्थाऽन्तरं चित्ते याति मध्ये तु या स्थितिः । सा ध्वस्तमननाऽऽकारा स्वरूपस्थि-तिरुच्यते ॥ ५ ॥ संशान्तसर्वसङ्कल्पा या शिलावदवस्थितिः । जाग्रन्निद्राविनिर्मुक्ता सा स्वरूपस्थितिः परा ॥ ६ ॥ अहन्तांशे क्षते शान्ते भेदनिष्पन्दचित्तता । अजडा या प्रच-कति तत्स्वरूपमितीरितम् ॥ ७ ॥ बीजं जाग्रत्तथा जाग्रन्महाजाग्रत्तथैव च । जाग्र-त्स्वप्नस्तथा स्वप्नस्स्वप्नजाग्रत्सुषुप्तिकम् ॥ ८ ॥ इति सप्तविधो मोहः पुनरेष परस्परम् ।

श्लिष्टो भवत्यनेकाऽग्र्यं शृणु लक्षणमस्य तु ॥ ९ ॥ प्रथमं चेतनं यत्स्यादनाख्यं निर्मलं चितः । भविष्यच्चित्तजीवाऽऽदिनामशब्दाऽर्थभाजनम् ॥ १० ॥ बीजरूपस्थितं जाग्रद्बीजजाग्रत्तदुच्यते । एषा ज्ञप्तेर्नवाऽवस्था त्वजाग्रत्संस्थितिं शृणु ॥ ११ ॥ नव प्रसूतस्य परादयं चाऽहमिदं मम । इति यः प्रत्ययस्स्वस्थस्तज्जाग्रत्प्रागभावनात् ॥ १२ ॥ अयं सोऽहमिदं तन्म इति जन्माऽन्तरोदितः । पीवरः प्रत्ययः प्रोक्तो महाजाग्रदिति स्फुटम् ॥ १३ ॥ अरूढमथवा रूढं सर्वथा तन्मयाऽऽत्मकम् । यज्जाग्रतो मनोराज्यं तज्जाग्रत्स्वप्न उच्यते ॥ १४ ॥ द्विचन्द्रशुक्तिकारूप्यमृगतृष्णाऽऽदिभेदतः । अभ्यासं प्राऽऽप्य जाग्रत्तत्स्वप्नो नानाविधो भवेत् ॥ १५ ॥ अल्पकालं मया दृष्टमेतन्नोदेति यत्र हि । परामर्शः प्रबुद्धस्य स स्वप्न इति कथ्यते ॥ १६ ॥ चिरं सन्दर्शनाभावा-

दप्रफुल्लं बृहद्वचः । चिरकालाऽनुवृत्तिस्तु स्वप्नो जाग्रदिवोदितः ॥ १७ ॥ स्वप्नजाग्रदिति प्रोक्तं जाग्रत्यपि परिस्फुरत् । षडवस्थापरित्यागे जडा जीवस्य या स्थितिः ॥ १८ ॥ भविष्यद्दुःखबोधाऽऽढ्या सौषुप्तिस्सोच्यते गतिः । जगत्तस्यामवस्थायामन्तस्तमसि लीयते ॥ १९ ॥ सप्ताऽवस्था इमाः प्रोक्ता मया ज्ञानस्य वै द्विज । एकैका शतसङ्ख्याऽत्र नानाविभवरूपिणी ॥ २० ॥ इमां सप्तपदां ज्ञानभूमिमाकर्णयाऽनघ । नाऽनया ज्ञातया भूयो मोहपङ्के निमज्जति ॥ २१ ॥ वदन्ति बहुभेदेन वादिनो योगभूमिकाः । मम त्वभिमता नूनमिमा एव शुभप्रदाः ॥ २२ ॥ अवबोधं वि(हि)दुर्ज्ञानं तदिदं साप्तभूमिकम् । मुक्तिस्तु ज्ञेयमित्युक्ता भूमिकासप्तकात्परम् ॥ २३ ॥ ज्ञानभूमिश्शुभेच्छाऽऽख्या प्रथमा समुदाहृता । विचारणा द्वितीया तु तृतीया तनुमनासी ॥ २४ ॥

सत्त्वाऽऽपत्तिश्चतुर्थी स्यात्ततोऽसंसक्तिनामिका । पदाऽर्थभावना षष्ठी सप्तमी तुर्यगा स्मृता ॥ २५ ॥ आसमन्तस्स्थिता मुक्तिर्यस्यां भूयो न शोचति । एतासां भूमिकानां त्वमिदं निर्वचनं शृणु ॥ २६ ॥ स्थितः किं मूढ एवाऽस्मि प्रेक्षेऽहं शास्त्रसज्जनैः । वैराग्यपूर्वमिच्छेति शुभेच्छेत्युच्यते बुधैः ॥ २७ ॥ शास्त्रसज्जनसम्पर्कवैराग्याऽभ्यास-पूर्वकम् । सदाचारप्रवृत्तिर्या प्रोच्यते सा विचारणा ॥ २८ ॥ विचारणाशुभेच्छाभ्या-मिन्द्रियाऽर्थेषु रक्तता । यत्र सा तनुतामेति प्रोच्यते तनुमानसी ॥ २९ ॥ भूमिकात्रि-तयाऽभ्यासाच्चित्ते तु विरतेर्वशात् । सत्त्वाऽऽत्मनि स्थिते शुद्धे सत्त्वाऽऽपत्तिरुदाहृता ॥ ३० ॥ दशाचतुष्टयाऽभ्यासादसंसर्गकला तु या । रूढसत्त्वचमत्कारा प्रोक्ता संस-क्तिनामिका ॥ ३१ ॥ भूमिकापञ्चकाऽभ्यासात्स्वाऽऽत्माऽऽरामतया दृढम् । आभ्यन्तराणां

बाह्यानां पदाऽर्थानामभावनात् ॥ ३२ ॥ परप्रयुक्तेन चिरं प्रयत्नेनाऽवबोधनम् । पदाऽर्थ-भावना नाम षष्ठी भवति भूमिका ॥ ३३ ॥ भूमिषट्कचिराऽभ्यासाद्भेदस्याऽनुपलम्भनात् । यत्स्वभावैकनिष्ठत्वं सा ज्ञेया तुर्यगा गतिः ॥ ३४ ॥ एषा हि जीवन्मुक्तेषु तुर्याऽवस्थेति विद्यते । विदेहमुक्तिविषयं तुर्याऽतीतमतः परम् ॥ ३५ ॥ ये निदाघ महाभागास्सप्तमीं भूमिमाश्रिताः । आत्माऽऽरामा महाऽऽत्मानस्ते महापदमागताः ॥ ३६ ॥ जीवन्मुक्ता न मज्जन्ति सुखदुःखरसस्थिते । प्रकृतेनाऽथ कार्येण किञ्चित्कुर्वन्ति वा न वा ॥३७॥ पार्श्वस्थबोधितास्सन्तः पूर्वाऽऽचारक्रमाऽऽगतम् । आचारमाचरन्त्येव सुप्तबुद्धवदु-त्थिताः ॥ ३८ ॥ भूमिकासप्तकं चैतद्धीमतामेव गोचरम् । प्राऽऽप्य ज्ञानदशामेतां पशुम्लेच्छाऽऽदयोऽपि ये ॥ ३९ ॥ सदेहा वाऽप्यदेहा वा ते मुक्ता नाऽत्र संशयः ।

ज्ञप्तिर्हि ग्रन्थिविच्छेदस्तस्मिन्सति विमुक्तता ॥ ४० ॥ मृगतृष्णाऽम्बुबुध्यादिशान्ति-
मात्राऽऽत्मकस्त्वसौ । ये तु मोहार्णवात्तीर्णास्तैः प्राऽऽप्तं परमं पदम् ॥ ४१ ॥ ते
स्थिता भूमिकास्वासु स्वाऽऽत्मलाभपराऽयणाः । मनःप्रशमनोपायो योग इत्यभिधीयते
॥ ४२ ॥ सप्तभूमिस्स विज्ञेयः कथितास्ताश्च भूमिकाः । एतासां भूमिकानां तु गम्यं
ब्रह्माऽभिधं पदम् ॥ ४३ ॥ त्वत्ताऽहन्ताऽऽत्मता यत्र परताऽनाऽस्ति का च न ।
न क्वचिद्भावकलना न भावाऽभावगोचरा ॥ ४४ ॥ सर्वं शान्तं निरालम्बं व्योमस्थं
शाश्वतं शिवम् । अनामयमनाभासमनामकमकारणम् ॥ ४५ ॥ न सन्नाऽसन्न मध्या-
ऽन्तं न सर्वं सर्वमेव च । मनोवचोभिरग्राह्यं पूर्णात्पूर्णं सुखात्सुखम् ॥ ४६ ॥ असंवे-
दनमाशान्तमात्मवेदनमाततम् । सत्ता सर्वपदाऽर्थानां नाऽन्या संवेदनादृते ॥ ४७ ॥

सम्बन्धे द्रष्टृदृश्यानां मध्ये दृष्टिर्हियद्वपुः । द्रष्टृदर्शनदृश्याऽऽदिवर्जितं तदिदं पदम् ॥ ४८ ॥ देशाद्देशं गते चित्ते मध्ये यच्चेतसो वपुः । अजाड्यसंविन्मननं तन्मयो भव सर्वदा ॥ ४९ ॥ अजाग्रत्स्वप्ननिद्रस्य यत्ते रूपं सनातनम् । अचेतनं चाऽजडं च तन्मयो भव सर्वदा ॥ ५० ॥ जडतां वर्जयित्वैकां शिलाया हृदयं हि तत् । अमनस्कस्वरूपं यत्तन्मयो भव सर्वदा । चित्तं दूरे परित्यज्य योऽसि सोऽसि स्थिरो भव ॥ ५१ ॥ पूर्वं मनस्समुदितं परमाऽऽत्मतत्त्वात्तेनाऽऽततं जगदिदं सविकल्पजालम् । शून्येन शून्यमपि विप्र यथाऽम्बरेण नीलत्वमुल्लसति चारुतराऽभिधानम् ॥ ५२ ॥ सङ्कल्पसङ्क्षयवशाद्गलिते तु चित्ते संसारमोहमिहिका गलिता भवन्ति । स्वच्छं विभाति शरदीव खमागतायां चिन्मात्रमेकमजमाद्यमनन्तमन्तः ॥ ५३ ॥ अकर्तृकमरङ्ग

न्व गगने चित्रमुत्थितम् । अद्रष्टृकं स्वाऽऽनुभवमनिद्रस्वप्रदर्शनम् ॥ ५४ ॥ साक्षिभूते समे स्वच्छे निर्विकल्पे चिदात्मनि । निरिच्छं प्रतिबिम्बन्ति जगन्ति मुकुरे यथा ॥५५॥ एकं ब्रह्म चिदाकाशं सर्वाऽऽत्मकमखण्डितम् । इति भावय यत्नेन चेतश्चाञ्चल्यशान्तये ॥ ५६ ॥ रेखोपरेखावलिता यथैका पीवरी शिला । तथा त्रैलोक्यवलितं ब्रह्मैकमिह दृश्यताम् ॥ ५७ ॥ द्वितीयकारणाऽभावादनुत्पन्नमिदं जगत् । ज्ञातं ज्ञातव्यमधुना दृष्टं द्रष्टव्यमद्भुतम् ॥ ५८ ॥ विश्रान्तोऽस्मि चिरं श्रान्तश्चिन्मात्रान्नाऽस्ति किञ्चन । पश्य विश्रान्तसन्देहं विगताऽशेषकौतुकम् ॥ ५९ ॥ निरस्तकल्पनाजालमचित्तत्वं परं पदम् । त एव भूमतां प्राऽऽप्तास्मंशान्ताऽशेषकिल्बिषाः ॥ ६० ॥ महाधियश्शान्तधियो ये याता विमनस्कताम् । जन्तोः कृतविचारस्य विगलद्वृत्तिचेतसः ॥ ६१ ॥

मननं त्यजतो नित्यं किञ्चित्परिणतं मनः । दृश्यं सन्त्यजतो हेयमुपादेयमुपेयुषः ॥६२॥
द्रष्टारं पश्यतो नित्यमद्रष्टारमपश्यतः । विज्ञातव्ये परे तत्त्वे जागरूकस्य जीवतः ॥६३॥
सुप्तस्य घनसम्मोहमये संसारवर्त्मनि । अत्यन्तपक्ववैराग्यादरसेषु रसेष्वपि ॥ ६४ ॥
संसारवासनाजाले खगजाल इवाऽधुना । त्रोटिते हृदयग्रन्थौ श्लथे वैराग्यरंहसा ॥६५॥
कातकं फलमासाद्य यथा वारि प्रसीदति । तथा विज्ञानवशतस्स्वभावस्सम्प्रसीदति
॥ ६६ ॥ नीरागं निरुपाऽऽसङ्गं निर्द्वन्द्वं निरुपाऽऽश्रयम् । विनिर्याति मनो मोहाद्वि-
हङ्गः पञ्जरादिव ॥ ६७ ॥ शान्तसन्देहदौरात्म्यं गतकौतुकविभ्रमम् । परिपूर्णाऽन्तरं
चेतः पूर्णेन्दुरिव राजते ॥ ६८ ॥ नाऽहं न चाऽन्यदस्तीह ब्रह्मैवाऽस्मि निरामयम् ।
इत्थं सदसतोर्मध्या ( ध्ये ) द्यः पश्यति स पश्यति ॥ ६९ ॥ अयत्नोपनतेष्वक्षिदृग्दृ-

श्येषु यथा मनः। नीरागमेव पतति तद्वत्कार्येषु धीरधीः ॥ ७० ॥ परिज्ञायोपभुक्तो हि भोगो भवति तुष्टये। विज्ञाय सेवितश्चोरो मैत्रीमेति न चोरताम् ॥ ७१ ॥ अशङ्किताऽपि सम्प्राऽऽप्ता ग्रामयात्रा यथाऽध्वगैः। प्रेक्ष्यते तद्वदेव ज्ञैर्भोगश्रीरवलोक्यते ॥ ७२ ॥ मनसो निगृहीतस्य लीलाभोगोऽल्पकोऽपि यः। तमेवाऽलब्धविस्तारं क्लिष्टत्वाद्बहु मन्यते ॥ ७३ ॥ बद्धमुक्तो महीपालो ग्रासमात्रेण तुष्यति। परैरबद्धो नाऽऽक्रान्तो न राष्ट्रं बहु मन्यते ॥ ७४ ॥ हस्तं हस्तेन सम्पीड्य दन्तैर्दन्तान्विचूर्ण्य च। अङ्गान्यङ्गैरिवाऽऽक्रम्य जयेदादौ स्वकं मनः ॥ ७५ ॥ मनसो विजयान्नाऽन्या गतिरस्ति भवाऽर्णवे। महानरकसाम्राज्ये मत्तदुष्कृतवारणाः ॥ ७६ ॥ आशाशरशलाकाऽऽढ्या दुर्जया हीन्द्रियाऽरयः। प्रक्षीणचित्तदर्पस्य निगृहीतेन्द्रियद्विषः ॥ ७७ ॥ पद्मिन्य इव हेमन्ते

क्षीयन्ते भोगवासनाः । तावन्निशीव वेताला वलन्ति हृदि वासनाः ॥ ७८ ॥ एक-तत्त्वदृढाऽभ्यासाद्यावन्न विजितं मनः । भृत्योऽभिमतकर्तृत्वान्मन्त्री सर्वार्थकारणात् ॥ ७९ ॥ सामन्तश्चेन्द्रियाऽऽक्रान्तेर्मनो मन्ये विवेकिनः । लालनात्स्निग्धललना पालनात्पालकः पिता ॥८०॥ सुहृदुत्तमविन्यासान्मनो मन्ये मनीषिणः । स्वाऽऽलोक-तश्शास्त्रदृशा स्वबुद्ध्या स्वानुभावितः ॥ ८१ ॥ प्रयच्छति परां सिद्धिं त्यक्त्वाऽऽत्मानं मनःपिता । सुहृष्टस्सुदृढस्स्वच्छस्सुक्रान्तस्सुप्रबोधितः ॥ ८२ ॥ स्वगुणेनोर्जितो भाति हृदि हृद्यो मनोमणिः । एनं मनोमणिं ब्रह्मन्बहुपङ्ककलाऽङ्कितम् ॥८३॥ विवेकवारिणा सिद्ध्यै प्रक्षाल्याऽऽलोकवान्भव । विवेकं परमाश्रित्य बुद्ध्या सत्यमवेक्ष्य च ॥ ८४ ॥ इन्द्रियाऽरीनलं छित्वा तीर्णो भव भवाऽर्णवात् । आस्थामात्रमनन्तानां दुःखानामा-

करं विदुः ॥ ८५ ॥ अनास्थामात्रमभितः सुखानामालयं विदुः । वासनातन्तुबद्धोऽयं लोको विपरिवर्त्तते ॥ ८६ ॥ सा प्रसिद्धाऽतिदुःखाय सुखायोच्छेदमागता । धीरोऽप्यतिबहुज्ञोऽपि कुलजोऽपि महानपि ॥ ८७ ॥ तृष्णया बध्यते जन्तुस्सिंहश्शृङ्खलया यथा । परमं पौरुषं यत्नमास्थायाऽऽदाय सूद्यमम् ॥ ८८ ॥ यथाशास्त्रमनुद्वेगमाचरन्को न सिद्धिभाक् । अहं सर्वमिदं विश्वं परमाऽऽत्माऽहमच्युतः ॥ ८९ ॥ नाऽन्यदस्तीति संवित्त्या परमा सा ह्यहङ्कृतिः । सर्वस्माद्व्यतिरिक्तोऽहं वालाऽग्रादप्यहं तनुः ॥ ९० ॥ इति या संविदो ब्रह्मन् द्वितीयाऽहङ्कृतिश्शुभा । मोक्षायैषा न बन्धाय जीवन्मुक्तस्य विद्यते ॥ ९१ ॥ पाणिपादाऽऽदिमात्रोऽयमहमित्येष निश्चयः । अहङ्कारस्तृतीयोऽसौ लौकिकस्तुच्छ एव सः ॥ ९२ ॥ जीव एव दुरात्माऽसौ कन्दस्संसारदुस्तरोः ।

अनेनाऽभिहतो जन्तुरधोऽधः परिधावति ॥ ९३ ॥ अनया दुरहङ्कृत्या भावात्सन्त्यक्तया चिरम् । शिष्टाऽहङ्कारवाञ्जन्तुश्शमवान्याति मुक्तताम् ॥ ९४ ॥ प्रथमौ द्वावहङ्कारावङ्गीकृत्य त्वलौकिकौ । तृतीयाऽहङ्कृतिस्त्याज्या लौकिकी दुःखदायिनी ॥ ९५ ॥ अथ ते अपि सन्त्यज्य सर्वाऽहङ्कृतिवर्जितः । स तिष्ठति तथाऽत्युच्चैः परमेवाऽधिरोहति ॥ ९६ ॥ भोगेच्छामात्रको बन्धस्तत्त्यागो मोक्ष उच्यते । मनसोऽभ्युदयो नाशो मनोनाशो महोदयः ॥ ९७ ॥ ज्ञमनो नाशमभ्येति मनोऽज्ञस्य हि शृङ्खला । नाऽऽनन्दं न निरानन्दं न चलं नाऽचलं स्थिरम् ॥ ९८ ॥ न सन्नाऽसन्न चैतेषां मध्यं ज्ञानिमनो विदुः । यथाऽसौक्ष्म्याच्चिदाभास्य आकाशो नोपलक्ष्यते ॥ ९९ ॥ तथा निरंशश्चिद्भावस्सर्वगोऽपि न लक्ष्यते । सर्वसङ्कल्परहिता सर्वसंज्ञाविवर्जिता ॥ १०० ॥ सैषा चिदविनाशाऽऽत्मा

स्वाऽऽत्मेत्यादिकृताऽभिधा । आकाशशतभागाऽच्छा ज्ञेषु निष्कलरूपिणी ॥ १०१ ॥
सकलाऽमलसंसारस्वरूपैकाऽऽत्मदर्शिनी । नाऽस्तमेति न चोदेति नोत्तिष्ठति न तिष्ठति
॥ १०२ ॥ न च याति न चाऽऽयाति न च नेह न चेह चित् । सैषा चिदमला-
ऽऽकारा निर्विकल्पा निरास्पदा ॥ १०३ ॥ आदौ शमदमप्रायैर्गुणैश्शिष्यं विशोधयेत् ।
पश्चात्सर्वमिदं ब्रह्म शुद्धस्त्वमिति बोधयेत् ॥ १०४ ॥ अज्ञस्याऽर्धप्रबुद्धस्य सर्वं ब्रह्मेति
यो वदेत् । महानरकजालेषु स तेन विनियोजितः ॥ १०५ ॥ प्रबुद्धबुद्धेः प्रक्षीण-
भोगेच्छस्य निराशिषः । नाऽस्त्यविद्यामलमिति प्राऽऽज्ञस्तूपदिशेद्गुरुः ॥ १०६ ॥
सति दीप इवाऽऽलोकस्सत्यर्क इव वासरः । सति पुष्प इवाऽऽमोदश्चिति सत्यं जग-
त्तथा ॥ १०७ ॥ प्रतिभासत एवेदं न जगत्परमाऽर्थतः । ज्ञानदृष्टौ प्रसन्नायां प्रबो-

धवितितोदये ॥ १०८ ॥ यथावज्ज्ञास्यासि स्वस्थो मद्वाग्वृष्टिबलाऽबलम् । अविद्ययैवो-त्तमया स्वाऽर्थनाशोद्यमाऽर्थया ॥ १०९ ॥ विद्या सम्प्राऽऽप्यते ब्रह्मन्सर्वदोषाऽपहा-रिणी । शाम्यति ह्यस्त्रमस्त्रेण मलेन क्षाल्यते मलम् ॥ ११० ॥ शमं विषं विषेणैति रिपुणा हन्यते रिपुः । ईदृशी भूतमायेयं या स्वनाशेन हर्षदा ॥ १११ ॥ न लक्ष्यते स्वभावोऽस्या वीक्ष्यमाणैव नश्यति । नाऽस्त्येषा परमाऽर्थेनेत्येवं भावनयेद्धया ॥ ११२ ॥ सर्वं ब्रह्मेति यस्याऽन्तर्भावना सा हि मुक्तिदा । भेददृष्टिरविद्येयं सर्वथा तां विसर्ज-येत् ॥ ११३ ॥ मुने नाऽऽसाद्यते तद्धि पदमक्षयमुच्यते । कुतो जातेयमिति ते द्विज माऽस्तु विचारणा ॥ ११४ ॥ इमां कथमहं हन्मीत्येषा तेऽस्तु विचारणा । अस्तं गतायां क्षीणायामस्यां ज्ञास्यसि तत्पदम् ॥ ११५ ॥ यत एषा यथा चैषा यथा नष्टेत्यखण्डि-

तम् । तदस्या रोगशालाया यत्नं कुरु चिकित्सने ॥ ११६ ॥ यथैषा जन्मदुःखेषु न भूयस्त्वां नियोक्ष्यति । स्वाऽऽत्मनि स्वपरिस्पन्दैस्स्फुरत्यच्छैश्चिदर्णवः ॥ ११७ ॥ एकाऽऽत्मकमखण्डं तदित्यन्तर्भाव्यतां दृढम् । किञ्चित्क्षुभितरूपा सा चिच्छक्तिश्चिन्मयाऽर्णवे ॥ ११८ ॥ तन्मयैव स्फुरत्यच्छा तत्रैवोर्मिरिवाऽर्णवे । आत्मन्येवाऽऽत्मना व्योम्नि यथा सरसि मारुतः ॥ ११९ ॥ तथैवाऽऽत्माऽऽत्मशक्त्यैव स्वाऽऽत्मन्येवैति लोलताम् । क्षणं स्फुरति सा देवी सर्वशक्तितया तथा ॥ १२० ॥ देशकालक्रियाशक्तिर्नयस्याऽऽस्सम्प्रकर्षणे । स्वस्वभावं विदित्वोच्चैरप्यनन्तपदे स्थिता ॥ १२१ ॥ रूपं परिमितेनाऽसौ भावयत्यविभाविता । यदैवं भावितं रूपं तया परमकान्तया ॥ १२२ ॥ तदैवैनामनुगता नामसङ्ख्याऽऽदिका दृशः । विकल्पकलिताऽऽकारं देशकालक्रियाऽऽस्प-

दम् ॥ १२३ ॥ चितो रूपमिदं ब्रह्मन्क्षेत्रज्ञ इति कथ्यते । वासनाः कल्पयन्सोऽपि यात्यहङ्कारतां पुनः ॥ १२४ ॥ अहाङ्करो विनिर्णेता कलङ्की बुद्धिरुच्यते । बुद्धिसङ्कल्पिताऽऽकारा प्रयाति मननाऽऽस्पदम् ॥ १२५ ॥ मनो घनविकल्पं तु गच्छतींन्द्रियतां शनैः । पाणिपादमयं देहमिन्द्रियाणि विदुर्बुधाः ॥ १२६ ॥ एवं जीवो हि सङ्कल्पवासनारज्जुवेष्टितः । दुःखजालपरीताऽऽत्मा क्रमादायाति नीचताम् ॥ १२७॥ इति शक्तिमयं चेतो घनाऽहङ्कारतां गतम् । कोशकारक्रिमिरिव स्वेच्छया याति बन्धनम् ॥१२८॥ स्वयं कल्पिततन्मात्राजालाऽभ्यन्तरवर्त्ति च । परां विवशतामेति शृङ्खलाऽऽबद्धसिंहवत् ॥ १२९ ॥ क्वचिन्मनः क्वचिद्बुद्धिः क्वचिज्ज्ञानं क्वचित्क्रिया । क्वचिदेतदहङ्कारः क्वचिच्चित्तमिति स्मृतम् ॥ १३० ॥ क्वचित्प्रकृतिरित्युक्तं क्वचिन्मायेति कल्पितम् ।

क्वचिन्मलमिति प्रोक्तं क्वचित्कर्मेति संस्मृतम् ॥ १३१ ॥ क्वचिद्बन्ध इति ख्यातं क्वचित्पुर्यष्टकं स्मृतम् । प्रोक्तं क्वचिदविद्येति क्वचिदिच्छेति सम्मतम् ॥ १३२ ॥ इमं संसारमखिलमाशापाशविधायकम् । दधदन्तःफलैर्हीनं वटधानावटं यथा ॥ १३३ ॥ चिन्ताऽनलशिखादग्धं कोपाऽजगरचर्वितम् । कामाऽब्धिकल्लोलरतं विस्मृताऽऽत्मपितामहम् ॥ १३४ ॥ समुद्धर मनो ब्रह्मन्मातङ्गमिव कर्दमात् । एवं जीवाश्रितो भावा भवभावनयाऽऽहिताः ॥ १३५ ॥ ब्रह्मणा कल्पिताऽऽकारा लक्षशोऽप्यथ कोटिशः । सङ्ख्याऽतीताः पुरा जाता जायन्तेऽद्याऽपि चाऽभितः ॥ १३६ ॥ उत्पत्स्यन्तेऽपि चैवाऽन्ये कणौघा इव निर्झरात् । केचित्प्रथमजन्मानः केचिज्जन्मशताऽधिकाः ॥ १३७ ॥ केचिच्चाऽसङ्ख्यजन्मानः केचिद्द्वित्रिभवाऽन्तराः । केचित्किन्नरगन्धर्वविद्याधरमहोरगाः

॥ १३८ ॥ केचिदर्केन्दुवरुणारुयक्षाऽधोक्षजपद्मजाः । केचिद्ब्राह्मणभूपालवैश्यशूद्रगणा स्थिताः ॥ १३९ ॥ केचित्तृणौषधीवृक्षफलमूलपतङ्गकाः । केचित्कदम्बजम्बीररसालतालतमालकाः ॥ १४० ॥ केचिन्महेन्द्रमलयसह्यमन्दरमेरवः । केचित्क्षारोदधिक्षीरघृतेक्षुजलराशयः ॥ १४१ ॥ केचिद्विशालाः ककुभः केचिन्नद्यो महारयाः । विहायस्युच्चकैः केचिन्निपतन्त्युत्पतन्ति च ॥ १४२ ॥ कन्तुका इव हस्तेन मृत्युनाऽविरतं हताः । भुक्त्वा जन्मसहस्राणि भूयस्संसारसङ्कटे ॥ १४३ ॥ पतन्ति केचिदबुधास्सम्प्राऽऽप्याऽपि विवेकताम् । दिक्कालाऽऽद्यनवच्छिन्नमात्मतत्त्वं स्वशक्तितः ॥ १४४ ॥ लीलयैव यदादत्ते दिक्कालकलितं वपुः । तदेव जीवपर्यायवासनाऽऽवेशतः परम् ॥ १४५ ॥ मनस्सम्पद्यते लोलं कलनाऽऽकलनोन्मुखम् । कलयन्ती मनश्शक्तिरादौ भावयति

क्षणात् ॥ १४६ ॥ आकाशभावनामच्छां शब्दबीजरसोन्मुखीम् । ततस्तद्घनतां यातं घनस्पन्दक्रमान्मनः ॥ १४७ ॥ भावयत्यनिलस्पन्दं स्पर्शबीजरसोन्मुखम् । ताभ्यामाकाशवाताभ्यां दृढाऽभ्यासवशात्ततः ॥ १४८ ॥ शब्दस्पर्शस्वरूपाभ्यां सङ्घर्षाज्जन्यतेऽनलः । रूपतन्मात्रसहितं त्रिभिस्तैस्सह सम्मितम् ॥ १४९ ॥ मनस्तादृग्गुणगतं रसतन्मात्रवेदनम् । क्षणाच्चेतत्यपां शैत्यं जलसंवित्ततो भवेत् ॥ १५० ॥ ततस्तादृग्गुणगतं मनो भावयति क्षणात् । गन्धतन्मात्रमेतस्माद्भूमिसंवित्ततो भवेत् ॥ १५१ ॥ अथेत्थम्भूततन्मात्रवेष्टितं तनुतां जहत् । वपुर्वह्निकणाऽऽकारं स्फुरितं व्योम्नि पश्यति ॥ १५२ ॥ अहङ्कारकलायुक्तं बुद्धिबीजसमन्वितम् । तत्पुर्यष्टकमित्युक्तं भूतहृत्पद्मषट्पदम् ॥ १५३ ॥ तस्मिंस्तु तीव्रसंवेगाद्भावयद्भासुरं वपुः । स्थूलतामेति पाकेन मनो

बिल्वफलं यथा ॥ १५४ ॥ मूषास्थद्रुतहेमाऽऽभं स्फुरितं विमलाऽम्बरे । संन्निवेशमथाऽऽदत्ते तत्तेजस्स्वस्वभावतः ॥ १५५ ॥ ऊर्ध्वं शिरःपिण्डमयमधः पादमयं तथा । पार्श्वयोर्हस्तसंस्थानं मध्येचोदरधर्मिणम् ॥ १५६ ॥ कालेन स्फुटतामेत्य भवत्यमलविग्रहम् । बुद्धिसत्त्वबलोत्साहविज्ञानैश्वर्यसंस्थितः ॥ १५७ ॥ स एव भगवान्ब्रह्मा सर्वलोकपितामहः । अवलोक्य वपुर्ब्रह्मा कान्तमात्मीयमुत्तमम् ॥ १५८ ॥ चिन्तामभ्येत्य भगवांस्त्रिकालाऽमलदर्शनः । एतस्मिन्परमाऽऽकाशे चिन्मात्रैकाऽऽत्मरूपिणि ॥ १५९ ॥ अदृष्टपारपर्यन्ते प्रथमं किं भवेदिति । इति चिन्तितवान्ब्रह्मा सद्यो जाताऽमलाऽऽत्मदृक् ॥ १६० ॥ अपश्यत्सर्गवृन्दानि समतीतान्यनेकशः । स्मरत्यथो स सकलान्त्सर्वधर्मगुणक्रमात् ॥ १६१ ॥ लीलया कल्पयामास चित्रास्सङ्कल्पतः प्रजाः । नानाऽऽचार-

समारम्भा गन्धर्वनगरं यथा ॥१६२॥ तासा स्वर्गोऽपवर्गोऽर्थं धर्मकामाऽर्थसिद्धये। अनन्तानि विचित्राणि शास्त्राणि समकल्पयत् ॥ १६३ ॥ विरञ्चिरूपान्मनसः कल्पितत्त्वाजगत्स्थितेः। तावत्स्थितिरियं प्रोक्ता तन्नाशे नाशमाप्नुयात् ॥ १६४ ॥ न जायते न म्रियते कचित्किञ्चित्कदा च न। परमाऽर्थेन विप्रेन्द्र मिथ्या सर्वं तु दृश्यते ॥ १६५ ॥ कोशमाशाभुजङ्गानां संसाराऽऽडम्बरं त्यज। असदेतदिति ज्ञात्वा मातृभावं निवेशय ॥१६६॥ गन्धर्वनगरस्याऽर्थे भूषितेऽभूषिते तथा। अविद्यांशे सुताऽऽदौ वा कः क्रमस्सुखदुःखयोः ॥ १६७ ॥ धनदारेषु वृद्धेषु दुःखयुक्तं न तुष्टता। वृद्धायां मोहमायायां कस्समाश्वासवानिह ॥ १६८ ॥ यैरेव जायते रागो मूर्खस्याऽधिकतां गतैः। तैरेव भागैः प्राऽऽज्ञस्य विराग उपजायते ॥ १६९ ॥ अतो निदाघ तत्त्वज्ञ व्यवहारेषु

602

संसृतेः । नष्टं नष्टमुपेक्षस्व प्राऽऽप्तं प्राऽऽप्तमुपाऽऽहर ॥ १७० ॥ अनागतानां भोगा-नामवाञ्छनमकृत्रिमम् । आगतानां च सम्भोग इति पण्डितलक्षणम् ॥ १७१ ॥ शुद्धं सदसतोर्मध्यं पदं बुद्ध्वाऽवलम्ब्य च । सबाह्याऽऽभ्यन्तरं दृश्यं मा गृहाण विमुञ्च मा ॥ १७२ ॥ यस्य नेच्छा तथाऽनिच्छा ज्ञस्य कर्मणि तिष्ठतः । न तस्य लिप्यते प्रज्ञा पद्मपत्रमिवाऽम्बुभिः ॥ १७३ ॥ यदि ते नेन्द्रियाऽर्थश्रीस्स्पन्दते हृदि वै द्विज । तदा विज्ञातविज्ञेयस्समुत्तीर्णो भवाऽर्णवात् ॥ १७४ ॥ उच्चैःपदाय परया प्रज्ञया वासना-गणात् । पुष्पाद्गन्धमपोह्याऽरं चेतोवृत्तिं पृथक्कुरु ॥ १७५ ॥ संसाराऽम्बुनिधावस्मिन्वा-सनाऽम्बुपरिप्लुते । ये प्रज्ञानावमारुढास्ते तीर्णाः पण्डिताः परे ॥ १७६ ॥ न त्यजन्ति न वाञ्छन्ति व्यवहारं जगद्गतम् । सर्वमेवाऽनुवर्त्तन्ते पाराऽवारविदो जनाः ॥ १७७ ॥

अनन्तस्याऽऽत्मतत्त्वस्य सत्तासामान्यरूपिणः । चितश्चेत्योन्मुखत्वं यत्तत्सङ्कल्पाऽङ्कुरं विदुः ॥ १७८ ॥ ले ( वे ) शतः प्राऽऽप्तसत्ताकस्स एव घनतां शनैः । याति चित्तत्वमापूर्य दृढं जाड्याय ( चाऽऽकाश ) मेघवत् ॥ १७९ ॥ भावयन्ति चितिश्चैत्यं व्यतिरिक्तमिवाऽऽत्मनः । सङ्कल्पतामिवाऽऽयाति बीजमङ्कुरतामिव ॥१८०॥ सङ्कल्पनं हि सङ्कल्पस्स्वयमेव प्रजायते ॥ वर्धते स्वयमेवाऽऽशु दुःखाय न सुखाय यत् ॥१८१॥ मा सङ्कल्पय सङ्कल्पं मा भावं भावय स्थितौ । सङ्कल्पनाशने यत्तो न भूयोऽननुगच्छति ॥ १८२ ॥ भावनाऽभावमात्रेण सङ्कल्पः क्षीयते स्वयम् । सङ्कल्पेनैव सङ्कल्पं मनसैव मनो मुने ॥१८३॥ छित्वा स्वाऽऽत्मनि तिष्ठ त्वं किमेतावति दुष्करम् । यथैवेदं नभश्शून्यं जगच्छून्यं तथैव हि ॥ १८४ ॥ तण्डुलस्य यथा चर्म यथा ताम्रस्य कालिमा ।

603

नश्यति क्रियया विप्र पुरुषस्य तथा मलम् ॥ १८५ ॥ जीवस्य तण्डुलस्येव मलं सहजमप्यलम् । नश्यत्येव न सन्देहस्तस्मादुद्योगवान्भवेत् ॥१८६॥ इति महोपनिषत् ॥ इति पञ्चमोऽध्यायः ॥ अन्तराऽऽस्थां परित्यज्य भावश्रीं भावनामयीम् । योऽसि सोऽसि जगत्यस्मिँल्लीलया विहराऽनघ ॥ १ ॥ सर्वत्राऽहमकर्त्तेति दृढभावनयाऽनया । परमाऽमृतनाम्नी सा समतैवाऽवशिष्यते ॥ २ ॥ खेदोल्लासविलासेषु स्वाऽऽत्मकर्तृतयैकया । स्वसङ्कल्पे क्षयं याते समतैवाऽवशिष्यते ॥ ३ ॥ समता सर्वभावेषु याऽसौ सत्यपरा स्थितिः । तस्यामवस्थितं चित्तं न भूयो जन्मभाग्भवेत् ॥ ४ ॥ अथवा सर्वकर्त्तृत्वमकर्त्तृत्वं च वै मुने । सर्वं त्यक्त्वा मनः पीत्वा योऽसि सोऽसि स्थिरो भव ॥ ५ ॥ शेषस्थिरसमाधानो येन त्यजसि तत्त्यज । चिन्मनःकलनाऽऽकारं प्रकाशतिमिराऽऽदि-

कम् ॥ ६ ॥ वासनां वासितारं च प्राऽणस्पन्दनपूर्वकम् । समूलमखिलं त्यक्त्वा व्योमसाम्यः प्रशान्तधीः ॥ ७ ॥ हृदयात्सम्परित्यज्य सर्ववासनपङ्क्तयः । यस्तिष्ठति गतव्यग्रस्स मुक्तः परमेश्वरः ॥ ८ ॥ दृष्टं द्रष्ठव्यमखिलं भ्रान्तं भ्रान्त्या दिशो दश । युक्त्या वै चरतोऽज्ञस्य संसारो गोष्पदाऽऽकृतिः ॥ ९ ॥ सबाह्याऽऽभ्यन्तरे देहे ह्यध उर्ध्वं च दिक्षु च । इत आत्मा ततोऽप्यात्मा नाऽस्त्यनात्ममयं जगत् ॥ १० ॥ न तदस्ति न यत्राऽहं न तदस्ति न तन्मयम् । किमन्यदभिवाञ्छामि सर्वं सच्चिन्मयं ततम् ॥ ११ ॥ समस्तं खल्विदं ब्रह्म सर्वमात्मेदमाततम् । अहमन्य इदं चाऽन्यदिति भ्रान्तिं त्यजाऽनघ ॥ १२ ॥ तते ब्रह्मघने नित्ये सम्भवन्ति न कल्पिताः । न शोको-ऽस्ति न मोहोऽस्ति न जराऽस्ति न जन्म वा ॥१३ ॥ यदस्तीह तदेवाऽस्ति विज्वरो

604

भव सर्वदा । यथा प्राऽऽप्ताऽनुभवतस्सर्वत्राऽनभिवाञ्छनात् ॥ १४ ॥ त्यागाऽऽदानपरि-
त्यागी विज्वरो भव सर्वदा । यस्येदं जन्म पाश्चात्यं तमाश्वेव महामते ॥१५॥ विशन्ति
विद्या विमला मुक्ता वेणुमिवोत्तमम् । विरक्तमनसां सम्यक् स्वप्रसङ्गादुदाहृतम् ॥ १६ ॥
द्रष्टुर्दृश्यसमायोगात्प्रत्ययाऽऽनन्दनिश्चयः । यस्तं स्वमात्मतत्त्वोत्थं निष्पन्दं समुपा-
ऽऽस्महे ॥ १७ ॥ द्रष्टृदर्शनदृश्यानि त्यक्त्वा वासनया सह । दर्शनप्रत्ययाऽऽभास-
मात्मानं समुपास्महे ॥ १८ ॥ द्वयोर्मध्यगतं नित्यमस्ति नाऽस्तीति पक्षयोः । प्रका-
शनं प्रकाशानामात्मानं समुपाऽऽस्महे ॥ १९ ॥ सन्त्यज्य हृद्गुहेशानं देवमन्यं प्रया-
न्ति ये । ते रत्नमभिवाञ्छन्ति त्यक्तहस्तस्थकौस्तुभाः ॥ २० ॥ उत्थिताऽनुत्थितानेता-
निन्द्रियाऽरीन् पुनःपुनः । हन्याद्विवेकदण्डेन वज्रेणेव हरिर्गिरीन् ॥ २१ ॥ संसारारा-

त्रिदुस्स्वप्ने शून्ये देहमये भ्रमे। सर्वमेवाऽपवित्रं तद्दृष्टं संसृतिविभ्रमम् ॥ २२ ॥ अज्ञानोपहतो बाल्ये यौवने वनिताऽऽहतः। शेषे कलत्रचिन्ताऽऽर्तः किं करोति नराऽधमः ॥२३॥ सतोऽसत्ता स्थिता मूर्ध्नि रम्याणां मूर्ध्न्यरम्यता। सुखानां मूर्ध्नि दुःखानि किमेकं संश्रयाम्यहम् ॥ २४ ॥ येषा निमेषणोन्मेषौ जगतः प्रलयोदयौ। तादृशाः पुरुषा यान्ति मादृशां गणनैव का ॥ २५ ॥ संसार एव दुःखानां सीमाऽन्त इति कथ्यते। तन्मध्ये पतिते देहे सुखमासाद्यते कथम् ॥ २६ ॥ प्रबुद्धोऽस्मि प्रबुद्धोऽस्मि दुष्टश्चोरोऽयमात्मनः। मनो नाम निहन्म्येनं मनसाऽस्मि चिरं हृतः ॥ २७ ॥ मा खेदं भज हेयेषु नोपाऽऽदेयपरो भव। हेयाऽऽदेयदृशौ त्यक्त्वा शेषस्थस्सुस्थिरो भव ॥ २८ ॥ निराशता निर्भयता नित्यता समता ज्ञता। निरीहता निष्क्रियता सौम्यता निर्विकल्पता ॥ २९ ॥

धृतिर्मैत्री मनस्तुष्टिर्मृदुता मृदुभाषिता । हेयोपाऽऽदेयनिर्मुक्ते ज्ञे तिष्ठन्त्यपवासनम् ॥३०॥ गृहीततृष्णाशबरीवासनाजालमाततम् । संसारवारिप्रसृतं चिन्तातन्तुभिराततम् ॥३१॥ अनया तीक्ष्णया तात च्छिन्धि बुद्धिशलाकया । वात्ययेवाऽम्बुदं जालं छित्वा तिष्ठ तते पदे ॥ ३२ ॥ मनसैव मनश्छित्त्वा कुठारेणेव पादपम् । पदं पावनमासाद्य सद्य एव स्थिरो भव ॥ ३३ ॥ तिष्ठन्गच्छन्त्स्वपञ्जाग्रन्निवसन्नुत्पतन्पतन् । असदेवेद-मित्यन्तं निश्चित्याऽऽस्थां परित्यज ॥ ३४ ॥ दृश्यमाश्रयसीदं चेत्तत्सच्चित्तोऽसि बन्धवान् । दृश्यं सन्त्यजसीदं चेत्तदाऽचित्तोऽसि मोक्षवान् ॥ ३५ ॥ नाऽहं नेदमिति ध्यायंस्तिष्ठ त्वमचलाऽचलः । आत्मनो जगतश्चाऽन्तर्द्रष्टृदृश्यदशाऽन्तरे ॥ ३६ ॥ दर्शनाऽऽख्यं स्वमात्मानं सर्वदा भावयन्भव । स्वाद्यस्वादकसन्त्यक्तं स्वाद्यस्वादक-

मध्यगम् ॥ ३७ ॥ स्वदनं केवलं ध्यायन्परमाऽऽत्ममयो भव । अवलम्ब्य निरालम्बं मध्येमध्ये स्थिरो भव ॥ ३८ ॥ रज्जुबद्धा विमुच्यन्ते तृष्णाबद्धा न केनचित् । तस्मान्निदाघ तृष्णां त्वं त्यज सङ्कल्पवर्जनात् ॥ ३९ ॥ एतामहम्भावमयीमपुण्यां छित्वाऽनहम्भावशलकायैव । स्वभावजां भव्यभवाऽन्तभूमौ भव प्रशान्ताऽखिलभूतभीतिः ॥ ४० ॥ अहमेषां पदाऽर्थानामेते च मम जीवितम् । नाऽहमेभिर्विना किञ्चिन्न मयैते विना किल ॥ ४१ ॥ इत्यन्तर्निश्चयं त्यक्त्वा विचार्य मनसा सह । नाऽहं पदाऽर्थस्य न मे पदाऽर्थ इति भाविते ॥४२॥ अन्त(त)श्शीतलया बुद्ध्या कुर्वतो लीलया क्रियाम् । यो नूनं वासनात्यागो ध्येयो ब्रह्मन्प्रकीर्तितः ॥ ४३ ॥ सर्वं समतया बुद्ध्या यः कृत्वा वासनाक्षयम् । जहाति निर्ममो देहं नेयोऽसौ वासनाक्षयः

606

॥ ४४ ॥ अहङ्कारमयीं त्यक्त्वा वासनां लीलयैव यः । तिष्ठति ध्येयसन्त्यागी स जीवन्मुक्त उच्यते ॥ ४५ ॥ निर्मूलं कलनां त्यक्त्वा वासनां यश्शमं गतः । ज्ञेयं त्यागमिमं विद्धि मुक्तं तं ब्राह्मणोत्तमम् ॥ ४६ ॥ द्वावेतौ ब्रह्मतां यातौ द्वावेतौ विगतज्वरौ । आपतत्सु यथाकालं सुखदुःखेष्वनारतौ ॥ ४७ ॥ सन्न्यासियोगिनौ दान्तौ विद्धि शान्तौ मुनीश्वर । ईप्सिताऽनीप्सिते न स्तो यस्याऽन्तर्वर्त्तिदृष्टिषु ॥ ४८ ॥ सुषुप्तिवद्यश्चरति स जीवन्मुक्त उच्यते । हर्षाऽमर्षभयक्रोधकामकार्पण्यदृष्टिभिः ॥ ४९ ॥ न हृष्यति ग्लायति यः परामर्शविवर्जितः । बाह्याऽर्थवासनोद्भूता तृष्णा बद्धेति कथ्यते ॥ ५० ॥ सर्वाऽर्थवासनोन्मुक्ता तृष्णा मुक्तेति भण्यते । इदमस्तु ममेत्यन्तमिच्छां प्राऽर्थनयाऽन्वितताम् ॥ ५१ ॥ तां तीक्ष्णां शृङ्खलां विद्धि दुःखजन्मभयप्रदाम् । तामेतां

सर्वभावेषु सत्स्वसत्सु च सर्वदा ॥ ५२ ॥ सन्त्यज्य परमोदारं पदमेति महामनाः । बन्धाऽऽस्थामथ मोक्षाऽऽस्थां सुखदुःखदशामपि ॥ ५३ ॥ त्यक्त्वा सदसदास्थां त्वं तिष्ठाऽक्षुब्धमहाऽब्धिवत् । जायते निश्चयस्साधो पुरुषस्य चतुर्विधः ॥ ५४ ॥ आपाद-मस्तकमहं मातापितृविनिर्मितः। इत्येको निश्चयो ब्रह्मन्बन्धायाऽऽस विलोकनात् ॥५५॥ अतीतस्सर्वभावेभ्यो वालाऽग्रादप्यहं तनुः । इति द्वितीयो मोक्षाय निश्चयो जायते सताम् ॥ ५६ ॥ जगज्जालपदार्थाऽऽत्मा सर्व एवाऽहमक्षयः । तृतीयो निश्चयश्चोक्तो मोक्षायैव द्विजोत्तम ॥ ५७ ॥ अहं जगद्वा सकलं शून्यं व्योमसमं सदा । एवमेष चतुर्थोऽपि निश्चयो मोक्षसिद्धिदः ॥ ५८ ॥ एतेषां प्रथमः प्रोक्तस्तृष्णया बन्धयो-ग्यया । शुद्धतृष्णास्त्रयस्स्वच्छा जीवन्मुक्ता विलासिनः ॥ ५९ ॥ सर्व चाऽप्यहमे-

67

वेति निश्चयो यो महामते । तमादाय विषादाय न भूयो जायते मतिः ॥ ६० ॥ शून्यं तत्प्रकृतिर्माया ब्रह्मविज्ञानमित्यपि । शिवः पुरुष ईशानो नित्यमात्मेति कथ्यते ॥ ६१ ॥ द्वैताऽद्वैतसमुद्भूतैर्जगन्निर्माणलीलया । परमाऽऽत्ममयी शक्तिरद्वैतैव विजृम्भते ॥ ६२ ॥ सर्वाऽतीतपदाऽऽलम्बी परिपूर्णैकचिन्मयः । नोद्वेगी न च तुष्टाऽऽत्मा संसारे नाऽवसीदति ॥ ६३ ॥ प्राऽऽप्तकर्मकरो नित्यं शत्रुमित्रसमानदृक् । ईहिताऽनीहितैर्मुक्तो न शोचति न काङ्क्षति ॥ ६४ ॥ सर्वस्याऽभिमतं वक्ता चोदितः पेशलोक्तिमान् । आशयज्ञश्च भूतानां संसारे नाऽवसीदति ॥ ६५ ॥ पूर्वां दृष्टिमवष्टभ्य ध्येयत्यागविलासिनीम् । जीवन्मुक्ततया स्वस्थो लोके विहर विज्वरः ॥ ६६ ॥ अन्तस्सन्त्यक्तसर्वाऽऽशो वीतरागो विवासनः । बहिस्सर्वसमाऽऽचारो लोके विहर विज्वरः ॥ ६७ ॥

बहिः कृत्रिमसंरम्भो (सम्भारो) हृदि संरम्भवर्जितः । कर्ता बहिरकर्त्ताऽन्तर्लोके विहर शुद्धधीः ॥ ६८ ॥ त्यक्ताऽहङ्कृतिराश्वस्तमतिराकाशशोभनः । अगृहीतकलङ्काऽङ्को लोके विहर शुद्धधीः ॥६९॥ उदारः पेशलाऽऽचारस्सर्वाऽऽचाराऽनुवृत्तिमान् । अन्तस्सङ्गपरित्यागी बहिस्सम्भारवानिव ॥ ७० ॥ अन्तर्वैराग्यमादाय बहिराशोन्मुखेहितः । अयं बन्धुरयं नेति गणना लघुचेतसाम् ॥ ७१ ॥ उदारचरितानां तु वसुधैव कुटुम्बकम् । भावाऽभावविनिर्मुक्तं जरामरणवर्जितम् ॥ ७२ ॥ प्रशान्तकलनाऽऽरम्भं नीरागं पदमाश्रय । एषा ब्राह्मी स्थितिस्स्वच्छा निष्कामा विगताऽऽमया ॥ ७३ ॥ आदाय विहरन्नेवं सङ्कटेषु विमुह्यति । वैराग्येणाऽथ शास्त्रेण महत्त्वाऽऽदिगुणैरपि ॥७४॥ यत्नोपद्वि (त्सङ्कल्प) हराऽर्थं तत्स्वयमेवोन्नयेन्मनः । वैराग्यात्पूर्णतामेति मनो नाशव ( द )-

शाऽनुगम् ॥ ७५ ॥ आशया रक्ततामेति शरदीव सरोऽमलम् । तमेव भुक्तविरसं व्यापारौघं पुनःपुनः ॥ ७६ ॥ दिवसेदिवसे कुर्वन्प्राऽऽज्ञः कस्मान्न लज्जते । चिच्चैत्यकलितो बन्धस्तन्मुक्तौ मुक्तिरुच्यते ॥ ७७ ॥ चिदचैत्याकिलाऽऽत्मेति सर्वसिद्धाऽन्तसङ्ग्रहः । एतन्निश्चयमादाय विलोकय धिये ( यथे ) च्छया ॥ ७८ ॥ स्वयमेवाऽऽत्मनाऽऽत्मानमानन्दं पदमाप्स्यासि । चिदहं चिदिमे लोकाश्चिदाशाश्चिदिमाः प्रजाः ॥ ७९ ॥ दृश्यदर्शननिर्मुक्तः केवलाऽमलरूपवान् । नित्योदितो निराभासो द्रष्टा साक्षी चिदात्मकः ॥ ८० ॥ चैत्यनिर्मुक्तचिद्रूपं पूर्णज्योतिस्स्वरूपकम् । संशान्तसर्वसंवेद्यं संविन्मात्रमहं महत् ॥ ८१ ॥ संशान्तसर्वसङ्कल्पः प्रशान्तसकलेषणः । निर्विकल्पपदं गत्वा स्वस्थो भव मुनीश्वर ॥ ८२ ॥ इति । य इमां महोपनिषदं ब्राह्मणो नित्यमधीते अश्रोत्रिय-

श्श्रोत्रियो भवति। अनुपनीत उपनीतो भवति। सोऽग्निपूतो भवति। स वायुपूतो भवति। स सोमपूतो भवति। स सत्यपूतो भवति। स सर्वपूतो भवति। स सर्वैर्देवैर्ज्ञातो भवति। स सर्वेषु तीर्थेषु स्नातो भवति। स सर्वैर्देवैरनुध्यातो भवति। स सर्वक्रतुभिरिष्टवान्भवति। गायत्र्याष्षष्टिसहस्राणि जप्तानि फलानि भवन्ति। इतिहासपुराणानां (रुद्राणां) शतसहस्राणि जप्तानि फलानि भवन्ति। प्रणवानामयुतं जप्तं भवति। आचक्षुषः पङ्क्तिं पुनाति। आसप्तमान्पुरुषयुगान्पुनाति। इत्याह भगवान्हिरण्यगर्भः। जप्येनाऽमृतत्वं च गच्छतीत्युपनिषत्॥ इति षष्ठोऽध्यायः॥ ॐ आप्यायन्त्विति शान्तिः॥ ॐ तत्सत्॥ इति महोपनिषत्समाप्ता॥

अथ शारीरकोपनिषत्॥ तत्त्वग्रामोपायसिद्धं परतत्त्वस्वरूपकम्। शरीरोपनिषद्वेद्यं

श्रीरामब्रह्म मे गतिः ॥ ॐ सह नाववत्विति शान्तिः ॥ ॐ अथाऽतः पृथिव्यादिमहाभू-
तानाँ समवायँ शरीरम् । यत्कठिनं सा पृथिवी यद्द्रवं तदापो यदुष्णं तत्तेजो यत्सञ्चरति
स वायुर्यत्सुषिरं तदाकाशम् । श्रोत्राऽऽदीनि ज्ञानेन्द्रियाणि । श्रोत्रमाकाशे वायौ त्वगग्नौ
चक्षुरप्सु जिह्वा पृथिव्यां घ्राणमिति । एवमिन्द्रियाणां यथाक्रमेण शब्दस्पर्शरूपरसगन्धा-
श्चैते विषयाः पृथिव्यादिमहाभूतेषु क्रमेणोत्पन्नाः । वाक्पाणिपादपायूपस्थाऽऽख्यानि
कर्मेन्द्रियाणि । तेषां क्रमेण वचनाऽऽदानगमनविसर्गाऽऽनन्दाश्चैते विषयाःपृथिव्यादि-
महाभूतेषु क्रमेणोत्पन्नाः । मनोबुद्धिरहङ्कारश्चित्तमित्यन्तःकरणचतुष्टयम् । तेषां क्रमेण
सङ्कल्पविकल्पाऽध्यवसायाऽभिमानाऽवधारणास्वरूपाश्चैते विषयाः । मनःस्थानं गलाऽन्तं
बुद्धेर्वदनमहङ्कारस्य हृदयं चित्तस्य नाभिरिति । अस्थिचर्मनाडीरोममाँसाश्चेति पृथि-

न्यंशाः । मूत्रश्लेष्मरक्तशुक्रस्वेदा अबंशाः । क्षुत्तृष्णाऽऽलस्यमोहमैथुनान्यग्नेः । प्रचा-रणविलेखनस्थूलाऽऽद्युन्मेषनिमेषाऽऽदि वायोः । कामक्रोधलोभमोहभयान्याकाशस्य । शब्दस्पर्शरूपरसगन्धाः पृथिवीगुणाः । शब्दस्पर्शरूपरसाश्चाऽपां गुणाः । शब्दस्पर्श-रूपाण्यग्निगुणाः । शब्दस्पर्शाविति वायुगुणौ । शब्द एक आकाशस्य । सात्त्विक-राजसतामसलक्षणानि त्रयो गुणाः । अहिंसा सत्यमस्तेयब्रह्मचर्याऽपरिग्रहाः । अक्रोधो गुरुशुश्रूषा शौचं सन्तोष आर्जवम् ॥१॥ अमानित्वमदम्भित्वमास्तिकत्वमहिंस्रता । एते सर्वे गुणा ज्ञेयास्सात्त्विकस्य विशेषतः ॥२॥ अहं कर्त्ताऽस्म्यहं भोक्ताऽस्म्यहं वक्ताऽभि-मानवान् । एते गुणा राजसस्य प्रोच्यन्ते ब्रह्मवित्तमैः ॥ ३ ॥ निद्राऽऽलस्यौ मोहरागौ मैथुनं चौर्यमेव च । एते गुणास्तामसस्य प्रोच्यन्ते ब्रह्मवादिभिः ॥ ४ ॥ ऊर्ध्वे सात्त्विको

मध्ये राजसोऽधस्तामस इति । सत्यज्ञानं सात्त्विकम् । धर्मज्ञानं राजसम् । तिमिराऽन्धं तामसमिति । जाग्रत्स्वप्नसुषुप्तितुरीयमिति चतुर्विधा अवस्थाः । ज्ञानेन्द्रियकर्मेन्द्रियाऽन्तःकरणचतुष्टयं चतुर्दशकरणयुक्तं जाग्रत् । अन्तःकरणचतुष्टयैरेव संयुक्तस्स्वप्नः । चित्तैककरणा सुषुप्तिः । केवलजीवयुक्तमेव तुरीयमिति । उन्मीलितनिमीलितमध्यस्थजीवपरमाऽऽत्मनोर्मध्ये जीवाऽऽत्मा क्षेत्रज्ञ इति विज्ञायते । बुद्धिकर्मेन्द्रियप्राऽणपञ्चकैर्मनसा धिया । शरीरं सप्तदशभिस्सूक्ष्मं तल्लिङ्गमुच्यते ॥५॥ मनो बुद्धिरहङ्कारः खाऽनिलाऽग्निजलानि भूः । एताः प्रकृतयस्त्वष्टौ विकाराष्षोडशाऽपरे ॥६॥ श्रोत्रं त्वक्चक्षुषी जिह्वा घ्राणं चैव तु पञ्चमम् । पायूपस्थौ करौ पादौ वाक् चैव दशमी मता ॥७॥ शब्दस्स्पर्शश्च रूपं च रसो गन्धस्तथैव च । त्रयोविंशतिरेतानि तत्त्वानि प्रकृतानि तु ॥८॥ चतुर्विंशति-

रव्यक्तं प्रधानं पुरुषः परः ॥ इत्युपनिषत् ॥ ॐ सह नाववत्विति शान्तिः ॥ ॐ तत्सत् ॥ इति शारीरकोपनिषत्समाप्ता ॥

अथ योगशिखोपनिषत् ॥ ॐ योगज्ञाने यत्पदाऽऽप्तिसाधनत्वेन विश्रुते । तत्त्वै-पदं ब्रह्मतत्त्वं स्वमात्रमवशिष्यते ॥ ॐ सह नाववत्विति शान्तिः ॥ सर्वे जीवास्सुखै-र्दुःखैर्मायाजालेन वेष्टिताः । तेषां मुक्तिः कथं देव कृपया वद शङ्कर ॥ १ ॥ सर्व-सिद्धिकरं मार्गं मायाजालनिकृन्तनम् । जन्ममृत्युजराव्याधिनाशनँ सुखदं वद ॥ २ ॥ इति हिरण्यगर्भः पप्रच्छ स होवाच महेश्वरः । नानामार्गैस्तु दुष्प्राऽऽपं कैवल्यं परमं पदम् ॥ ३ ॥ सिद्धिमार्गेण लभते नाऽन्यथा पद्मसम्भव । पतितारशास्त्रजालेषु प्रज्ञा-या ते न मोहिताः ॥ ४ ॥ स्वाऽऽत्मप्रकाशरूपं तत्किं शास्त्रेण प्रकाश्यते । निष्कलं

निर्मलं शान्तं सर्वाऽतीतं निरामयम् ॥ ५ ॥ तदेव जीवरूपेण पुण्यपापफलैर्वृतम् । परमाऽऽत्मपदं नित्यं तत्कथं जीवतां गतम् ॥ ६ ॥ तत्त्वाऽतीतं महादेव प्रसादात्कथयेश्वर । सर्वभावपदाऽतीतं ज्ञानरूपं निरञ्जनम् ॥ ७ ॥ वायुवत्स्फुरितं स्वस्मिंस्तत्राऽहङ्कृतिरुत्थिता । पञ्चाऽऽत्मकमभूत्पिण्डं धातुबद्धं गुणाऽऽत्मकम् ॥ ८ ॥ सुखदुःखैस्समायुक्तं जीवभावनया कुरु । तेन जीवाऽभिधा प्रोक्ता विशुद्धे परमाऽऽत्मनि ॥९॥ कामक्रोधभयं चाऽपि मोहलोभमथो (दा) रजः । जन्म मृत्युश्च कार्पण्यं शोकस्तन्द्रा क्षुधा तृषा ॥ १० ॥ तृष्णा लज्जा भयं दुःखं विषादो हर्ष एव च । एभिर्दोषैर्विनिर्मुक्तस्सजीवश्शिव उच्यते ॥ ११ ॥ तस्माद्दोषविनाशाऽर्थमुपायं कथयामि ते । ज्ञानं केचिद्वदन्त्यत्र केवलं तन्न सिद्धये ॥ १२ ॥ योगहीनं कथं ज्ञानं मोक्षदं भवतीह भोः ।

योगोऽपि ज्ञानहीनस्तु न क्षमो मोक्षकर्मणि ॥१३॥ तस्माज्ज्ञानं च योगं च मुमुक्षुर्दृढमभ्यसेत् । ज्ञानस्वरूपमेवाऽऽदौ ज्ञेयं ज्ञानैकसाधनम् ॥ १४ ॥ अज्ञानं कीदृशं चेति प्रविचार्यं मुमुक्षुणा । ज्ञातं येन निजँ रूपं कैवल्यं परमं पदम् ॥ १५ ॥ असौ दोषैर्विनिर्मुक्तः कामक्रोधभयाऽऽदिभिः । सर्वदोषैर्वृतो जीवः कथं ज्ञानेन मुच्यते ॥ १६ ॥ स्वाऽऽत्मरूपं यथा ज्ञानं पूर्णं तद्व्यापकं तथा । कामक्रोधाऽऽदिदोषाणाँ स्वरूपान्नाऽऽस्ति भिन्नता ॥ १७ ॥ पश्चात्तस्य विधिः किन्नु निषेधोऽपि कथं भवेत् । विवेकी सर्वदा मुक्तस्सँसारभ्रमवर्जितः ॥ १८ ॥ परिपूर्णस्वरूपं तत्सत्यं कमलसम्भव । सकलं निष्कलं चैव पूर्णत्वाच्च तदेव हि ॥ १९ ॥ कलिना स्फूर्तिरूपेण सँसारभ्रमतां गतम् । निष्कलं निर्मलं साक्षात्सकलं गगनोपमम् ॥ २० ॥ उत्पत्तिस्थितिसँहारस्फूर्तिज्ञानवि-

वर्जितम् । एतद्रूपँ समायातस्स कथं मोहसागरे ॥ २१ ॥ निमज्जति महाबाहो त्यक्त्वा विद्यां पुनःपुनः । सुखदुःखाऽऽदिमोहेषु यथा सँसारिणाँ स्थितिः ॥ २२ ॥ तथा ज्ञानी यदा (था) तिष्ठेद्वासनावाऽसितस्तदा । तयोर्नाऽस्ति विशेषोऽत्र समा सँसारभावना ॥२३॥ ज्ञानं चेदीदृशं ज्ञातमज्ञानं कीदृशं पुनः । ज्ञाननिष्ठो विरक्तोपि धर्मज्ञो विजितेन्द्रियः ॥ २४ ॥ विना देहेऽपि योगेन न मोक्षं लभते विधे । अपक्वाः परिपक्वाश्च देहिनो द्विविधास्स्मृताः ॥ २५ ॥ अपक्वा योगहीनास्तु पक्वा योगेन देहिनः । सर्वो योगाऽग्निना देहो ह्यजडश्शोकवर्जितः ॥ २६ ॥ जडस्तु पार्थिवो ज्ञेयो ह्यपक्वो दुःखदो भवेत् । ध्यानस्थोऽसौ तथाऽप्येवमिन्द्रियैर्विवशो भवेत् ॥ २७ ॥ तानि गाढं नियम्याऽपि तथाऽप्यन्यैः प्रबाध्यते । शीतोष्णसुखदुःखाऽऽद्यैर्व्याधिभिर्मानसैस्तथा ॥ २८ ॥

अन्यैर्नानाविधैर्जीवैश्शस्त्राऽग्निजलमारुतैः । शरीरं पीड्यते तैस्तैश्चित्तँ सङ्क्षुभ्यते ततः ॥ २९ ॥ तथा प्राऽणविपत्तौ तु क्षोभमायाति मारुतः । ततो दुःखशतैर्व्याप्तं चित्तं क्षुब्धं भवेन्नृणाम् ॥ ३० ॥ देहाऽवसानसमये चित्ते यद्यद्विभावयेत् । तत्तदेव भवेज्जीव इत्येवं जन्मकारणम् ॥ ३१ ॥ देहाऽन्ते (न्तं) किं भवेज्जन्म तन्न जानन्ति मानवाः । तस्माज्ज्ञानं च वैराग्यं जीवस्य केवलँ श्रमः ॥ ३२ ॥ पिपीलिका यथा लग्ना देहे ध्यानाद्विमुच्यते । असौ किं वृश्चिकैर्दष्टो देहाऽन्ते वा कथँ सुखी ॥ ३३ ॥ तस्मान्मूढा न जानन्ति मिथ्यातर्केण वेष्टिताः । अहङ्कृतिर्यदा यस्य नष्टा भवति तस्य वै ॥ ३४ ॥ देहस्त्वपि भवेन्नष्टो व्याधय (भि) श्चाऽस्य किं पुनः । जलाऽग्निशस्त्रखाताऽऽदिबाधा कस्य भविष्यति ॥ ३५ ॥ यदा यदा परिक्षीणा पुष्टा चाऽहङ्कृतिर्भवेत् ।

तमनेनाऽस्य नश्यन्ति प्रवर्तन्ते रुगादयः ॥ ३६ ॥ कारणेन विना कार्यं न कदा च न विद्यते । अहङ्कारं विना तद्वद्देहे दुःखं कथं भवेत् ॥ ३७ ॥ शरीरेण जितास्सर्वे शरीरं योगिभिर्जितम् । तत्कथं कुरुते तेषाँ सुखदुःखाऽऽदिकं फलम् ॥ ३८ ॥ इन्द्रियाणि मनो बुद्धिः कामक्रोधाऽऽदिकं जितम् । तेनैव विजितँ सर्वं नाऽसौ केनाऽपि बाध्यते ॥३९॥ महाभूतानि तत्त्वानि सँहृतानि क्रमेण च । सप्तधातुमयो देहो दग्धो योगाऽग्निना शनैः ॥४०॥ देवैरपि न लक्ष्येत योगिदेहो महाबलः । भेदबन्धविनिर्मुक्तो नानाशक्तिधरः परः ॥ ४१ ॥ यथाऽऽकाशस्तथा देह आकाशादपि निर्मलः । सूक्ष्मात्सूक्ष्मतरो दृश्य स्थूलात्स्थूलो जडाज्जडः ॥४२॥ इच्छारूपो हि योगीन्द्रस्स्वतन्त्रस्त्वजराऽमरः । क्रीडते त्रिषु लोकेषु लीलया यत्र कुत्र चित् ॥ ४३ ॥ अचिन्त्यशक्तिमान्योगी नानारूपाणि

धारयेत् । सँहरेच्च पुनस्तानि स्वेच्छया विजितेन्द्रियः ॥ ४४ ॥ नाऽसौ मरणमाऽऽप्नोति पुनर्योगबलेन तु । हठेन मृत एवाऽसौ मृतस्य मरणं कुतः ॥४५॥ मरणं यत्र सर्वेषां तत्राऽसौ परिजीवति । यत्र जीवन्ति ( ति ) मूढा ( ढ ) स्तु तत्राऽसौ मृत एव वै ॥ ४६ ॥ कर्तव्यं नैव तस्याऽस्ति कृतेनाऽसौ न लिप्यते । जीवन्मुक्तस्सदा स्वच्छस्सर्वदोषविवर्जितः ॥ ४७ ॥ विरक्ता ज्ञानिनश्चाऽन्ये देहेन विजितास्सदा । ते कथं योगिभिस्तुल्या माँसपिण्डाः कुदेहिनः ॥ ४८ ॥ देहाऽन्ते ज्ञानिभिः पुण्यात्पापाच्च फलमाप्यते । ईदृशं तु भवेत्तत्तद्भुक्त्वा ज्ञानी पुनर्भवेत् ॥ ४९ ॥ पश्चात्पुण्येन लभते सिद्धेन सह सङ्गतिम् । ततस्सिद्धस्य कृपया योगी भवति नाऽन्यथा ॥ ५० ॥ ततो नश्यति सँसारो नाऽन्यथा शिवभाषितम् । योगेन रहितं ज्ञानं न

मोक्षाय भवेद्विधे ॥ ५१ ॥ ज्ञानेनैव विना योगो न सिध्यति कदा च न । जन्मा-
ऽन्तरैश्च बहुभिर्योगो ज्ञानेन लभ्यते ॥ ५२ ॥ ज्ञानं तु जन्मनैकेन योगादेव प्रजा-
यते । तस्माद्योगात्परतरो नाऽस्ति मार्गस्तु मोक्षदः ॥ ५३ ॥ प्रविचार्य चिरं ज्ञानं
मुक्तोऽहमिति मन्यते । किमसौ मननादेव मुक्तो भवति तत्क्षणात् ॥ ५४ ॥ पश्चा-
ज्जन्माऽन्तरशतैर्योगादेव विमुच्यते । न तथा भवतो योगाज्जन्ममृत्यू पुनःपुनः ॥५५॥
प्राऽणाऽपानसमायोगाच्चन्द्रसूर्यैकता भवेत् । सप्तधातुमयं देहमग्निना रञ्जयेद्ध्रुवम्
॥ ५६ ॥ व्याधयस्तस्य नश्यन्ति च्छेदखाताऽऽदिकास्तथा । तदसौ परमाऽऽकाशरूपो
देह्यवतिष्ठति ॥५७॥ किं पुनर्बहुनोक्तेन मरणं नाऽस्ति तस्य वै । देहीव दृश्यते लोके
दग्धकर्पूरवत्स्वयम् ॥ ५८ ॥ चित्तं प्राऽणेन सम्बद्धं सर्वजीवेषु सँस्थितम् । रज्ज्वा

यद्वत्सुसम्बद्धः पक्षी तद्वदिदं मनः ॥ ५९ ॥ नानाविधैर्विचारैस्तु न बाध्यं जायते मनः । तस्मात्तस्य जयोपायः प्राऽण एव हि नाऽन्यथा ॥ ६० ॥ तर्कैर्जल्पैश्शास्त्रजालैर्युक्तिभिर्मन्त्रभेषजैः । न वशो जायते प्राऽणस्सिद्धो ( ध्यु ) पायं विना विधे ॥६१॥ उपायं तमविज्ञाय योगमार्गे प्रवर्तते । खण्डज्ञानेन सहसा जायते क्लेशवत्तरः॥ ६२ ॥ यो जित्वा पवनं मोहाद्योगमिच्छति योगिनाम् । सोऽपक्कं कुम्भमारुह्य सागरं तर्त्तुमिच्छति ॥ ६३ ॥ यस्य प्राऽणो विलीनोऽन्तस्साधके जीविते सति । पिण्डो न पतितस्तस्य चित्तं दोषैः प्रबाधते ॥ ६४ ॥ शुद्धे चेतसि तस्यैव स्वाऽऽत्मज्ञानं प्रकाशते । तस्माज्ज्ञानं भवेद्योगाज्जन्मनैकेन पद्मज ॥ ६५ ॥ तस्माद्योगं तमेवाऽऽदौ साधको नित्यमभ्यसेत् । मुमुक्षुभिः प्राऽणजयः कर्तव्यो मोक्षहेतवे ॥ ६६ ॥ योगात्परतरं पुण्यं

योगात्परतरँ शिवम् । योगात्परतरँ सूक्ष्मं योगात्परतरं न हि ॥ ६७ ॥ योऽपानप्राऽण-योरैक्यं स्वरजोरेतसोस्तथा । सूर्याचन्द्रमसोर्योगो जीवाऽऽत्मपरमाऽऽत्मनोः ॥ ६८ ॥ एवं तु द्वन्द्वजालस्य संयोगो योग उच्यते । अथ योगशिखां वक्ष्ये सर्वज्ञानेषु चोत्त-माम् ॥ ६९ ॥ यदाऽनुध्यायते मन्त्रं गात्रकम्पोऽथ (न) जायते । आसनं पद्मकं बद्ध्वा यच्चाऽन्यदपि रोचते ॥ ७० ॥ नासाऽग्रे दृष्टिमारोप्य हस्तपादौ च संयतौ । मन-स्सर्वत्र सङ्गृह्य ॐकारं तत्र चिन्तयेत् ॥ ७१ ॥ ध्यायते सततं प्राऽऽज्ञो हृत्कृत्वा पर-मेश्वरम् । एकस्तम्भे नवद्वारे त्रिस्थूणे पञ्चदैवते ॥ ७२ ॥ ईदृशे तु शरीरे वा मति-मान्नोपलक्षयेत् । आदित्यमण्डलाऽऽकारँ रश्मिज्वालासमाकुलम् ॥७३॥ तस्य मध्यगतं वन्हि प्रज्वले ( ज्वालये ) दीपवर्तिवत् । दीपशिखा तु या मात्रा सा मात्रा परमेश्वरे

॥ ७४ ॥ भिन्दन्ति योगिनस्सूर्यं योगाऽभ्यासेन वै पुनः । द्वितीयँ सुषुम्नाद्वारं परि (र) शुभ्रँ समर्पितम् ॥ ७५ ॥ कपालसम्पुटं पीत्वा ततः पश्यति तत्पदम् । अथ न ध्यायते जन्तुरालस्याच्च प्रमादतः ॥ ७६ ॥ यदि त्रिकालमागच्छेत्स गच्छेत्पुण्यसम्पदम् । पुण्यमेतत्समासाद्य सङ्क्षिप्य कथितं मया ॥ ७७ ॥ लब्धयोगोऽथ बुध्येत प्रसन्नं परमेश्वरम् । जन्माऽन्तरसहस्रेषु यदा क्षीणं तु किल्बिषम् ॥ ७८ ॥ तदा पश्यति योगेन संसारोच्छेदनं महत् । अधुना सम्प्रवक्ष्यामि योगाऽभ्यासस्य लक्षणम् ॥ ७९ ॥ मरुज्जयो यस्य सिद्धस्सेवयेत्तं गुरुँ सदा । गुरुवक्त्रप्रसादेन कुर्यात्प्राऽणजयं बुधः ॥ ८० ॥ वितस्तिप्रमितं दैर्घ्यं चतुरङ्गुलविस्तृतम् । मृदुलं धवलं प्रोक्तं वेष्टनाऽम्बरलक्षणम् ॥ ८१ ॥ निरुध्य मारुतं गाढं शक्तिचालनयुक्तितः । अष्टधा कुण्डली भूतामृज्वीं

कुर्यात्तु कुण्डलीम् ॥ ८२ ॥ पायोराकुञ्चनं कुर्यात्कुण्डलीं चालयेत्तदा । मृत्युवक्त्रगत-स्याऽपि तस्य मृत्युभयं कुतः ॥ ८३ ॥ एतदेव परं गुह्यं कथितं तु मया तव । वज्रा-ऽऽसनगतो नित्यमूर्ध्वाऽऽकुञ्चनमभ्यसेत् ॥ ८४ ॥ वायुना ज्वलितो वन्हिः कुण्डली-मनिशं दहेत् । सन्तप्ता साऽग्निना जीवशक्तिस्त्रैलोक्यमोहिनी ॥ ८५ ॥ प्रविशेच्च-न्द्रतु(ख)ण्डे तु सुषुम्नावदनाऽन्तरे । वायुना वन्हिना साऽर्थं ब्रह्मग्रन्थिं भिनत्ति सा ॥ ८६ ॥ विष्णुग्रन्थिं ततो भित्त्वा रुद्रग्रन्थौ च तिष्ठति । ततस्तु कुम्भकैर्गाढं पूर-यित्वा पुनःपुनः ॥ ८७ ॥ अथाऽभ्यसेत्सूर्यभेदमुज्जायीं चाऽपि शीतलीम् । भस्त्रां च सहितो नाम स्याच्चतुष्टयकुम्भकः ॥ ८८ ॥ बन्धत्रयेण संयुक्तः केवलप्राऽऽप्तिकारकः। अथाऽस्य लक्षणं सम्यक्कथयामि समासतः ॥ ८९ ॥ एकाकिना समुपगम्य विविक्त-

देशं प्राऽगाऽऽदिरूपममृतं परमाऽर्थतत्त्वम्। लघ्वाशिना धृतिमता परिभावितव्यँ सँसार-रोगहरमौषधमद्वितीयम् ॥ ९० ॥ सूर्यनाड्या समाकृष्य वायुमभ्यासयोगिना। विधिवत्कुम्भकं कृत्वा रेचयेच्छीतरश्मिना ॥ ९१ ॥ उदरे बहुरोगघ्नं क्रिमिदोषं निहन्ति च। मुहुर्मुहुरिदं कार्यं सूर्यभेदमुदाहृतम् ॥ ९२ ॥ नाडीभ्यां वायुमाकृष्य कुण्डल्याः पार्श्वयोः क्षिपेत्। धारयेदुदरे पश्चाद्रेचयेदिडया सुधीः ॥ ९३ ॥ कण्ठे कफाऽऽदिदोषघ्नँ शरीराऽग्निविवर्धनम्। नाडीजलाऽपहं धातुगतदोषविनाशनम् ॥ ९४ ॥ गच्छतस्तिष्ठतः कार्यमुज्जाय्याऽऽख्यन्तु कुम्भकम्। मुखेन वायुँ सङ्गृह्य घ्राणरन्ध्रेण रेचयेत् ॥ ९५ ॥ शीतलीकरणं चेदं हन्ति पित्तं क्षुधां तृषम्। स्तनयोरथ भस्त्रेव लोहकारस्य वेगतः ॥ ९६ ॥ रेचयेत्पूरयेद्वायुमाश्रमं देहगं धिया। यथा श्रमो भवेद्देहे

तथा सूर्येण पूरयेत् ॥ ९७ ॥ कण्ठसङ्कोचनं कृत्वा पुनश्चन्द्रेण रेचयेत् । वातपित्त-श्लेष्महरं शरीराऽग्निविवर्धनम् ॥ ९८ ॥ कुण्डलीबोधकं वक्रदोषघ्नं शुभदं सुखम् । ब्रह्मनाडीमुखाऽन्तःस्थकफाऽऽद्यर्गलनाशनम् ॥ ९९ ॥ सम्यग्बन्धसमुद्भूतं ग्रन्थित्रय-विभेदकम् । विशेषेणैव कर्तव्यं भस्त्राऽऽख्यं कुम्भकं त्विदम् ॥ १०० ॥ बन्धत्रयमथे-दानीं प्रवक्ष्यामि यथाक्रमम् ॥ १०१ ॥ नित्यं कृतेन तेनाऽसौ वायोर्जयमवाऽऽप्नु-यात् ॥ १०२ ॥ चतुर्णामपि भेदानां कुम्भके समुपस्थिते । बन्धत्रयमिदं कार्यं वक्ष्य-माणं मया हि तत् ॥ १०३ ॥ प्रथमो मूलबन्धस्तु द्वितीयोड्डीयनाऽभिधः । जाल-न्धरस्तृतीयस्तु लक्षणं कथयाम्यहम् ॥ १०४ ॥ गुदं पाष्ण्या तु सम्पीड्य पायुमा-कुञ्चयेद्बलात् । वारंवारं यथा चोर्ध्वं समायाति समीरणः ॥ १०५ ॥ प्राऽणाऽपानौ

नादबिन्दू मूलबन्धेन चैकताम् । गत्वा योगस्य सँसिद्धिं यच्छतो नाऽत्र सँशयः ॥ १०६ ॥ कुम्भकाऽन्ते रेचकाऽऽदौ कर्तव्यस्तूड्डियानकः । बन्धो येन सुषुम्नायां प्राऽण स्तूड्डीयते यतः ॥ १०७ ॥ तस्मादुड्डीयनाऽऽख्योऽयं योगिभिस्समुदाहृतः । उड्डियानं तु सहजं गुरुणा कथितँ सदा ॥ १०८ ॥ अभ्यसेत्तदतन्द्रस्तु वृद्धोऽपि तरुणो भवेत् । नाभेरूर्ध्वमधश्चाऽपि त्रा(ता)णं कुर्यात्प्रयत्नतः ॥१०९॥ षाण्मासमभ्यसेन्मृत्युं जयत्येव न सँशयः । पूरकाऽन्ते तु कर्तव्यो बन्धो जालन्धराऽभिधः ॥ ११० ॥ कण्ठसङ्कोच-रूपोऽसौ वायुमार्गनिरोधकः । कण्ठमाकुञ्च्य हृदये स्थापयेद्दृढमिच्छया ॥ १११ ॥ बन्धो जालन्धराऽऽख्योऽयममृताऽऽप्यायकारकः । अधस्तात्कुञ्चनेनाऽऽशु कण्ठसङ्कोचने कृते ॥ ११२ ॥ मध्ये पश्चिमतानेन स्यात्प्राऽणो ब्रह्मनाडिगः । वज्राऽऽसनस्थितो योगी

चालयित्वा तु कुण्डलीम् ॥ ११३ ॥ कुर्यादनन्तरं भस्त्रीं कुण्डलीमाशु बोधयेत् । भिद्यन्ते ग्रन्थयो वँशे (श) तप्तलोहशलाकया ॥ ११४ ॥ तथैव पृष्ठवँश (शे) स्स्याद् ग्रन्थिभेदस्तु वायुना । पिपीलिकायां लग्नायां कण्डूस्तत्र प्रवर्तते ॥ ११५ ॥ सुषुम्नायां तथाऽभ्यासात्सततं वायुना भवेत् । रुद्रग्रन्थिं ततो भित्त्वा ततो याति शिवाऽऽत्मकम् ॥ ११६ ॥ चन्द्रसूर्यौ समौ कृत्वा तयोर्योगः प्रवर्तते । गुणत्रयमतीतँ स्याद् ग्रन्थित्रयविभेदनात् ॥ ११७ ॥ शिवशक्तिसमायोगे जायते परमा स्थितिः । यथा करी करेणैव पानीयं प्रपिबेत्सदा ॥ ११८ ॥ सुषुम्नावज्रनालेन पवमानं ग्रसेत्तथा । वज्रदण्डसमुद्भूता मणयश्चैकविंशतिः ॥ ११९ ॥ सुषुम्नायाँ स्थितास्सर्वे सूत्रे मणिगणा इव । मोक्षमार्गे प्रतिष्ठानात्सुषुम्ना विश्वरूपिणी ॥ १२० ॥ यथैव निश्चितः

कालश्चन्द्रसूर्यनिबन्धनात् । आपूर्य कुम्भितो वायुर्बहिर्नो याति साधके ॥ १२१ ॥ पुनःपुनस्तद्वदेव पश्चिमद्वारलक्षणम् । पूरितस्तु स तद्वारैरीषत्कुम्भकतां गतः ॥१२२॥ प्रविशेत्सर्वगात्रेषु वायुः पश्चिममार्गतः । रेचितः क्षीणतां याति पूरितः पोषयेत्ततः ॥ १२३ ॥ यत्रैव जातँ सकलेवरं मनस्तत्रैव लीनं कुरुते स योगात् । स एव मुक्तो निरहङ्कृतिस्सुखी मूढा न जानन्ति हि पिण्डपातिनः ॥ १२४ ॥ चित्तं विनष्टं यदि भासितँ स्याचत्र प्रतीतो मरुतोऽपि नाशः । न चेद्यदि स्यान्न तु तस्य शास्त्रं नाऽऽत्म-प्रतीतिर्न गुरुर्न मोक्षः ॥ १२५ ॥ जम्बुको ( जलूका ) रुधिरं यद्वद्बलादाकृष्यति स्वयम् । ब्रह्मनाडी तथा धातून्सन्तताऽभ्यासयोगतः ॥ १२६ ॥ अनेनाऽभ्यासयो-गेन नित्यमासनबन्धतः । चित्तं विलीनतामेति बिन्दुर्नो यात्यत्रस्तथा ॥ १२७ ॥

रेचकं पूरकं मुत्का वायुना स्थीयते स्थिरम् । नाना नादाः प्रवर्तन्ते सँस्रवेच्चन्द्रमण्डलम् ॥ १२८ ॥ नश्यन्ति क्षुत्पिपासाऽऽद्यास्सर्वदोषास्ततस्स(स्त)दा । स्वरूपे सच्चिदानन्दे स्थितिमाप्नोति केवलम् ॥ १२९ ॥ कथितं तु तव प्रीत्या ह्येतदभ्यासलक्षणम् । मन्त्रो लयो हठो राजयोगोऽन्तर्भूमिकाः क्रमात् ॥ १३० ॥ एक एव चतुर्धाऽयं महायोगोऽभिधीयते । हकारेण बहिर्याति सकारेण विशेत्पुनः ॥ १३१ ॥ हँसहँसेति मन्त्रोऽयँ सर्वैर्जीवैश्च जप्यते । गुरुवाक्यात्सुषुम्नायां विपरीतो भवेज्जपः॥१३२॥ सोऽहँसोऽहमिति प्रोक्तो मन्त्रयोगस्स उच्यते । प्रतीतिर्मन्त्रयोगाच्च जायते पश्चिमे पथि ॥ १३३ ॥ हकारेण तु सूर्यस्स्यात्सकारेणेन्दुरुच्यते । सूर्याचन्द्रमसोरैक्यँ हठ इत्यभिधीयते ॥ १३४ ॥ हठेन ग्रस्यते जाड्यँ सर्वदोषसमुद्भवम् । क्षेत्रज्ञः पर-

माऽऽत्मा च तयोरैक्यं यदा भवेत् ॥ १३५ ॥ तदैक्ये साधिते ब्रह्मञ्चित्तं याति विलीनताम् । पवनस्स्थैर्यमायाति लययोगोदये सति ॥ १३६ ॥ लयात्सम्प्राऽऽप्यते सौख्यँ स्वाऽऽत्माऽऽनन्दं परं पदम् । योनिमध्ये महाक्षेत्रे जपाबन्धूकसन्निभम् ॥१३७॥ रजो वसति जन्तूनां देवितत्त्वँ समा ( हि ) वृतम् । रजसो रेतसो योगाद्राजयोग इति स्मृतः ॥ १३८ ॥ अणिमाऽऽदिपदं प्राऽऽप्य राजते राजयोगतः । प्राऽणा-ऽपानसमायोगो ज्ञेयं योगचतुष्टयम् ॥ १३९ ॥ सङ्क्षेपात्कथितं ब्रह्मन्नाऽन्यथा शिवभाषितम् । क्रमेण प्राऽऽप्यते(ऽ)प्राऽऽप्यमभ्यासादेव नाऽन्यथा ॥ १४० ॥ एकेनैव शरीरेण योगाऽभ्यासाच्छनैश्शनैः। चिरात्सम्प्राऽऽप्यते मुक्तिर्मर्कटक्रम एव सः ॥१४१॥ योगसिद्धिं विना देहः प्रमादाद्यदि नश्यति । पूर्ववासनया युक्तश्शरीरं चाऽन्यथा-

ऽऽ( दा ) मुयात् ॥ १४२ ॥ ततः पुण्यवशात्सिद्धो गुरुणा सह सङ्गतः । पश्चिम-द्वारमार्गेण जायते त्वरितं फलम् ॥ १४३ ॥ पूर्वजन्मकृताऽभ्यासात्सत्त्वरं फलमश्नुते । एतदेव हि विज्ञेयं तत्काकमतमुच्यते ॥ १४४ ॥ नाऽस्ति काकमतादन्यदभ्यासाऽऽख्य-मतः परम् । तेनैव प्राऽऽप्यते मुक्तिर्नोऽन्यथा शिवभाषितम् ॥ १४५ ॥ हठयोगक्रमा-त्काष्ठांसहजीवलयाऽऽदिकम् । नाऽकृतं मोक्षमार्गँ स्यात्प्रसिद्धं पश्चिमं विना ॥ १४६ ॥ आदौ रोगाः प्रणश्यन्ति पश्चाज्जाड्यँ शरीरजम् । ततस्समरसो भूत्वा चन्द्रो वर्षत्यनारतम् ॥ १४७ ॥ धातूँश्च सङ्ग्रहेद्वह्निः पवनेन समन्ततः । नाना नादाः प्रवर्तन्ते मार्दवँ स्यात्कलेवरम् ॥१४८॥ जित्वा वृष्ट्यादिकं जाड्यं खेचरस्स भवेन्नरः । सर्वज्ञोऽसौ भवेत्कामरूपः पवनवेगवान् ॥ १४९ ॥ क्रीडते त्रिषु लोकेषु जायन्ते

सिद्धयोऽखिलाः । कर्पूरे लीयमाने किं काठिन्यं तत्र विद्यते ॥ १५० ॥ अहङ्कारक्षये तद्वद्देहे कठिनता कुतः । सर्वकर्ता च योगीन्द्रस्स्वतन्त्रोऽनन्तरूपवान् ॥ १५१ ॥ जीवन्मुक्तो महायोगी जायते नाऽत्र सँशयः । द्विविधास्सिद्धयो लोके कल्पिताऽकल्पितास्तथा ॥ १५२ ॥ रसौषधिक्रियाजालमन्त्राऽभ्यासाऽऽदिसाधनात् । सिध्यन्ति सिद्धयो यास्तु कल्पितास्ताः प्रकीर्तिताः ॥ १५३ ॥ अनित्या अल्पवीर्यास्तास्सिद्धयस्साधनोद्भवाः । साधनेन विनाऽप्येवं जायन्ते स्वत एव हि ॥ १५४ ॥ स्वाऽऽत्मयोगैकनिष्ठेषु स्वातन्त्र्यादीश्वरप्रियाः । प्रभूतास्सिद्धयो यास्ताः कल्पनारहितास्स्मृताः ॥ १५५ ॥ सिद्धा नित्या महावीर्या इच्छारूपास्स्वयोगजाः । चिरकालात्प्रजायन्ते वासनारहितेषु च ॥ १५६ ॥ तास्तु (सु) गोप्या महायोगा(ः)त्परमाऽऽत्मपदेऽव्यये । विना कार्यँ सदा गुप्तं योग-

सिद्धस्य लक्षणम् ॥ १५७ ॥ यथाऽऽकाशँ समुद्दिश्य गच्छद्भिः पथिकैः पथि । नाना तीर्थानि दृश्यन्ते नानामार्गास्तु सिद्धयः ॥ १५८ ॥ स्वयमेव प्रजायन्ते लाभा-ऽलाभविवर्जिते । योगमार्गे तथैवेदँ ( तते चेदं ) सिद्धिजालं प्रवर्त्तते ॥ १५९ ॥ परी-क्षकैस्स्वर्णकारैर्हेम सम्प्रोच्यते यथा । सिद्धिभिर्लक्षयेत्सिद्धं जीवन्मुक्तं तथैव च ॥१६०॥ अलौकिकगुणस्तस्य कदाचिद्दृश्यते ध्रुवम् । सिद्धिभिः परिहीनं तु नरं बद्धं तु लक्षयेत् ॥ १६१ ॥ अजराऽमरपिण्डो यो जीवन्मुक्तस्स एव हि । पशुकुक्कुटकीटाऽऽद्या मृतिँ सम्प्राऽऽप्नुवन्ति वै ॥ १६२ ॥ तेषां किं पिण्डपातेन मुक्तिर्भवति पद्मज । न बहिः प्राऽण आयाति पिण्डस्य पतनं कुतः ॥ १६३ ॥ पिण्डपातेन या मुक्तिस्सा मुक्तिर्न तु हन्यते । देहे ब्रह्मत्वमायाते जलानाँ सैन्धवं यथा ॥ १६४ ॥ अनन्यतां यदा याति

तदा मुक्तस्स उच्यते । विमतानि शरीराणि इन्द्रियाणि तथैव च ॥ १६५ ॥ ब्रह्म देहत्वमापन्नं वारि बुद्बुदतामिव । दशद्वारपुरं देहं दशनाडिमहापथम् ॥ १६६ ॥ दशभिर्वायुभिर्व्याप्तं दशेन्द्रियपरिच्छदम् । षडाधाराऽपवरकं षडन्वयमहावनम् ॥ १६७ ॥ चतुष्पीठसमाकीर्णं चतुराम्नायदीपकम् । बिन्दुनादमहालिङ्गं शिवशक्तिनिकेतनम् ॥ १६८ ॥ देहँ शिवाऽऽलयँ प्रोक्तँ सिद्धिदँ सर्वदेहिनाम् । गुदमेढ्राऽन्तरालस्थं मूलाऽऽधारं त्रिकोणकम् ॥ १६९ ॥ शिवस्य जीवरूपस्य स्थानं तद्धि प्रचक्षते । यत्र कुण्डलिनी नाम परा शक्तिः प्रतिष्ठिता ॥ १७० ॥ यस्मादुत्पद्यते वायुर्यस्माद्वन्हिः प्रवर्तते । यस्मादुत्पद्यते बिन्दुर्यस्मान्नादः प्रवर्तते ॥ १७१ ॥ यस्मादुत्पद्यते हँसो यस्मादुत्पद्यते मनः । तदेतत्कामरूपाऽऽख्यं पीठं कामफलप्रदम् ॥ १७२ ॥ स्वाऽधि-

ष्ठाना ऽऽह्वयं चक्रं लिङ्गमूले षडश्रके । नाभिदेशे स्थितं चक्रं दशाऽरं मणिपूरकम् ॥ १७३ ॥ द्वादशाऽरं महाचक्रँ हृदये चाऽप्यनाहतम् । तदेतत्पूर्णगिर्याख्यं पीठं कमलसम्भव ॥ १७४ ॥ कण्ठकूपे(टे) विशुद्ध्याख्यं यच्चक्रँ षोडशाऽश्रकम् । पीठं जालन्धरं नाम तिष्ठत्यत्र सुरेश्वर ॥ १७५ ॥ आज्ञा नाम भ्रुवोर्मध्ये द्विदलं चक्रमुत्तमम् । उड्याना ऽऽख्यं महापीठमुपरिष्टात्प्रतिष्ठितम् ॥ १७६ ॥ चतुरश्रं धरण्यादौ ब्रह्मा तत्राऽधिदेवता । अर्धचन्द्रा ऽऽकृति जलं विष्णुस्तस्याऽधिदेवता ॥ १७७ ॥ त्रिकोणमण्डलं वन्ही रुद्रस्तस्याऽधिदेवता । वायोर्बिम्बं तु षट्कोणमीश्वरोऽस्याऽधिदेवता ॥१७८॥ आकाशमण्डलं वृत्तं देवताऽस्य सदाशिवः । नादरूपं भ्रुवोर्मध्ये मनसो मण्डलं विदुः ॥१७९॥ इति प्रथमोऽध्यायः॥ पुनर्योगस्य माहात्म्यँ श्रोतुमिच्छामि शङ्कर। यस्य

विज्ञानमात्रेण खेचरीसमतां व्रजेत् ॥ १ ॥ शृणु ब्रह्मन् प्रवक्ष्यामि गोपनीयं प्रयत्नतः । द्वादशाऽब्दन्तु शुश्रूषां यः कुर्यादप्रमादतः ॥२॥ तस्मै वक्ता (वाच्यं) यथातथ्यं दान्ताय ब्रह्मचारिणे । पाण्डित्यादर्थलोभाद्वा प्रमादाद्वा प्रयच्छति ॥ ३ ॥ तेनाऽधीतँ श्रुतं तेन तेन सर्वमनुष्ठितम् । मूलमन्त्रं विजानाति यो विद्वान् गुरुदर्शितम् ॥ ४ ॥ शिवशक्तिमयं मन्त्रं मूलाऽऽधारात्समुत्थितम् । तस्य मन्त्रस्य वै ब्रह्मञ् च्छ्रोता वक्ता च दुर्लभः ॥५॥ एतत्पीठमिति प्रोक्तं नादलिङ्गं म ( चि ) दात्मकम् । तस्य विज्ञानमात्रेण जीवन्मुक्तो भवेज्जनः ॥ ६ ॥ अणिमाऽऽदिकमैश्वर्यमचिरादेव जायते । मननात्प्राऽणनाच्चैव मद्रू-पस्याऽवबोधनात् ॥ ७ ॥ मन्त्रमित्युच्यते ब्रह्मन् मदधिष्ठानतोऽपि वा । मूलत्वात्सर्व-मन्त्राणां मूलाऽऽधारसमुद्भवात् ॥ ८ ॥ मूलस्वरूपलिङ्गत्वान्मूलमन्त्र इति स्मृतः ।

623

सूक्ष्मत्वात्कारणत्वाच्च लयनाद्गमनादपि ॥ ९ ॥ लक्षणात्परमेशस्य लिङ्गमित्यभिधीयते । सन्निधानात्समस्तेषु जन्तुष्वपि च सन्ततम् ॥ १० ॥ सूचकत्वाच्च रूपस्य सूत्रमित्यभिधीयते । महामाया महालक्ष्मीर्महादेवी सरस्वती ॥ ११ ॥ आधारशक्तिरव्यक्ता यया विश्वं प्रवर्तते । सूक्ष्माऽऽभा बिन्दुरूपेण पीठरूपेण वर्तते ॥ १२ ॥ बिन्दुपीठं विनिर्भिद्य नादलिङ्गमुपस्थितम् । प्राऽणेनोच्चार्यते ब्रह्मन् षण्मुखी ( खे ) करणेन ( षु ) च ॥ १३ ॥ गुरूपदेशमार्गेण सहसैव प्रकाशते । स्थूलं सूक्ष्मं परं चेति त्रिविधं ब्रह्मणो वपुः ॥ १४ ॥ पञ्चब्रह्ममयँ रूपँ स्थूलं वैराजमुच्यते । हिरण्यगर्भं सूक्ष्मं तु नादं बीजत्रयाऽऽत्मकम् ॥ १५ ॥ परं ब्रह्म परँ सत्यँ सच्चिदानन्दलक्षणम् । अप्रमेयमनिर्देश्यमवाङ्मनसगोचरम् ॥ १६ ॥ शुद्धँ सूक्ष्मं निराकारं निर्विकारं निरञ्जनम् । अनन्तमपरिच्छेद्यमनूपम-

मनामयम् ॥ १७ ॥ आत्ममन्त्रसदाऽभ्यासात्परतत्त्वं प्रकाशते । तदभिव्यक्तिचिह्नानि सिद्धिद्वाराणि मे शृणु ॥ १८ ॥ दीपज्वालेन्दुखद्योतविद्युन्नक्षत्रभास्वराः । दृश्यन्ते सूक्ष्मरूपेण सदा युक्तस्य योगिनः ॥ १९ ॥ अणिमाऽऽदिकमैश्वर्यमचिरात्तस्य जायते । नाऽस्ति नादात्परो मन्त्रो न देवस्स्वाऽऽत्मनः परः ॥ २० ॥ नाऽनुसन्धेः परा पूजा न हि तृप्तेः परँ सुखम् । गोपनीयं प्रयत्नेन सर्वदा सिद्धिमिच्छता ॥ २१ ॥ मद्भक्त एतद्विज्ञाय कृतकृत्यस्सुखी भवेत् । यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ॥ २२ ॥ तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः । इति ॥ इति द्वितीयोऽध्यायः ॥ यन्नमस्यं चिदाख्यातं यत्सिद्धीनां च कारणम् । येन विज्ञानमात्रेण जन्मबन्धात्प्रमुच्यते ॥ १ ॥ अक्षरं परमो नादश्शब्दब्रह्मेति कथ्यते । मूलाऽऽधारगता शक्तिस्स्वा(ऽऽ)धारा बिन्दुरू-

पिणी ॥ २ ॥ तस्यामुत्पद्यते नादस्सूक्ष्मबीजादिवाऽङ्कुरः । तां पश्यन्तीं विदुर्विश्वं यया पश्यन्ति योगिनः ॥ ३ ॥ हृदये व्यज्यते घोषो गर्जत्पर्जन्यसन्निभः । तत्र स्थिता सुरेशान मध्यमेत्यभिधीयते ॥ ४ ॥ प्राऽणेन च स्वराऽऽख्येन प्रथिता वैखरी पुनः । शाखापल्लवरूपेण ताल्वादिस्थानघट्टनात् ॥ ५ ॥ अकाराऽऽदिक्षकाराऽन्तान्यक्षराणि समीरयेत् । अक्षरेभ्यः पदानि स्युः पदेभ्यो वाक्यसम्भवः ॥ ६ ॥ सर्वे वाक्याऽऽत्मका मन्त्रा वेदशास्त्राणि कृत्स्नशः । पुराणानि च काव्यानि भाषाश्च विविधा अपि ॥७॥ सप्त स्वराश्च गाथाश्च सर्वे नादसमुद्भवाः । एषा सरस्वती देवी सर्वभूतगुहाऽऽश्रया ॥ ८ ॥ वायुना वह्नियुक्तेन प्रेर्यमाणा शनैश्शनैः । तद्विवर्ण (र्ते) पदैर्वाक्यैरित्येवं वर्तते सदा ॥ ९ ॥ य इमां वैखरीँ शक्तिं योगी स्वाऽऽत्मनि पश्यति । स वाक्सिद्धिमवा-

ऽऽप्नोति सरस्वत्याः प्रसादतः ॥ १० ॥ वेदशास्त्रपुराणानाँ स्वयं कर्ता भविष्यति। यत्र बिन्दुश्च नादश्च सोमसूर्याऽग्निवायवः ॥ ११ ॥ इन्द्रियाणि च सर्वाणि लयं गच्छन्ति सुव्रत । वायवो यत्र लीयन्ते मनो यत्र विलीयते ॥ १२ ॥ यं लब्ध्वा चाऽपरं लाभं मन्यते नाऽधिकं ततः । यस्मिँस्थितो न दुःखेन गुरुणापि विचाल्यते ॥ १३ ॥ यत्रो-परमते चित्तं निरुद्धं योगसेवया । यत्र चैवाऽऽत्मनाऽऽत्मानं पश्यन्नात्मनि तुष्यति ॥ १४ ॥ सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् । एतत्क्षराऽक्षराऽतीतमनक्षरमिती-र्यते ॥ १५ ॥ क्षरस्सर्वाणि भूतानि सूत्राऽऽत्माऽक्षर उच्यते ॥ अक्षरं परमं ब्रह्म निर्वि-शेषं निरञ्जनम् ॥ १६ ॥ अलक्षणमलक्ष्यं तदप्रतर्क्यमनूपमम् । अपारपारमच्छेद्यमचि-न्त्यमतिनिर्मलम् ॥ १७ ॥ आधारँ सर्वभूतानामनाधारमनामयम् । अप्रमाणमनि-

र्देश्यमप्रमेयमतीन्द्रियम् ॥ १८ ॥ अस्थूलमनणु ह्रस्वमदीर्घमजमव्ययम् । अशब्दस्पर्श-
रूपं तदचक्षुश्श्रोत्रनामकम् ॥ १९ ॥ सर्वज्ञँ सर्वगँ शान्तँ सर्वेषां हृदये स्थितम् ।
सुसंवेद्यं गुरुमतात्सुदुर्बोधमचेतसाम् ॥ २० ॥ निष्कलं निर्गुणँ शान्तं निर्विकारं निरा-
श्रयम् । निर्लेपकं निरापायं कूटस्थमचलं ध्रुवम् ॥ २१ ॥ ज्योतिषामपि तज्ज्योति-
स्तमःपारे प्रतिष्ठितम् । भावाऽभावविनिर्मुक्तं भावनामात्रगोचरम् ॥ २२ ॥ भक्तिगम्यं
परं तत्त्वमन्तर्लीनेन चेतसा । भावनामात्रमेवाऽत्र कारणं पद्मसम्भव ॥२३॥ यथा देहा-
ऽऽन्तरप्राऽऽप्तेः कारणं भावना नृणाम् । विषयं ध्यायतः पुँसो विषये रमते मनः ॥२४॥
मामनुस्मरतश्चित्तं मय्येवाऽत्र विलीयते । सर्वज्ञत्वँ परेशत्वं सर्वसम्पूर्णशक्तिता ॥२५॥
अनन्तशक्तिमत्त्वं च मदनुस्मरणाद्भवेत् । इति ॥ इति तृतीयोऽध्यायः ॥ चैतन्यस्यै-

करूपत्वाद्भेदो युक्तो न कर्हिं चित् । जीवत्वं च तथा ज्ञेयँ रज्वाँ सर्पग्रहो यथा ॥ १॥ रज्वज्ञानात्क्षणेनैव यद्वद्रज्जुर्हि सर्पिणी । भाति तद्वच्चितिस्साक्षाद्विश्वाकारेण केवला ॥ २ ॥ उपाऽऽदानं प्रपञ्चस्य ब्रह्मणोऽन्यन्न विद्यते । तस्मात्सर्वप्रपञ्चोऽयं ब्रह्मैवाऽस्ति न चेतरत् ॥ ३ ॥ व्याप्यव्यापकता मिथ्या सर्वमात्मेति शासनात् । इति ज्ञाते परे तत्त्वे भेदस्याऽवसरः कुतः ॥ ४ ॥ ब्रह्मणस्सर्वभूतानि जायन्ते परमाऽऽत्मनः । तस्मादेतानि ब्रह्मैव भवन्तीति विचिन्तय ॥ ५ ॥ ब्रह्मैव सर्वनामानि रूपाणि विविधानि च। कर्माण्यपि समग्राणि बिभर्तीति ( भासन्तीवेति ) विभावय ॥ ६ ॥ सुवर्णाज्जायमानस्य सुवर्णत्वं च शाश्वतम् । ब्रह्मणो जायमानस्य ब्रह्मत्वं च तथा भवेत् ॥ ७ ॥ स्वल्पमप्यन्तरं कृत्वा जीवाऽऽत्मपरमाऽऽत्मनोः । यस्तिष्ठति वि ( स ) मूढाऽऽत्मा भयं

तस्याऽपि भाषितम् ॥ ८ ॥ यदज्ञानाद्भवेद्द्वैतमितरत्तत्प्रपश्यति । आत्मत्वेन तदा सर्वं नेतरत्तत्र चाऽण्वपि ॥ अनुभूतोऽप्ययं लोको व्यवहारक्षमोऽपि सन् । असद्रूपो यथा स्वप्न उत्तरक्षणबाधितः ॥ १० ॥ स्वप्ने जागरितं नाऽस्ति जागरे स्वप्नता न हि । द्वयमेव लये नाऽस्ति लयोऽपि ह्यनयोर्न च ॥ ११ ॥ त्रयमेव भवेन्मिथ्या गुणत्रयविनिर्मितम् । अस्य द्रष्टा गुणाऽतीतो नित्यो ह्येष चिदात्मकः ॥ १२ ॥ यद्वन्मृदि घटभ्रान्तिश्शुक्तौ हि रजतस्थितिः । तद्वद्ब्रह्मणि जीवत्वं वीक्षमाणे विनश्यति ॥ १३ ॥ यथा मृदि घटो नाम कनके कुण्डलाऽभिधा । शुक्तौ हि रजतख्यातिर्जीवशब्दस्तथा परे ॥ १४ ॥ यथैव व्योम्नि नीलत्वं यथा नीरं मरुस्थले । पुरुषत्वं यथा स्थाणौ तद्वद्विश्वं चिदात्मनि ॥ १५ ॥ यथैव शून्यो वेतालो गन्धर्वाणां पुरं यथा ।

यथाऽऽकाशे द्विचन्द्रत्वं तद्वत्सत्ये जगत्स्थितिः ॥ १६ ॥ यथा तरङ्गकल्लोलैर्जल-मेव स्फुरत्यलम् । घटनाम्ना यथा पृथ्वी पटनाम्ना हि तन्तवः ॥ १७ ॥ जगन्नाम्ना चिदाभाति सर्वं ब्रह्मैव केवलम् । यथा वन्ध्यासुतो नाऽस्ति यथा नाऽस्ति मरौ जलम् ॥ १८ ॥ यथा नाऽस्ति नभोवृक्षस्तथा नाऽस्ति जगत्स्थितिः । गृह्यमाणे घटे यद्वन्मृत्तिका भाति वै बलात् ॥ १९ ॥ वीक्ष्यमाणे प्रपञ्चे तु ब्रह्मैवाऽऽभाति भासुरम् । सदैवाऽऽत्मा विशुद्धोऽस्मि ह्यशुद्धो भाति वै सदा ॥ २० ॥ यथैव द्विविधा रज्जुर्ज्ञानिनोऽज्ञानिनोऽनिशम् । यथैव मृन्मयः कुम्भस्तद्वद्देहोऽपि चिन्मयः ॥ २१ ॥ आत्माऽनात्मविवेकोऽयं मुधैव क्रियते बुधैः । सर्पत्वेन यथा रज्जू रजत-त्वेन शुक्तिका ॥ २२ ॥ विनिर्णीता विमूढेन देहत्वेन तथाऽऽत्मता । घटत्वेन यथा

पृथ्वी जलत्वेन मरीचिका ॥ २३ ॥ गृहत्वेन हि काष्ठानि खड्गत्वेनैव लोहता ।
तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ २४ ॥ इति ॥ इति चतुर्थोऽध्यायः ॥ पुन-
र्योगं प्रवक्ष्यामि गुह्यं ब्रह्मस्वरूपकम् । समाहितमना भूत्वा शृणु ब्रह्मन्यथाक्रमम् ॥१॥
दशद्वारपुरं देहं दशनाडिमहापथम् । दशभिर्वायुभिर्व्याप्तं दशेन्द्रियपरिच्छदम् ॥ २ ॥
षडाधाराऽपवरकँ षडन्वयमहावनम् । चतुष्पीठसमाकीर्णं चतुराम्नायदीपकम् ॥ ३ ॥
बिन्दुनादमहालिङ्गविष्णुलक्ष्मीनिकेतनम् । देहं विष्णवालयं प्रोक्तं सिद्धिदँ सर्वदेहि-
नाम् ॥ ४ ॥ गुदमेढ्राऽन्तरालस्थं मूलाऽऽधारं त्रिकोणकम् । शिवस्य जीवरूपस्य
स्थानं तद्धि प्रचक्षते ॥ ५ ॥ यत्र कुण्डलिनी नाम परा शक्तिः प्रतिष्ठिता । यस्मा-
दुत्पद्यते वायुर्यस्माद्वह्निः प्रवर्तते ॥ ६ ॥ यस्मादुत्पद्यते बिन्दु(हँसो)र्यस्मान्नादः प्रव-

र्तते । यस्मादुत्पद्यते ( यस्मिन्विलीयते ) हंसो यस्मादुत्पद्यते मनः ॥ ७ ॥ तदेतत्कामरूपाऽऽख्यं पीठं कामफलप्रदम् । स्वाऽधिष्ठानाऽऽह्वयं चक्रं लिङ्गमूले षडश्रकम् ॥ ८ ॥ नाभिदेशे स्थितं चक्रं दशाऽश्रं मणिपूरकम् । द्वादशाऽरं महाचक्रँ हृदये चाऽप्यनाहतम् ॥ ९ ॥ तदेतत्पूर्णगिर्याख्यं पीठं कमलसम्भव । कण्ठकूपे ( टे ) विशुद्धाऽऽ( द्धया ) ख्यं यच्चक्रँ षोडशाऽश्रकम् ॥ १० ॥ पीठं जालन्धरं नाम तिष्ठत्यत्र चतुर्मुख । आज्ञा नाम भ्रुवोर्मध्ये द्विदलं चक्रमुत्तमम् ॥ ११ ॥ उड्यानाऽऽख्यं महापीठमुपरिष्टात्प्रतिष्ठितम् । स्थानान्येतानि देहेऽस्मिञ्छक्तिरूपं प्रकाशते ॥ १२ ॥ चतुरश्रधरण्यादौ ब्रह्मा तत्राऽधिदेवता । अर्धचन्द्राऽऽकृति जलं विष्णुस्तस्याऽधिदेवता ॥ १३ ॥ त्रिकोणमण्डलं वन्ही रुद्रस्तस्याऽधिदेवता । वायोर्बिम्बं तु षट्-

कोणँ सङ्कर्षोऽत्राऽधिदेवता ॥ १४ ॥ आकाशमण्डलं वृत्तं श्रीमन्नाराऽयणोऽत्रा (पर-वस्त्व) ऽधिदेवता। नादरूपं भ्रुवोर्मध्ये मनसो मण्डलं विदुः॥ १५ ॥ शाम्भवस्था-नमेतत्ते वर्णितं पद्मसम्भव। अतः परं प्रवक्ष्यामि नाडीचक्रस्य निर्णयम्॥ १६ ॥ मूलाऽऽधारत्रिकोणस्था सुषुम्ना द्वादशाऽङ्गुला (न्तगा)। मूलाऽर्धच्छिन्नवँशाऽऽभा व्रह्मनाडीति सा स्मृता ॥ १७ ॥ इडा च पिङ्गला चैव तस्याः पार्श्वद्वये गते। विलम्बिन्यामनुस्यूते नासिकाऽन्तमुपाऽऽगते ॥ १८ ॥ इडायाँ हेमरूपेण वायुर्हेमेन गच्छति। पिङ्गलायां तु सूर्याऽऽत्मा याति दक्षिणपार्श्वतः॥ १९ ॥ विलम्बिनीति या नाडी व्यक्ता नाभौ प्रतिष्ठिता। तत्र नाड्यस्समुत्पन्नास्तिर्यगूर्ध्वमधोमुखाः॥ २० ॥ तन्नाभिचक्रमित्युक्तं कुक्कुटाऽण्डमिव स्थितम्। गान्धारी हस्तिजिह्वा च तस्मान्नेत्र-

द्वयं गते ॥ २१ ॥ पूषा चाऽलम्बुसा चैव श्रोत्रद्वयमुपाऽऽगते । शूरा नाम महा-
नाडी तस्माद् भ्रूमध्यमाश्रिता ॥२२॥ विश्वोदरी तु या नाडी सा भुङ्क्तेऽन्नं चतुर्विधम् ।
सरस्वती तु या नाडी सा जिह्वाऽन्तं प्रसर्पति ॥ २३ ॥ राकाऽऽह्वया तु या नाडी
पीत्वा तु सलिलं क्षणात् । क्षुतमुत्पादयेद् घ्राणे श्लेष्माणं सञ्चिनोति च ॥ २४ ॥
कण्ठकूपोद्भवा नाडी शङ्खिन्याख्या त्वधोमुखी । अन्नसारँ समादाय मूर्ध्नि सञ्चिनुते
सदा ॥ २५ ॥ नाभेरधोगतास्तिस्रो नाडयस्स्युरधोमुखाः । मलं त्यजेत्कूहूर्नाडी मूत्रं
मुञ्चति वारुणी ॥२६॥ चित्राऽऽख्या सीविनी नाडी शुक्ल (क्र) मोचनकारिणी । नाडीचक्र-
मिति प्रोक्तं बिन्दुरूपमतश्शृणु ॥ २७ ॥ स्थूलं सूक्ष्मं परं चेति त्रिविधं ब्रह्मणो वपुः ।
स्थूलँ शुक्लाऽऽत्मकं बिन्दुस्सूक्ष्मं पञ्चाऽग्निरूपकम् ॥ २८ ॥ सोमाऽऽत्मकः परः प्रोक्त-

स्सदा साक्षी सदाऽच्युतः । पातालानामधोभागे कालाऽग्निर्यः प्रतिष्ठितः ॥ २९ ॥
समूलाऽग्निश्शरीरेऽग्नि ( स्मिन् ) र्यस्मान्नादः प्रजायते । वडवाऽग्निश्शरीरस्थो ह्यस्थि-
मध्ये प्रवर्त्तते ॥ ३० ॥ काष्ठपाषाणयोर्वह्निर्ह्यस्थिमध्ये प्रवर्तते । काष्ठपाषाणजो वह्निः
पार्थिवो ग्रहणी ( ग्रहणं ) गतः ॥ ३१ ॥ अन्तरिक्षगतो वह्निर्वैद्युतस्स्वाऽन्तराऽऽत्मकः ।
नभस्थस्सूर्यरूपोऽग्निर्नाभिमण्डलमाश्रितः ॥ ३२ ॥ विषं वर्षति सूर्योऽसौ स्रवत्यमृत-
मुन्मुखः । तालुमूले स्थितश्चन्द्रस्सुधां वर्षत्यधोमुखः ॥ ३३ ॥ भ्रूमध्यानिलयो बिन्दु-
श्शुद्धस्फटिकसन्निभः । महाविष्णोश्च देवस्य तत्सूक्ष्मँ रूपमुच्यते ॥ ३४ ॥ एतत्पञ्चा-
ऽग्निरूपं यो भावयेद् बुद्धिमान् धिया । तेन भुक्तं च पीतं च हुतमेव न सँशयः ॥३५॥
सुखसँसेवितँ स्वप्नँ सुजीर्णमित (व) भोजनम्। शरीरशुद्धिं कृत्वाऽऽदौ सुखमासनमा-

स्थितः ॥ ३६ ॥ प्राऽणस्य शोधयेन्मार्गँ रेचपूरककुम्भकैः । गुदमाकुञ्चय यत्नेन मूल-
शक्तिं प्रपूजयेत् ॥ ३७ ॥ नाभौ लिङ्गस्य मध्ये तु उड्यानाऽऽख्यं च बन्धयेत् ।
उड्डीय याति तेनैव शक्तितोड्यानपीठकम् ॥ ३८ ॥ कण्ठँ सङ्कोचयेत्किं चिद्बन्धो
जालन्धरो ह्ययम् । बन्धयेत्खेचरीमुद्रां दृढचित्तस्समाहितः ॥ ३९ ॥ कपालविवरे
जिह्वा प्रविष्टा विपरीतगा । भ्रुवोरन्तर्गता दृष्टिर्मुद्रा भवति खेचरी ॥ ४० ॥ खेचर्या
मुद्रितं येन विवरं लम्बिकोर्ध्वतः । न पीयूषं पतत्यग्नौ न च वायुः प्रधावति ॥ ४१ ॥
न क्षुधा न तृषा निद्रा नैवाऽऽलस्यं प्रजायते । न च मृत्युर्भवेत्तस्य यो मुद्रां वेत्ति
खेचरीम् ॥ ४२ ॥ ततः पूर्वाऽपरे व्योम्नि द्वादशाऽन्तेऽच्युताऽऽत्मके । उड्यानपीठे
निर्द्वन्द्वे निरालम्बे निरञ्जने ॥ ४३ ॥ ततः पङ्कजमध्यस्थं चन्द्रमण्डलमध्यगम् ।

नाराऽयणमनुध्यायेत्स्रवन्तममृतँ सदा ॥ ४४ ॥ भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसँशयाः । क्षीयन्ते चाऽस्य कर्माणि तस्मिन्दृष्टे पराऽवरे ॥ ४५ ॥ अथ सिद्धिं प्रवक्ष्यामि सुखोपायँ सुरेश्वर । जितेन्द्रियाणाँ शान्तानां जितश्वासविचेतसाम् ॥ ४६ ॥ नादे मनोलयं ब्रह्मन् दूरश्रवणकारणम् । बिन्दौ मनोलयं कृत्वा दूरदर्शनमाप्नुयात् ॥ ४७ ॥ कालाऽऽत्मनि मनो लीनं त्रिकालज्ञानकारणम् । परकायमनोयोगः परकायप्रवेशकृत् ॥ ४८ ॥ अमृतं चिन्तयेन्मूर्ध्नि क्षुत्तृषाविषशान्तये । पृथिव्यां धारयेच्चित्तं पातालगमनं भवेत् ॥ ४९ ॥ सलिले धारयेच्चित्तं नाऽम्भसा परिभूयते । अग्नौ सन्धारयेच्चित्तमग्निना दह्यते न सः ॥ ५० ॥ वायौ मनोलयं कुर्यादाकाशगमनं भवेत् । आकाशे धारयेच्चित्तमणिमाऽऽदिकमाप्नुयात् ॥ ५१ ॥ विराड्रूपे मनो युञ्जन्महिमानम-

वाऽऽप्नुयात् । चतुर्मुखे मनो युञ्जञ्जगत्सृष्टिकरो भवेत् ॥ ५२ ॥ इन्द्ररूपिणमात्मानं भावयन्(मर्त्य)भोगवान् ( भवेत् ) । विष्णुरूपे महायोगी पालयेदखिलं जगत् ॥५३॥ रुद्ररूपे महायोगी(मनो युञ्जन्)सँहरत्येव तेजसा । नाराऽयणे मनो युञ्जन्नाराऽयणमयो भवेत् ॥५४॥ वासुदेवे मनो युञ्जन्तसर्वसिद्धिमवाऽऽप्नुयात् । यथा सङ्कल्पयेद्योगी योगयुक्तो जितेन्द्रियः ॥५५॥ तथा तत्तदवाऽऽप्नोति भाव एवाऽत्र कारणम् । गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवस्सदाऽच्युतः ॥ ५६ ॥ न गुरोरधिकः कश्चित्त्रिषु लोकेषु विद्यते । दिव्यज्ञानोपदेष्टारं देशिकं परमेश्वरम् ॥ ५७ ॥ पूजयेत्परया भक्त्या तस्य ज्ञानफलं भवेत् । यथा गुरुस्तथैवेशो यथैवेशस्तथा गुरुः ॥ ५८ ॥ पूजनीयो महाभक्त्या न भेदो विद्यतेऽनयोः । नाऽद्वैतवादं कुर्वीत गुरुणा सह कुत्र चित् ॥ ५९ ॥ अद्वैतं भावयेद्भक्त्या

गुरोर्देवस्य चाऽऽत्मनः । योगशिखा ( शीर्षं ) महागुह्यं यो जानाति महामतिः ॥६०॥ न तस्य किं चिदज्ञातं त्रिषु लोकेषु विद्यते । न पुण्यपापे नाऽस्वस्थो न दुःखं न पराजयः ॥ ६१ ॥ न चाऽस्ति पुनरावृत्तिरस्मिन्त्सँसारमण्डले । सिद्धौ चित्तं न कुर्वीत चञ्चलत्वेन चेतसः ॥ ६२ ॥ तथा विज्ञाततत्त्वोऽसौ मुक्त एव न सँशयः । इत्युपनिषत् ॥ इति पञ्चमोऽध्यायः ॥ उपाऽऽसनाप्रकारं मे ब्रूहि त्वं परमेश्वर । येन विज्ञानमात्रेण मुक्तो भवति सँसृतेः ॥ १ ॥ उपाऽऽसनाप्रकारं ते रहस्यँ श्रुतिसारकम् । हिरण्यगर्भ वक्ष्यामि श्रुत्वा सम्यगुपाऽऽसय ॥ २ ॥ सुषुम्नायै कुण्डलिन्यै सुधायै चन्द्रमण्डलात् । मनोन्मन्यै नमस्तुभ्यं महाशक्त्यै चिदात्मने ॥ ३ ॥ शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क-

मणे भवन्ति ॥ ४ ॥ एकोत्तरं नाडिशतं तासा मध्ये परा स्मृता । सुषुम्ना तु परे लीना विरजा ब्रह्मरूपिणी ॥ ५ ॥ इडा तिष्ठति वामेन पिङ्गला दक्षिणेन तु । तयोर्मध्ये परँ स्थानं यस्तद्वेद स वेदवित् ॥ ६ ॥ प्राऽणान्तसन्धारयेत्तस्मिन्नासाऽभ्यन्तरचारिणः । भूत्वा तत्राऽऽयतप्राऽणश्शनैरेव समभ्यसेत् ॥ ७ ॥ गुदस्य पृष्ठभागेऽस्मिन् वीणादण्डस्स देहभृत् । दीर्घाऽस्थि देहपर्यन्तं ब्रह्मनाडीति कथ्यते ॥ ८ ॥ तस्याऽन्ते सुषिरँ सूक्ष्मं ब्रह्मनाडीति सूरिभिः । इडापिङ्गलयोर्मध्ये सुषुम्ना सूर्यरूपिणी ॥ ९ ॥ सर्वं प्रतिष्ठितं तस्मिन्तसर्वगं विश्वतोमुखम् । तस्य मध्यगतास्सूर्यसोमाऽग्निपरमेश्वराः ॥ १० ॥ भूतलोका दिशः क्षेत्रास्समुद्राः पर्वताश्शिलाः । द्वीपाश्च निम्नगा वेदाश्शास्त्रविद्याकलाऽक्षराः ॥ ११ ॥ स्वरमन्त्रपुराणानि गुणाश्चैते च सर्वशः । बीजं

बीजाऽऽत्मकस्तेषां क्षेत्रज्ञः प्राऽणवायवः ॥ १२ ॥ सुषुम्नाऽन्तर्गतं विश्वं तस्मिन्त्सर्वं प्रतिष्ठितम् । नानानाडीप्रसवगँ सर्वभूताऽन्तराऽऽत्मनि ॥ १३ ॥ उर्ध्वमूलमधश्शाखं वायुमार्गेण सर्वगम् । द्विसप्ततिसहस्राणि नाड्यस्स्युर्वायुगोचराः ॥ १४ ॥ सर्वमार्गेण सुषिरास्तिर्यञ्चस्सुषिराऽऽत्मकाः । अधश्चोर्ध्वं च कुण्डल्यास्सर्वद्वारनिरोधनात् ॥ १५ ॥ वायुना सह जीवोर्ध्वज्ञाना ( गामी ) न्मोक्षमवाऽऽप्नुयात् । ज्ञात्वा सुषुम्नां तद्भेदं कृत्वा पा ( वा ) युं च मध्यगम् ॥ १६ ॥ कृत्वा तु चैन्दवस्थाने घ्राणरन्ध्रे निरोधयेत् । द्विसप्तति सहस्राणि नाडीद्वाराणि पञ्जरे ॥ १७ ॥ सुषुम्ना शाम्भवी शक्तिश्शेषास्त्वन्ये निरर्थकाः । हृल्लेखे ( खि ) परमाऽऽनन्दे तालुमूले व्यवस्थिते ॥ १८ ॥ अत ऊर्ध्वं निरोधे तु मध्यमं मध्यमध्यमम् । उच्चारयेत्परां शक्तिं ब्रह्मरन्ध्रनिवासि-

नीम् । यदि भ्रमरसृष्टिस्स्यात्सँसारभ्रमणं त्यजेत् ॥ १९ ॥ गमाऽगमस्थं गमनाऽऽदि-शून्यं चिद्रूपदीपं तिमिराऽन्धकारम् । पश्यामि ते सर्वजनाऽन्तरस्थं नमामि हँसं परमाऽऽत्मरूपम् ॥ २० ॥ अनाहतस्य शब्दस्य तस्य शब्दस्य यो ध्वनिः । ध्वनेरन्तर्गतं ज्योतिर्ज्योतिषोऽन्तर्गतं मनः ॥ २१ ॥ तन्मनो विलयं याति तद्विष्णोः परमं पदम् । केचिद्वदन्ति चाऽऽधारँ सुषुम्ना च सरस्वती ॥ २२ ॥ आधाराज्जायते विश्वं विश्वं तत्रैव लीयते । तस्मात्सर्वप्रयत्नेन गुरुपादँ समाश्रयेत् ॥ २३ ॥ आधारशक्तिनिद्रायां विश्वं भवति निद्रया । तस्याँ शक्तिप्रबोधेन त्रैलोक्यं प्रतिबुध्यते ॥ २४ ॥ आधारं यो विजानाति तमसः परमश्नुते । तस्य विज्ञानमात्रेण नरः पापैः प्रमुच्यते ॥ २५ ॥ आधारचक्रमहसा विद्युत्पुञ्जसमप्रभा । तदा मुक्तिर्न सन्देहो यदि तुष्टस्स्वयं गुरुः ॥२६॥ आधा-

रचक्रमहसा पुण्यपापे निकृन्तयेत् । आधारवातरोधेन लीयते गगनाऽन्तरे ॥ २७ ॥ आधारवातरोधेन शरीरं कम्पते यथा । आधारवातरोधेन योगी नृत्यति सर्वदा ॥ २८ ॥ आधारवातरोधेन विश्वं तत्रैव दृश्यते । सृष्टिराधारमाधारमाधारे सर्वदेवताः ॥ २९ ॥ आधारे सर्ववेदाश्च तस्मादाधारमाश्रयेत् । आधारे पश्चिमे भागे त्रिवेणीसङ्गमो भवेत् ॥ ३० ॥ तत्र स्नात्वा च पीत्वा च नरः पापात्प्रमुच्यते । आधारे पश्चिमं लिङ्गं कवाटं तत्र विद्यते ॥ ३१ ॥ तस्योद्घाटनमात्रेण मुच्यते भवबन्धनात् । आधारपश्चिमे भागे चन्द्रसूर्यौ स्थिरौ यदि ( स्थितौ सदा ) ॥ ३२ ॥ तत्र तिष्ठति विश्वेशो ध्यात्वा ब्रह्ममयो भवेत् । आधारपाश्चिमे भागे मूर्त्तिस्तिष्ठति संज्ञया ॥ ३३ ॥ षट् चक्राणि च निर्भिद्य ब्रह्मरन्ध्राद्बहिर्गतम् । वामदक्षे निरुन्धन्ति प्रविशन्ति सुषुम्नया

॥ ३४ ॥ ब्रह्मरन्ध्रं प्रविश्यन्ति ते(भ्याऽन्तस्ते) यान्ति परमां गतिम्। सुषुम्नायां यदा हँसस्त्वध ऊर्ध्वं प्रधावति ॥ ३५ ॥ सुषुम्नायां यदा प्राऽणं भ्रामयेद्यो निरन्तरम् । सुषुम्नायां यदा प्राऽणस्स्थिरो भवति धीमताम् ॥ ३६ ॥ सुषुम्नायां प्रवेशेन चन्द्रसूर्यौ लयं गतौ । तदा समरसं भावं यो जानाति स योगवित् ॥ ३७ ॥ सुषुम्नायां यदा यस्य म्रियते मनसो रयः । सुषुम्नायां यदा योगी क्षणैकमपि तिष्ठति ॥ ३८ ॥ सुषुम्नायां यदा योगी क्षणाऽर्धमपि तिष्ठति । सुषुम्नायां यदा योगी सुलग्नो लवणाऽम्बुवत् ॥ ३९ ॥ सुषुम्नायां यदा योगी लीयते क्षीरनीरवत् । भिद्यते च तदा ग्रन्थिश्छिद्यन्ते सर्वसंशयाः ॥ ४० ॥ क्षीयन्ते परमाऽऽकाशे ते यान्ति परमां गतिम् । गङ्गायाँ सागरे स्नात्वा नत्वा च मणिकर्णिकाम् ॥ ४१ ॥ मध्यनाडीविचारस्य कलां

नाऽर्हन्ति षोडशीम् । श्रीशैलदर्शनान्मुक्तिर्वाराणस्यां मृतस्य च ॥ ४२ ॥ केदारोदकपानेन मध्यनाडीप्रदर्शनात् । अश्वमेधसहस्राणि वाजपेयशतानि च ॥ ४३ ॥ सुषुम्नाध्यानयोगस्य कलां नाऽर्हन्ति षोडशीम् । सुषुम्नायाँ सदा गोष्ठीं यः कश्चित्कुरुते नरः ॥ ४४ ॥ स मुक्तस्सर्वपापेभ्यो निश्रेयसमवाऽऽप्नुयात् । सुषुम्नैव परं तीर्थं सुषुम्नैव परो जपः ॥ ४५ ॥ सुषुम्नैव परं ध्यानं सुषुम्नैव परा गतिः । अनेकयज्ञदानानि व्रतानि नियमास्तथा ॥ ४६ ॥ सुषुम्नाध्यानलेशस्य कलां नाऽर्हन्ति षोडशीम् । ब्रह्मरन्ध्रे महास्थाने वर्तते सततं शिवा ॥ ४७ ॥ चिच्छक्तिः परमा देवी मध्यमे सुप्रतिष्ठिता । मायाशक्तिर्ललाटाऽग्रभागे व्योमाऽम्बुजे तथा ॥ ४८ ॥ नादरूपा परा शक्तिर्ललाटस्य तु मध्यमे । भागे बिन्दुमयी शक्तिर्ललाटस्याऽपराँशके ॥ ४९ ॥ बिन्दु-

मध्ये च जीवाऽऽत्मा सूक्ष्मरूपेण वर्तते। हृदये स्थूलरूपेण मध्यमेन तु मध्यमे (तनुमध्ये च मध्यमा) ॥ ५० ॥ प्राऽणाऽपानवशो जीवो ह्यधश्चोर्ध्वं च धावति। वामदक्षिणमार्गेण चञ्चलत्वान्न दृश्यते ॥ ५१ ॥ आक्षिप्तो भुजदण्डेन यथोच्चलति कन्तुकः। प्राऽणाऽपानसमाक्षिप्तस्तथा जीवो न विश्रमेत् ॥ ५२ ॥ अपानः कर्षति प्राऽणं प्राऽणोऽपानं च कर्षति। हकारेण बहिर्याति सकारेण विशेत्पुनः ॥ ५३ ॥ हँसहँसेत्यमुं मन्त्रं जीवो जपति सर्वदा। तद्विद्वानक्षरं नित्यं यो जानाति स योगवित् ॥ ५४ ॥ कन्दो (ण्ठो) र्ध्वे कुण्डली शक्तिर्मुक्तिरूपाय योगिनाम्। बन्धनाय च मूढानां यस्तां वेत्ति स योगवित् ॥ ५५ ॥ भूर्भुवस्स्वरिमे लोकाश्चन्द्रसूर्याऽग्निदेवताः। यासु मात्रासु तिष्ठन्ति तत्परञ्ज्योतिरोमिति ॥ ५६ ॥ त्रयः कालास्त्रयो देवास्त्रयो लोका-

स्त्रयस्स्वराः । त्रयो वेदास्स्थिता यत्र तत्परञ्ज्योतिरोमिति ॥ ५७ ॥ चित्ते चलति सँसारो निश्चलं मोक्ष उच्यते । तस्माच्चित्तँ स्थिरी कुर्यात्प्रज्ञया परया विधे (परे) ॥ ५८ ॥ चित्तं कारणमर्थानां तस्मिन्त्साति जगत्त्रयम् । तस्मिन् क्षीणे जगत्क्षीणं तच्चिकित्स्यं प्रयत्नतः ॥ ५९ ॥ मनोऽहं गगनाऽऽकारं मनोऽहँ सर्वतोमुखम् । मनोऽहँ सर्वमात्मा च न मनः केवलः परः ॥ ६० ॥ मनः कर्माणि जायन्ते मनो लिप्यति पातकैः । मनश्चेदुन्मनी भूयान्न पुण्यं न च पातकम् ॥ ६१ ॥ मनसा मन आलोक्य वृत्तिशून्यं यदा भवेत् । ततः परं परब्रह्म दृश्यते च सुदुर्लभम् ॥ ६२ ॥ मनसा मन आलोक्य मुक्तो भवति योगवित् । मनसा मन आलोक्य उन्मन्यन्तँ सदा स्मरेत् ॥ ६३ ॥ मनसा मन आलोक्य योगनिष्ठस्सदा भवेत् । मनसा मन आलोक्य दृश्यन्ते

प्रत्यया दश ॥ ६४ ॥ यदा प्रत्यया दृश्यन्ते तदा योगीश्वरो भवेत् । बिन्दुनादकला-ज्योतिरविन्दुध्रुवतारकम् ॥ ६५ ॥ शान्तं च तदतीतं च परम्ब्रह्म तदुच्यते । हसत्युल्लसति प्रीत्या क्रीडते मोदते तदा ॥ ६६ ॥ तनोति जीवनं बुद्धया बिभेति सर्वतो भयात् । रोध्यते बुध्यते शोके मुह्यते न च सम्पदा ॥ ६७ ॥ कम्पते शत्रुकार्येषु कामेन रमते हसन् । स्मृत्वा कामरतं चित्तं विजानीयात्कलेवरे ॥ ६८ ॥ यत्र देशे वसेद्वायुश्चित्तं तद्वसति ध्रुवम् । मनश्चन्द्रो रविर्वायुर्दृष्टिरग्निरुदाहृतः ॥ ६९ ॥ बिन्दुनादकला ब्रह्मन् विष्णुब्रह्मेशदेवताः । सदा नादाऽनुसन्धानात्सङ्क्षीणा वासना भवेत् ॥ ७० ॥ निरञ्जने विलीयेत ( लयं याति ) मरुन्मनसि पङ्कज । यो वै नादस्स वै बिन्दुस्तद्वै चित्तं प्रकीर्तितम् ॥ ७१ ॥ नादो बिन्दुश्च चित्तं च त्रिभिरैक्यं प्रसाद-

(ध)येत् । मन एव हि बिन्दुश्च उत्पत्तिस्थितिकारणम् ॥७२॥ मनसोत्पद्यते बिन्दुर्यथा क्षीरं घृताऽऽत्मकम् । षट् चक्राणि परिज्ञात्वा प्रविशेत्सुखमण्डलम् ॥ ७३ ॥ प्रविशेद्वायुमाकृष्य तथैवोर्ध्वं नियोजयेत् । वायुं बिन्दुं तथा चक्रं चित्तं चैव समभ्यसेत् ॥ ७४ ॥ समाधिमेकेन सममममृतं यान्ति योगिनः । यथाऽग्निर्दारुमध्यस्थो नोत्तिष्ठेन्मथनं विना ॥ ७५ ॥ विना चाऽभ्यासयोगेन ज्ञानदीपस्तथा न हि । घटमध्ये यथा दीपो बाह्ये नैव प्रकाशते ॥ ७६ ॥ भिन्ने तस्मिन् घटे चैव दीपज्वाला च भासते । स्वकायं घटमित्युक्तं यथा जीवो हि तत्पदम् ॥ ७७ ॥ गुरुवाक्यसमाभिन्ने ( भाने ) ब्रह्मज्ञानं प्रकाशते । कर्णधारं गुरुं प्राऽऽप्य तद्वाक्यं प्लववद्दृढम् ॥ ७८ ॥ अभ्यासवासनाशक्त्या तरन्ति भवसागरम् । इत्युपनिषत् ॥ इति योगशिखोपनिषदि षष्ठो-

ऽध्यायः ॥ ॐ सह नाववत्विति शान्तिः ॥ ॐ तत्सत् ॥ इति योगशिखोपनिषत्समाप्ता ॥

**अथ तुरीयाऽती (ताऽवधू)तोपनिषत्** ॥ ॐ तुरीयाऽतीतोपनिषद्वेद्यं यत्परमाऽक्षरम् । तत्तुर्याऽतीतचिन्मात्रं स्वमात्रं चिन्तयेऽन्वहम् ॥ १ ॥ तुरीयाऽतीतसन्न्यासपरिव्राजाऽक्षमालिका । अव्यक्तैकाऽक्षरं पूर्णा सूर्याऽक्ष्यध्यात्मकुण्डिका ॥ २ ॥ हरिः ॐ पूर्णमद इति शान्तिः । अथ तुरीयाऽतीताऽवधूतानां कोऽयं मार्गस्तेषां का स्थितिरिति पितामहो भगवन्तं पितरमादिनाराऽयणं परिसमेत्योवाच । तमाह भगवान्नाराऽयणो योऽयमवधूतमार्गस्थो लोके दुर्लभतरो न तु बाहुल्यो यद्येको भवति स एव नित्यपूतस्स एव वैराग्यमूर्तिस्स (मुक्ति) एव ज्ञानाऽऽकारस्स एव वेदपुरुष इति ज्ञानिनो मन्यन्ते ।

महापुरुषो यस्ताञ्चित्तं मय्येवाऽवतिष्ठते । अहं च तस्मिन्नेवाऽवस्थितस्सोऽयमादौ ताव-
त्क्रमेण कुटीचको बहूदकत्वं प्राऽऽप्य बहूदको हँसत्वमवलम्ब्य हँसः परमहँसो
भूत्वा स्वरूपाऽनुसन्धानेन सर्वप्रपञ्चं विदित्वा दण्डकमण्डलुकटिसूत्रकौपीनाऽऽच्छा-
दनं स्वविध्युक्तक्रियाऽऽदिकँ सर्वमप्सु सन्न्यस्य दिगम्बरो भूत्वा विवर्णजीर्णवल्कला-
ऽजिनपरिग्रहमपि सन्त्यज्य तदूर्ध्वममन्त्रवदाचरन् क्षौराऽभ्यङ्गस्नानोर्ध्वपुण्ड्राऽऽदिकं
विहाय लौकिकवैदिकमप्युपसँहृत्य सर्वत्र पुण्याऽपुण्यवर्जितो ज्ञानाऽज्ञानमपि विहाय
शीतोष्णसुखदुःखमानाऽवमानं निर्जित्य (निर्भिद्य) वासनात्रयपूर्वकं निन्दाऽनिन्दागर्व-
(वर्ग) मत्सरदम्भदर्पद्वेषकामक्रोधलोभमोहहर्षाऽमर्षाऽसूयाऽऽत्मसँरक्षणाऽऽदिकं दग्ध्वा
स्ववपुः कुणपाऽऽकारमिव पश्यन्नयत्नेनाऽनियमेन लाभाऽलाभौ समौ भूत्वा गोवृत्त्या

प्राऽणसन्धारणं कुर्वन्यत्प्राऽऽप्तं तेनैव निर्लोलुपस्सर्वविद्यापाण्डित्यप्रपञ्चं भस्मीकृत्य स्वरूपं गोपयित्वा ज्येष्ठाऽज्येष्ठत्वाऽपलापकस्सर्वोत्कृष्टत्वसर्वाऽऽत्मकत्वाऽद्वैतं कल्पयित्वा मत्तो व्यतिरिक्तः कश्चिन्नाऽन्योऽस्तीति देवगुह्याऽऽदिधन ( दीन्धन ) मात्मन्युपसँहृत्य दुःखेन नोद्विग्नस्सुखेन नाऽनुमोदको रागे निस्स्पृहस्सर्वत्र शुभाऽशुभयोरनभिस्नेहस्सर्वेन्द्रियोपरमस्स्व ( श्च ) पूर्वाऽऽपन्नाऽऽश्रमाऽऽचारविद्याधर्मप्राभवमननुस्मरन्व्यक्तवर्णाऽऽश्रमाऽऽचारस्सर्वदा दिवानक्तसमत्वेनाऽस्वप्नस्सर्वदा सञ्चारशीलो देहमात्राऽवशिष्टो जलस्थलकमण्डलुस्सर्वदाऽनुन्मत्तो बालोन्मत्तपिशाचवदेकाकी सञ्चरन्नसम्भाषणपरस्स्वरूपध्यानेन निरालम्बमवलम्ब्य स्वाऽऽत्मनिष्ठाऽनुकूलेन सर्वं विस्मृत्य तुरीयाऽतीताऽवधूतवेषेणाऽद्वैतनिष्ठापरः प्रणवाऽऽत्मकत्वेन देहत्यागं करोति

यस्सोऽवधूतस्स कृतकृत्यो भवतीत्युपनिषत् ॥ ॐ तत्सत् ॥ ॐ पूर्णमद इति शान्तिः
॥ इति तुरीयाऽती ( ताऽवधू ) तोपनिषत्समाप्ता ॥

अथ सन्न्यासोपनिषत् ॥ ॐ सन्न्यासोपनिषद्वेद्यं सन्न्यासिपटलाऽऽश्रयम् ।
सत्तासामान्यविभवं स्वमात्रमिति भावये ॥ १ ॥ ओमाप्यायन्त्विति शान्तिः ॥ हरिः
ओमथाऽतस्सन्न्यासोपनिषदं व्याख्यास्यामो योऽनुक्रमेण सन्न्यस्यति स सन्न्यस्तो
भवति । कोऽयं सन्न्यास उच्यते कथं सन्न्यस्तो भवति । य आत्मानं क्रियाभिर्गुप्तं
करोति मातरं पितरं भार्यां पुत्रान्बन्धूननुमोदयित्वा ये चाऽस्यर्त्विजस्तान्त्सर्वांश्च पूर्व-
वत्प्राऽणि ( वृणि ) त्वा वैश्वानरेष्टिं निर्वपेत्सर्वस्वं दद्याद्यजमानस्य गा ऋत्विजस्सर्वैः
पात्रैस्समारोप्य यदाहवनीये गार्हपत्ये वाऽन्वाहार्यपचने सभ्याऽऽवसथ्ययोश्च प्राऽणा-

ऽपानव्यानोदानसमानान्त्सर्वान्त्सर्वेषु समारोपयेत् । सशिखान्केशान्विसृज्य यज्ञोपवीतं छित्त्वा पुत्रं दृष्ट्वा त्वं ब्रह्मा त्वं यज्ञस्त्वं सर्वमित्यनुमन्त्रयेत् । यद्यपुत्रो भवत्यात्मानमेवेमं ध्यात्वाऽनवेक्षमाणः प्राऽचीमुदीचीं वा दिशं प्रव्रजेच्च । त्रिषु ( चतुर्षु ) वर्णेषु भिक्षाचर्यं चरेत् । पाणिपात्रेणाऽशनं कुर्यात् । औषधवदशनमाचरेत् । औषधवदशनं प्राऽश्नीयात् । यथालाभमश्नीयात्प्राऽणसन्धारणाऽर्थं यथामेदोवृद्धिर्न जायते । कृशो भूत्वा ग्राम एकरात्रं नगरे पञ्चरात्रं चतुरो मासान्वार्षिकान् ग्रामे वा नगरे वाऽपि वसेत् । पक्षा वै मासा इति द्वौ मासौ वा वसेत् । विशीर्णवस्त्रं वल्कलं वा प्रतिगृह्णीयान्नाऽन्यत्प्रति-गृह्णीयाद्यद्यशक्तो भवति । क्लेशतस्तप्यते तप इति । यो वा एवं क्रमेण सन्न्यस्यति यो वा एवं पश्यति । किमस्य यज्ञोपवीतं काऽस्य शिखा कथं वाऽस्योपस्पर्शनमिति ।

तँ होवाचेदमेवाऽस्य तद्यज्ञोपवीतं यदात्मध्यानं विद्या ( त्सा ) शिखानीरै ( निर्वैर ) स्सर्वत्राऽवस्थितैः ( ते ) कार्यं निर्वर्तयन्नुदरपात्रेण जलतीरे निकेतनम् । ब्रह्मवादिनो वदन्त्यस्तमित आदित्ये कथं वाऽस्योपस्पर्शनामिति । तान्होवाच यथाऽहनि तथा रात्रौ नाऽस्य नक्तं न दिवा तदप्येतदृषिणोक्तम् । सकृद्दि(दि)वाऽऽहैवाऽस्मै भवति य एवं विद्वानेतेनाऽऽत्मानं सन्धत्ते ॥ इति प्रथमोऽध्यायः ॥ ॐ चत्वारिंशत्संस्कारसम्पन्नस्सर्वतो विरक्तश्चित्तशुद्धिमेत्याऽऽशाऽसूयेर्ष्याऽहङ्कारं दग्ध्वा साधनचतुष्टयसम्पन्न एव सन्न्यस्तुमर्हति । सन्न्यासे निश्चयं कृत्वा पुनर्न च करोति यः । स कुर्यात्कृच्छ्रमात्रं तु पुनस्सन्न्यस्तुमर्हति ॥ १ ॥ सन्न्यासं पातयेद्यस्तु पतितं न्यासयेत्तु यः । सन्न्यासविघ्नकर्ता च त्रीनेतान्पतितान्विदुः ॥२॥ इति ॥ अथ षण्डः पतितोऽङ्गविकलस्त्रैणो बधि-

रोऽर्भको मूकः । पाषण्डश्चक्री लिङ्गी कुष्ठी वैखानसहराद्विजौ भृतकाऽध्यापकश्शिपिविष्टोऽनग्निको नाऽस्तिको वैराग्यवन्तोऽप्येते न सन्न्यासाऽर्हाः । सन्यस्ता यद्यपि महावाक्योपदेशे नाऽधिकारिणः । आरूढपतिताऽपत्यं कुनखी श्यावदन्तकः । क्षीबस्त-(क्षयी त) थाऽङ्गविकलो नैव सन्न्यस्तुमर्हति ॥ ३ ॥ सम्प्रत्यवसितानां च महापातकिनां तथा । व्रात्यानामभिशस्तानां सन्न्यासं नैव कारयेत् ॥ ४ ॥ व्रतयज्ञतपोदानहोमस्वाऽध्यायवर्जितम् । सत्यशौचपरिभ्रष्टं सन्न्यासं नैव कारयेत् ॥ ५ ॥ एते नाऽर्हन्ति सन्न्यासमातुरेण विना क्रमम् । ॐ भूस्स्वाहेति शिखामुत्पाट्य यज्ञोपवीतं बहिर्न निवसेत् । यशो बलं ज्ञानं वैराग्यं मेधां प्रयच्छेति यज्ञोपवीतं छित्त्वा ॐ भूस्स्वाहेत्यप्सु वस्त्रं कटिसूत्रं च विसृज्य सन्न्यस्तं मयेति त्रिवारमभिमन्त्रयेत् ।

सन्न्यासिनं द्विजं दृष्ट्वा स्थानाच्चलति भास्करः । एष मे मण्डलं भित्त्वा परं ब्रह्माऽधिगच्छति ॥ ६ ॥ षष्टिं कुलान्यतीतानि षष्टिमागामिकानि च । कुलान्युद्धरते प्राऽऽज्ञस्सन्न्यस्तमिति यो वदेत् ॥ ७ ॥ ये च सन्तानजा दोषा ये दोषा देहसम्भवाः । प्रेषाऽग्निर्निर्दहेत्सर्वांस्तुषाऽग्निरिव काञ्चनः ॥८॥ सखा मा गोपयेति दण्डं परिग्रहेत् । दण्डं तु वैणवं सौम्यं सत्वचं समपर्वकम् । पुण्यस्थलसमुत्पन्नं नानाकल्मषशोधितम् ॥९॥ अदग्धमहतं कीटैः पर्वग्रन्थिविराजितम् । नासादघ्नं शिरस्तुल्यं भ्रुवोर्वा बिभृयाद्यतिः ॥ १० ॥ दण्डाऽऽत्मनोस्तु संयोगस्सर्वथा तु विधीयते । न दण्डेन विना गच्छेदिषुक्षेपत्रयं बुधः ॥ ११ ॥ जगज्जीवनं जीवनाऽऽधारभूतं मातेमामन्त्रयस्व ( सर्वदा ) सर्वसौम्येति कमण्डलुं परिगृह्य योगपट्टाऽभिषिक्तो भूत्वा यथासुखं विहरेत् ॥ त्यज धर्ममधर्मं च उभे

सत्याऽनृते त्यज । उभे सत्याऽनृते त्यक्त्वा येन त्यजसि तत्त्यज ॥ १२ ॥ वैराग्यसन्न्यासी ज्ञानसन्न्यासी ज्ञानवैराग्यसन्न्यासी कर्मसन्न्यासीति चातुर्विध्यमुपाऽऽगतः । तद्यथेति दृष्टाऽऽनुश्रविकविषयवैतृष्ण्यमेत्य प्राऽक्पुण्यकर्मविशेषात्सन्न्यस्तस्स वैराग्यसन्न्यासी । शास्त्रज्ञानात्पापपुण्यलोकाऽनुभवश्रवणात्प्रपञ्चोपरतो देहवासनां शास्त्रवासनां लोकवासनां त्यक्त्वा वमनाऽन्नमिव प्रवृत्तिं सर्वं हेयं मत्वा साधनचतुष्टयसम्पन्नो यस्सन्न्यस्यति स एव ज्ञानसन्न्यासी । क्रमेण सर्वमभ्यस्य सर्वमनुभूय ज्ञानवैराग्याभ्यां स्वरूपाऽनुसन्धानेन देहमात्राऽवशिष्टस्सन्न्यस्य जातरूपधरो भवति स ज्ञानवैराग्यसन्न्यासी । ब्रह्मचर्यं समाप्य गृही भूत्वा वानप्रस्थाऽऽश्रममेत्य वैराग्याऽभावेऽप्याश्रमक्रमाऽनुसारेण यस्सन्न्यस्यति स कर्मसन्न्यासी ।( स ) सन्न्यासष्षड्विधो भवति । कुटीचकबहूद-

कहंसपरमहंसतुरीयाऽतीताऽवधूताश्चेति । कुटीचकश्शिखायज्ञोपवीती दण्डकमण्डलुधरः कौपीनशाटीकन्थाधरः पितृमातृगुर्वाराधनपरः पिठरखनित्रशिक्याऽऽदिमात्रसाधनपर एकत्राऽन्नाऽदनपरश्श्वेतोर्ध्वपुण्ड्रधारी त्रिदण्डः । बहूदकश्शिखाऽऽदिकन्थाधरस्त्रिपुण्ड्रधारी कुटीचकवत्सर्वसमो मधुकरवृत्त्याऽष्टकवलाऽऽशी । हंसो जटाधारी त्रिपुण्ड्रोर्ध्वपुण्ड्रधारी असङ्क्लृप्तमाधूकराऽन्नाऽऽशी कौपीनखण्डतुण्डधारी । परमहंसश्शिखायज्ञोपवीतरहितः पञ्चगृहेषु करपात्री एककौपीनधारी शाटीमेकामेकं वैणवं दण्डमेकशाटीधरो वा भस्मोद्धूलनपरस्सर्वत्यागी । तुरीयाऽतीतो गोमुखवृत्त्या फलाऽऽहारी अन्नाऽऽहारी चेद्गृहत्रये देहमात्राऽवशिष्टो दिगम्बरः कुणपवच्छरीरवृत्तिकः । अवधूतस्त्वनियमः पतिताऽभिशस्तवर्जनपूर्वकं सर्ववर्णेष्वजगरवृत्त्याऽऽहारपरस्स्वरूपाऽनुसन्धानपरः ।

जगत्तावदिदं नाऽहं सवृक्षतृणपर्वतम् । यद्बाह्यं जडमत्यन्तं तत्स्यां कथमहं विभुः ॥ १३ ॥ कालेनाऽल्पेन विलयी देहो नाऽहमचेतनः । जडया कर्णशष्कुल्या कल्पमानक्षणस्थया ॥ १४ ॥ शून्याऽऽकृतिश्शून्यभवश्शब्दो नाऽहमचेतनः । त्वचा क्षणविनाशिन्या प्राऽऽप्योऽप्राऽऽप्योऽयमन्यथा ॥ १५ ॥ चित्प्रसादोपलब्धाऽऽत्मा स्पर्शो नाऽऽहमचेतनः । लब्धाऽऽत्मा जिव्हया तुच्छो ( मन्दो ) लोलया लोलसत्तया ॥१६॥ स्वल्पस्यन्दो द्रव्यनिष्ठो रसो नाऽहमचेतनः । दृश्यदर्शनयोर्लीनं क्षयि क्षणविनाशिनोः ॥ १७ ॥ केवले द्रष्टरि क्षीणं रूपं नाऽहमचेतनम् । नासया गन्धजडया क्षयिण्या परिकल्पितः ॥ १८ ॥ पेलवो नियताऽऽकारो गन्धो नाऽहमचेतनः । निर्ममो मननश्शान्तो गतपञ्चेन्द्रियभ्रमः ॥१९ ॥ शुद्धचेतन एवाऽहं कलाऽऽकलनवर्जितः । चैत्यव-

जितचिन्मात्रमहमेषोऽवभासकः ॥ २० ॥ सबाह्याऽऽभ्यन्तरव्यापी निष्कलोऽहं निरञ्जनः । निर्विकल्पचिदाभास एक आत्माऽस्मि सर्वगः ॥ २१ ॥ मयैव चेतनेनेमे सर्वे घटपटाऽऽदयः । सूर्याऽन्ता अवभास्यन्ते दीपेनेवाऽऽत्मतेजसा ॥ २२ ॥ मयैवैतास्स्फुरन्तीह विचित्रेन्द्रियवृत्तयः । तेजसाऽन्तःप्रकाशेन यथाऽग्निकणपङ्क्तयः ॥ २३ ॥ अनन्ताऽऽनन्दसम्भोगा परोपशमशालिनी । शुद्धेयं चिन्मयी दृष्टिर्जयत्यखिलदृष्टिषु ॥ २४ ॥ सर्वभावाऽन्तरस्थाय चैत्यमुक्तचिदात्मने । प्रत्यक्चैतन्यरूपाय मह्यमेव नमो नमः ॥ २५ ॥ विचित्राश्शक्तयस्स्वच्छास्समा या निर्विकारया । चिता क्रियन्ते समया कलाऽऽकलनमुक्तया ॥ २६ ॥ कालत्रयमुपेक्षित्र्या हीनायाश्चैत्यबन्धनैः । चितश्चैत्यमुपेक्षित्र्यास्समतैवाऽवशिष्यते ॥ २७ ॥ सा हि वाचामगम्यत्वादसत्तामिव शाश्वतीम् । नैरा-

त्मसिद्धाऽऽत्म ( ऽन्त ) दशामुपयातैव शिष्यते ॥ २८ ॥ ईहाऽनीहामयैरन्तर्या चिदा ( ता ) वलिता मलैः । सा चिन्नोत्पादितुं शक्ता पाशबद्धेव पक्षिणी ॥ २९ ॥ इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन जन्तवः । धराविवरमग्नानां कीटानां समतां गताः ॥ ३० ॥ आत्मनेऽस्तु नमो मह्यमविच्छिन्नचिदात्मने । परामृष्टोऽस्मि लब्धोऽस्मि प्रोदितोऽस्म्यचिरादहम् ॥ ३१ ॥ उद्धृतोऽस्मि विकल्पेभ्यो योऽस्मि सोऽस्मि नमोऽस्तु ते । तुभ्यं मह्यमनन्ताय मह्यं तुभ्यं चिदात्मने ॥ ३२ ॥ नमस्तुभ्यं परेशाय नमो मह्यं शिवाय च । तिष्ठन्नपि हि नाऽऽसीनो गच्छन्नपि न गच्छति ॥ ३३ ॥ शान्तोऽपि व्यवहारस्थः कुर्वन्नपि न लिप्यते । सुलभश्चाऽयमत्यन्तं सुज्ञेयश्चाऽऽप्तबन्धुवत् ॥ ३४ ॥ शरीरपद्मकुहरे सर्वेषामेव षट्पदः । न मे भोगस्थितौ वाञ्छा न मे भोगविसर्जने ॥ ३५ ॥

यदायाति तदायातु यत्प्रयाति प्रयातु तत् । मनसा मनसि च्छिन्ने निरहङ्कारतां गते ॥ ३६ ॥ भावेन गलिते भावे स्वस्थस्तिष्ठामि केवलः । निर्भावं निरहङ्कारं निर्मनस्कमनीहितम् ॥ ३७ ॥ केवलाऽस्पन्दशुद्धाऽऽत्मन्येव तिष्ठति मे रिपुः । तृष्णारज्जुगणं छित्त्वा मच्छरीरकपञ्जरात् ॥ ३८ ॥ न जाने क्व गतोड्डीय निरहङ्कारपक्षिणी । यस्य नाऽहङ्कृतो भावो बुद्धिर्यस्य न लिप्यते । यस्समस्सर्वभूतेषु जीवितं तस्य शोभते ॥ ३९ ॥ योऽन्तश्शीतलया बुद्ध्या रागद्वेषविमुक्तया । साक्षिवत्पश्यतीदं हि जीवितं तस्य शोभते ॥ ४० ॥ येन सम्यक्परिज्ञाय हेयोपाऽऽदेयमुज्झता । चित्तस्याऽन्तेऽर्पितं चित्तं जीवितं तस्य शोभते ॥ ४१ ॥ ग्राह्यग्राहकसम्बन्धे क्षीणे शान्तिरुदेत्यलम् । स्थितिमभ्यागता शान्तिर्मोक्षनामाऽभिधीयते ॥ ४२ ॥ भ्रष्टबीजोपमा भूयो

जन्माऽङ्कुरविवर्जिता । हृदि जीवद्विमुक्तानां शुद्धा भवति वासना ॥ ४३ ॥ पावनी परमोदारा शुद्धसत्त्वाऽनुपातिनी । आत्मध्यानमयी नित्या सुषुप्तिस्थेव तिष्ठति ॥ ४४ ॥ चेतनं चित्तरिक्तं हि प्रत्यक्चेतनमुच्यते । निर्मनस्कस्वभावत्वान्न तत्र कलनामलम् ॥ ४५ ॥ सा सत्यता सा शिवता साऽवस्था पारमाऽऽत्मकी । सर्वज्ञता सा सन्तृप्तिर्न्नु यत्र मनः क्षतम् ॥ ४६ ॥ प्रलपन्विसृजन्गृण्हन्नुन्मिषन्निमिषन्नपि । निरस्तमननाऽऽनन्दस्संविन्मात्रपरोऽस्म्यहम् ॥ ४७ ॥ मलं संवेद्यमुत्सृज्य मनो निर्मूलयन्परम् । आशापाशाऽनलं छित्त्वा संविन्मात्रपरोऽस्म्यहम् ॥ ४८ ॥ अशुभाऽशुभसङ्कल्पस्संशान्तोऽस्मि निरामयः । नष्टेष्टाऽनिष्टकलनस्संविन्मात्रपरोऽस्म्यहम् ॥ ४९ ॥ आत्मतापरते त्यक्त्वा निर्विभागो जगत्स्थितौ । वज्रस्तम्भवदात्मानमवलम्ब्य स्थिरोऽस्म्य-

हम् ॥ ५० ॥ निर्मलायां निराशायां स्वसंवित्तौ स्थितोऽस्म्यहम् । ईहितानीहितैर्मुक्तो हेयोपाऽऽदेयवर्जितः ॥ ५१ ॥ कदाऽन्तस्तोषमेष्यामि स्वप्रकाशपदे स्थितः । कदोपशान्तमननो धरणीधरकन्दरे ॥ ५२ ॥ समेष्यामि शिलासाम्यं निर्विकल्पसमाधिना । निरंशध्यानविश्रान्तिमूकस्य मम मस्तके ॥ ५३ ॥ कदा त (ता) र्णं करिष्यन्ति कुलायं वनपुत्रिकाः । सङ्कल्पपादपं तृष्णालतं छित्त्वा मनोवनम् ॥ ५४ ॥ विततां भुवमासाद्य विहरामि यथासुखम् । पदं तदनु यातोऽस्मि केवलोऽस्मि जयाम्यहम् ॥५५॥ निर्वाणोऽस्मि निरीहोऽस्मि निरंशोऽस्मि निरीप्सितः । स्वच्छतोर्जिततता सत्ता हृद्यता सत्यता ज्ञता ॥५६॥ आनन्दि (अनादि) तोपशमता सदाप्रमुदितोदिता । पूर्णतोदारता सत्या कान्तिसत्ता सदैकता ॥ ५७ ॥ इत्येवं चिन्तयन् भिक्षुस्स्वरूपस्थितिमञ्जसा ।

निर्विकल्पस्वरूपज्ञो निर्विकल्पो बभूव ह ॥ ५८ ॥ आतुरो जीवति चेत्क्रमसन्न्यासः कर्तव्यः । न शूद्रस्त्रीपतितोदक्या सम्भाषणम् । न यतेर्देवपूजाऽनुत्सवदर्शनम् । तस्मान्न सन्न्यासमेक (ष) लोकः । आतुरकुटीचकयोर्भूलोकभुवर्लोकौ । बहूदकस्य स्वर्गलोकः । हंसस्य तपोलोकः । परमहंसस्य सत्यलोकः । तुरीयाऽतीताऽवधूतयोस्स्वात्मन्येव कैवल्यं स्वरूपाऽनुसन्धानेन भ्रमरकीटन्यायवत् । स्वरूपाऽनुसन्धानव्यतिरिक्ताऽन्यशास्त्राऽभ्यासैरुष्ट्रकुङ्कुमभारवद्व्यर्थः (ता) । न योगशास्त्रप्रवृत्तिः । न साङ्ख्यशास्त्राऽभ्यासः । न मन्त्रतन्त्रव्यापारः । नेतरशास्त्रप्रवृत्तिर्यतेरस्ति । अस्ति चेच्छवाऽलङ्कारवत्कर्माऽऽचारविद्यादूरः । न परिव्राण्नामसङ्कीर्तनपरो यद्यत्कर्म करोति तत्तत्फलमनुभवति । एरण्डतैलफेनवत्सर्वं परित्यजेत् । न देवताप्रसादग्रहणम् । न बाह्यदेवाऽभ्य-

ब्रह्मेति निश्चयः । एष एव क्षयस्तस्या ब्रह्मेदमिति निश्चयः ॥ १९ ॥ ब्रह्म चिद्ब्रह्म भुवनं ब्रह्म भूतपरम्परा । ब्रह्माऽहं ब्रह्म चिच्छत्रुर्ब्रह्म चिन्मित्रबान्धवाः ॥ २० ॥ ब्रह्मैव सर्वमित्येव भाविते ब्रह्म वै पुमान् । सर्वत्राऽवस्थितँ शान्तं चिद्ब्रह्मेत्यनुभूयते ॥२१॥ असँस्कृताऽध्वगाऽऽलोके मनस्यन्यत्र सँस्थिते । या प्रतीतिरनागस्का तच्चिद्ब्रह्माऽस्मि सर्वगम् ॥ २२ ॥ प्रशान्तसर्वसङ्कल्पं विगताऽखिलकौतुकम् । विगताऽशेषसँरम्भं चिदात्मानं समाश्रय ॥ २३ ॥ एवं पूर्णधियो धीरास्समा नीरागचेतसः । न नन्दन्ति न निन्दाति जीवितं मरणं तथा ॥ २४ ॥ प्राऽणोऽयमनिशं ब्रह्मन् स्पन्दशक्तिस्सदागतिः । सबाह्याऽऽभ्यन्तरे देहे प्राऽणोऽसावूर्ध्वग स्थितः ॥ २५ ॥ अपाऽनोऽऽप्यनिशं ब्रह्मन् स्पन्दशक्तिस्सदागतिः । सबाह्याऽऽभ्यन्तरे देहे अपाऽनोऽयमवाऽक् स्थितः ॥ २६ ॥

जाग्रतस्स्वपतश्चैव प्राऽणाऽऽयामोऽयमुत्तमः। प्रवर्तते ह्यभिज्ञस्य तं तावच्छ्रेयसे शृणु ॥ २७ ॥ द्वादशाऽङ्गुलपर्यन्तं बाह्यमाक्रमतां ततः। प्राऽणाऽङ्गनामा संस्पर्शो यस्स पूरक उच्यते ॥ २८ ॥ अपाऽनश्चन्द्रमा देहमाप्याययति सुव्रत । प्राऽणस्सूर्योऽग्निरथ वा पचत्यन्तरिदं वपुः ॥ २९ ॥ प्राऽणक्षयसमीपस्थमपाऽनोदयकोटिगम्। अपाऽनप्राऽणयो-रैक्यं चिदात्मानँ समाश्रय ॥ ३० ॥ अपाऽनोऽस्तङ्गतो यत्र प्राऽणो नाऽभ्युदितः क्षणम्। कलाकलङ्करहितं तच्चित्तत्त्वं समाश्रय ॥ ३१ ॥ नाऽपाऽनोऽस्तङ्गतो यत्र प्राऽणश्चाऽस्त मुपाऽऽगतः। नासाऽग्रगमनाऽऽवर्त्तं तच्चित्तत्त्वमुपाऽऽश्रय ॥ ३२ ॥ आभासमात्रमेवेदं न सन्नाऽसज्जगत्रयम्। इत्यन्यकलनात्यागं सम्यग्ज्ञानं विदुर्बुधाः ॥ ३३ ॥ आभास-मात्रकं ब्रह्मन् चित्ताऽऽदर्शकलङ्कितम्। ततस्तदपि सन्त्यज्य निराभासो भवोत्तम ॥ ३४ ॥

भयप्रदमकल्याणं धैर्यसर्वस्वहारिणम् । मनःपिशाचमुत्सार्य योऽसि सोऽसि स्थिरो भव ॥ ३५ ॥ चिद्व्योमेव किलाऽस्तीह पराऽपरविवर्जितम् । सर्वत्राऽसम्भवच्चैत्यं यत्कल्पाऽन्तेऽवशिष्यते ॥ ३६ ॥ वाञ्छाक्षणे तु या तुष्टिस्तत्र वाञ्छैव कारणम् । तुष्टिस्त्वतुष्टिपर्यन्ता तस्माद्वाञ्छां परित्यज ॥ ३७ ॥ आशा यातु निराशात्वमभावं यातु भावना । अमनस्त्वं मनो यातु तवाऽसङ्गेन जीवतः ॥ ३८ ॥ वासनारहितैरन्तरिन्द्रियैराहरन् क्रियाः । न विकारमवाऽऽप्नोषि खवत्क्षोभशतैरपि ॥ ३९ ॥ चित्तोन्मेषनिमेषाभ्यां संसारप्रलयोदयौ । वासनाप्राऽणसंरोधादनुन्मेषं मनः कुरु ॥ ४० ॥ प्राऽणोन्मेषनिमेषाभ्यां संसृतेः प्रलयोदयौ । तमभ्यासप्रयोगाभ्यामुन्मेषरहितं कुरु ॥ ४१ ॥ मौर्ख्योन्मेषनिमेषाभ्यां कर्मणां प्रलयोदयौ । तद्विलीनं कुरु बलाद्गुरुशास्त्राऽर्थसङ्गमैः ॥ ४२ ॥

असंवित्स्पन्दमात्रेण याति चित्तमचित्तताम् । प्राऽणानां वा निरोधेन तदेव परमं पदम् ॥ ४३ ॥ दृश्यदर्शनसम्बन्धे यत्सुखं पारमाऽर्थिकम् । तदन्तैकाऽन्त-संवित्त्या ब्रह्मदृष्ट्याऽवलोकय ॥ ४४ ॥ यत्र नाऽभ्युदितं चित्तं तद्वै सुखमकृत्रि-मम् । क्षयाऽतिशयनिर्मुक्तं नोदेति न च शाम्यति ॥ ४५ ॥ ज्ञस्य चित्तं न चित्ताऽऽख्यं ।चित्तं चित्तत्त्वमेव हि । तदेव तुर्याऽवस्थायां तुर्याऽतीतं भव-त्यतः ॥ ४६ ॥ सन्न्यस्तसर्वसङ्कल्पस्समश्शान्तमना मुनिः । सन्न्यासयोगयुक्ताऽऽत्मा ज्ञानवान् मोक्षवान् भव ॥ ४७ ॥ सर्वसङ्कल्पसंशान्तं प्रशान्तघनवासनम् । न किं चि-द्भावनाऽऽकारं यत्तद्ब्रह्म परं विदुः ॥ ४८ ॥ सम्यग् ज्ञानाऽवरोधेन नित्यमेकस-माधिना । साङ्ख्य एवाऽवबुद्धा ये ते साङ्ख्या योगिनः परे ॥ ४९ ॥ प्राऽणाऽऽप-

निलसंशान्तौ युक्त्या ये पदमागताः। अनामयमनाद्यन्तं ते स्मृता योगयोगिनः ॥ ५० ॥ उपाऽऽदेयं तु सर्वेषाँ शान्तं पदमकृत्रिमम् । एकाऽर्थाऽभ्यसनं प्राऽणरोधश्चेतःपरिक्षयः ॥ ५१ ॥ एकस्मिन्नेव संसिद्धे संसिध्यन्ति परस्परम् । अविनाभाविनी नित्यं जन्तूनां प्राऽणचेतसी ॥ ५२ ॥ आधाराऽऽधेयवच्चैते एकभावे विनश्यतः । कुरुतस्स्वविनाशेन कार्यं मोक्षाऽऽख्यमुत्तमम् ॥ ५३ ॥ सर्वमेतद्धिया त्यक्त्वा यदि तिष्ठसि निश्चलः। तदाऽहङ्कारविलये त्वमेव परमं पदम् ॥ ५४ ॥ महाचिदेकैवेहाऽस्ति महासत्तेति योच्यते। निष्कलङ्का समा शुद्धा निरहङ्काररूपिणी ॥ ५५ ॥ सकृद्विभाता विमला नित्योदयवती समा। सा ब्रह्मा परमाऽऽत्मेति नामभिः परिगीयते ॥ ५६ ॥ सैवाऽहमिति निश्चित्य निदाघ कृतकृत्यवान् । न भूतं न भवि-

ष्यच्च चिन्तयामि कदा च न ॥ ५७ ॥ दृष्टिमालम्ब्य तिष्ठामि वर्तमानामि ( नं म ) हाऽऽत्मना । इदमद्य मया लब्धमिदं प्राऽऽप्स्यामि सुन्दरम् ॥ ५८ ॥ न स्तौमि न च निन्दामि आत्मनोऽन्यन्न हि क चित् । न तुष्यामि शुभप्राऽऽप्तौ न खिद्याम्यशुभा-ऽऽगमे ॥ ५९ ॥ प्रशान्तचापलं वीतशोकमस्तसमीहितम् । मनो मम मुने शान्तं तेन जीवाम्यनामयः ॥ ६० ॥ अयं बन्धुः परश्चाऽयं ममाऽयमयमन्यकः । इति ब्रह्मन्न जानामि सँस्पर्शं न ददाम्यहम् ॥ ६१ ॥ वासनामात्रसन्त्यागाज्जरामरणवर्जितम् । सवासनं मनो ज्ञानं ज्ञेयं निर्वासनं मनः ॥ ६२ ॥ चित्ते त्यक्ते लयं याति द्वैतमेतच्च सर्वतः । शिष्यते परमँ शान्तमेकमच्छमनामयम् ॥ ६३ ॥ अनन्तमजमव्यक्तमजरँ शान्तमच्युतम् । अद्वितीयमनाद्यन्तं यदाद्यमुपलम्भनम् ॥ ६४ ॥ एकमाद्यन्तरहितं

चिन्मात्रममलं ततम् । खादप्यतितरां सूक्ष्मं तद्ब्रह्माऽस्मि न संशयः ॥ ६५ ॥ दिक्का-
लाऽऽद्यनवच्छिन्नं स्वच्छं नित्योदितं ततम् । सर्वाऽर्थमयमेकाऽर्थं चिन्मात्रममलं भव
॥ ६६ ॥ सर्वमेकमिदँ शान्तमादिमध्याऽन्तवर्जितम् । भावाऽभावमजँ सर्वमिति मत्वा
सुखी भव ॥ ६७ ॥ न बद्धोऽस्मि न मुक्तोऽस्मि ब्रह्मैवाऽस्मि निरामयम् । द्वैतभाव-
विमुक्तोऽस्मि सच्चिदानन्दलक्षणः ॥ ६८ ॥ एवं भावय यत्नेन जीवन्मुक्तो भविष्यसि ।
पदाऽर्थवृन्दे देहाऽऽदिधिया सन्त्यज्य दूरतः ॥ ६९ ॥ आशीतलाऽन्तःकरणो नित्य-
मात्मपरो भव । इदँ रम्यमिदं नेति बीजं ते दुःखसन्ततेः ॥ ७० ॥ तस्मिन्त्साम्या-
ऽग्निना दग्धे दुःखस्याऽवसरः कुतः । शास्त्रसज्जनसम्पर्कैः प्रज्ञामादौ विवर्धयेत् ॥७१॥
ऋतँ सत्यं परं ब्रह्म सर्वसंसारभेषजम् । अत्यर्थममलं नित्यमादिमध्याऽन्तवर्जितम् ॥७२॥

तथा स्थूलमनाकाशमसँस्पृश्यमचाक्षुषम् । न रसं न च गन्धाऽऽख्यमप्रमेयमनूपमम् ॥ ७३ ॥ आत्मानँ सच्चिदानन्दमनन्तं ब्रह्म सुव्रत । अहमस्मीत्यभिध्यायेद्ध्येयाऽतीतं विमुक्तये ॥ ७४ ॥ समाधिस्संविदुत्पत्तिः परजीवैकतां प्रति । नित्यस्सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः ॥ ७५ ॥ एकस्सन् भिद्यते भ्रान्त्या मायया न स्वरूपतः । तस्मादद्वैत एवाऽस्ति न प्रपञ्चो न सँसृतिः ॥ ७६ ॥ यथाऽऽकाशो घटाऽऽकाशो महाऽऽकाश इतीरितः । तथा भ्रान्तेर्द्विधा प्रोक्तो ह्यात्मा जीवेश्वराऽऽत्मना ॥ ७७ ॥ यदा मनसि चैतन्यं भाति सर्वत्रगं सदा । योगिनोऽव्यवधानेन तदा सम्पद्यते स्वयम् ॥ ७८ ॥ यदा सर्वाणि भूतानि स्वाऽऽत्मन्येव हि पश्यति । सर्वभूतेषु चाऽऽत्मानं ब्रह्म सम्पद्यते तदा ॥ ७९ ॥ यदा सर्वाणि भूतानि समाधिस्थो न पश्यति । एकी-

भूतः परेणाऽसौ तदा भवति केवलः ॥ ८० ॥ शास्त्रसज्जनसम्पर्कवैराग्याऽभ्या (र) सरूपिणी । प्रथमा भूमिकैषोक्ता मुमुक्षुत्वप्रदायिनी ॥ ८१ ॥ विचारणा द्वितीया स्यात्तृतीया साऽङ्गभावना । विलापिनी चतुर्थी स्याद्वासना विलयाऽऽत्मिका ॥ ८२ ॥ शुद्धसंविन्मयाऽऽनन्दरूपा भवति पञ्चमी । अर्द्धसुप्तप्रबुद्धाऽऽभो जीवन्मुक्तोऽत्र तिष्ठति ॥ ८३ ॥ असंवेदनरूपा च षष्ठी भवति भूमिका । आनन्दैकघनाऽऽकारा सुषुप्तस-दृशी स्थितिः ॥ ८४ ॥ तुर्याऽवस्थोपशान्ता सा मुक्तिरेव हि केवला । समता स्वच्छता सौम्या सप्तमी भूमिका भवेत् ॥ ८५ ॥ तुर्याऽतीता तु याऽवस्था परा निर्वाणरूपिणी । सप्तमी सा परा प्रौढा विषयो नैव जीवताम् ॥ ८६ ॥ पूर्वाऽवस्थात्रयं तत्र जाग्रदि-त्येव संस्थितम् । चतुर्थी स्वप्न इत्युक्ता स्वप्नाऽऽभं यत्र वै जगत् ॥ ८७ ॥ आनन्दैक-

घनाऽऽकारा सुषुप्ताऽऽख्या तु पञ्चमी । असंवेदनरूपा तु षष्ठी तुर्यपदाऽभिधा ॥ ८८ ॥ तुर्याऽतीतपदाऽवस्था सप्तमी भूमिकोत्तमा । मनोवचोभिरग्राह्या स्वप्रकाशसदात्मिका ॥ ८९ ॥ अन्तः प्रत्याहृतिवशाच्चैत्यं चेन्न विभावितम् । मुक्त एव न सन्देहो महासमतया तया ॥ ९० ॥ न म्रिये न च जीवामि नाऽहं सन्नाऽप्यसन्मयः । अहं न किं चिच्चिदिति मत्वा धीरो न शोचति ॥ ९१ ॥ अलेपकोऽहमजरो नीरागश्शान्तवासनः । निरँशोऽस्मि चिदाकशमिति मत्वा न शोचति ॥ ९२ ॥ अहम्मत्या विरहितश्शुद्धो बुद्धोऽजरोऽमरः । शान्तश्शमसमाऽऽभास इति मत्वा न शोचति ॥ ९३ ॥ तृणाऽग्रेष्वम्बरे भानौ नरनागाऽमरेषु च । यत्तिष्ठति तदेवाऽहमिति मत्वा न शोचति ॥९४॥ भावनां सर्वभावेभ्यस्समुत्सृज्य समुत्थितः । अवशिष्टं परं ब्रह्म केवलोऽस्मीति भावय

॥ ९५ ॥ वाचामतीतविषयो विषयाऽऽशादशोज्झितः । पराऽऽनन्दरसाऽक्षुब्धो रमते स्वाऽऽत्मनाऽऽत्मनि ॥ ९६ ॥ सर्वकर्मपरित्यागी नित्यतृप्तो निराश्रयः । न पुण्येन च पापेन नेतरेण च लिप्यते ॥ ९७ ॥ स्फटिकः प्रतिबिम्बेन यथा नाऽऽयाति रञ्जनम् । तज्ज्ञः कर्मफलेनाऽन्तस्तथा नाऽऽयाति रञ्जनम् ॥ ९८ ॥ त्रिहरञ्जनताबृन्दे देव(ह)कीर्तनपूजनैः । खेदाऽऽह्लादौ न जानाति प्रतिबिम्बगतैरिव ॥ ९९ ॥ निस्तोत्रो निर्विकारश्च पूज्यपूजाविवर्जितः । संयुक्तश्च वियुक्तश्च सर्वाऽऽचारनयक्रमैः ॥ १०० ॥ तनुं त्यजतु वा तीर्थे श्वपचस्य गृहेऽथ वा । ज्ञानसम्पत्तिसमये मुक्तोऽसौ विगताऽऽशयः ॥ १०१ ॥ सङ्कल्पत्वँ हि बन्धस्य कारणं तत्परित्यज । मोक्षो भवेदसङ्कल्पात्तदभ्यासं धिया कुरु ॥ १०२ ॥ साऽवधानो भव त्वं च ग्राह्यग्राहकसङ्गमे । अजस्र-

मेव सङ्कल्पदशाः परिहरञ् शनैः ॥ १०३ ॥ मा भव ग्राह्यभावाऽऽत्मा ग्राहकाऽऽत्मा च मा भव । भावनामखिलां त्यक्त्वा यच्छिष्टं तन्मयो भव ॥ १०४ ॥ किं चिच्चेद्रोचते तुभ्यं तद्बद्धोऽसि भवस्थितौ । न किं चिद्रोचते चेत्ते तन्मुक्तोऽसि भवस्थितौ ॥ १०५ ॥ अस्मात्पदाऽर्थनिचयाद्यावत्स्थावरजङ्गमात् । तृणाऽऽदेर्देहपर्यन्तान्मा किं चित्तत्र रोचताम् ॥ १०६ ॥ अहम्भावाऽनहम्भावौ त्यक्त्वा सदसती तथा । यदसक्तं समं स्वच्छं स्थितं तत्तुर्यमुच्यते ॥ १०७ ॥ या स्वच्छा समता शान्ता जीवन्मुक्तव्यवस्थितिः । साक्ष्यवस्था व्यवहृतौ सा तुर्या कलनोच्यते ॥ १०८ ॥ नैतज्जाग्रन्न च स्वप्नस्सङ्कल्पानामसम्भवात् । सुषुप्तभावो नोऽप्येतदभावाज्जडतास्थितेः ॥१०९॥ शान्तसम्यक्प्रबुद्धानां यथास्थितमिदं जगत् । विलीनं तुर्यमित्याहुरबुद्धानाँ स्थितं

स्थिरम् ॥ ११० ॥ अहङ्कारकलात्यागे समतायास्समुद्गमे । विशरारौ कृते चित्ते तुर्या-ऽवस्थोपतिष्ठते ॥ १११ ॥ सिद्धाऽन्तोऽध्यात्मशास्त्राणां सर्वाऽपह्नव एव हि । नाऽविद्याऽस्तीह नो माया शान्तं ब्रह्मेदमक्लमम् ॥ ११२ ॥ शान्त एव चिदाकाशे स्वच्छे शमस(श)माऽऽत्मनि । समग्रशक्तिखचिते ब्रह्मेति कलिताऽभिधे ॥ ११३ ॥ सर्वमेव परित्यज्य महामौनी भवाऽनघ । निर्वाणवान्निर्मननः क्षीणचित्तः प्रशान्तधीः ॥ ११४ ॥ आत्मन्येवाऽऽस्स्व शान्ताऽऽत्मा मूकाऽन्धबधिरोपमः । नित्यमन्तर्मुखस्स्व-च्छस्स्वाऽऽत्मनाऽन्तः प्रपूर्णधीः ॥ ११५ ॥ जाग्रत्येव सुषुप्तस्थः कुरु कर्माणि वै द्विज । अन्तस्सर्वपरित्यागी बहिः कुरु यथाऽऽगतम् ॥ ११६ ॥ चित्तसत्ता परं दुःखं चित्तत्यागः परँ सुखम् । अतश्चित्तं चिदाकाशे नय क्षयमवेदनात् ॥ ११७ ॥ दृष्ट्वा

रम्यमरम्यं वा स्थेयं पाषाणवत्सदा । एतावताऽऽत्मयत्ने(से) न जिता भवति संसृतिः ॥ ११८ ॥ वेदाऽन्ते परमं गुह्यं पुराकल्पप्रचोदितम् । नाऽप्रशान्ताय दातव्यं नाऽपुत्रायाऽशिष्याय वै पुनः ॥ ११९ ॥ अन्नपूर्णोपनिषदं योऽधीते गुर्वनुग्रहात् । स जीवन्मुक्ततां प्राऽऽप्य ब्रह्मैव भवति स्वयम् ॥ १२० ॥ इत्युपनिषत् ॥ इति पञ्चमोऽध्यायः ॥ ॐ भद्रं कर्णेभिरिति शान्तिः ॥ हरिः ॐ तत्सत् ॥ इत्यन्नपूर्णोपनिषत्समाप्ता ॥

अथ सूर्योपनिषत् ॥ सूदितस्वाऽतिरिक्ताऽरिसूरिनन्दाऽऽत्मभावितम् । सूर्यनाराऽयणाऽऽकारं नौमि चित्सूर्यवैभवम् ॥ ॐ भद्रं कर्णेभिरिति शान्तिः ॥ हरिः ओम् । अथ सूर्याऽथर्वाऽङ्गिरसं व्याख्यास्यामः । ब्रह्मा ऋषिः । गायत्री छन्दः । आदित्यो देवता । हंसस्सोऽहमग्निनाराऽयणयुक्तं बीजम् । हृल्लेखा शक्तिः । वियदादिसर्गसंयुक्तं कीलकम् ।

चतुर्विधपुरुषाऽर्थसिद्ध्यर्थे विनियोगः। षट्स्वराऽऽरूढेन बीजेन षडङ्गं रक्ताऽम्बुज-संस्थितं सप्ताऽश्वरथिनं हिरण्यवर्णं चतुर्भुजं पद्मद्वयाऽभयवरदहस्तं कालचक्रप्रणेतारं श्रीसूर्यनाराऽयणं य एवं वेद स वै ब्राह्मणः। ॐ भूर्भुवस्सुवः। ॐ तत्सवितुर्वरेण्यं (णियं) भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्। सूर्य आत्मा जगतस्तस्थुषश्च। सूर्याद्वै खल्विमानि भूतानि जायन्ते। सूर्याद्यज्ञः पर्जन्योऽन्नमात्मा नमस्त आदित्य त्वमेव प्रत्यक्षं कर्मकर्त्ताऽसि। त्वमेव प्रत्यक्षं ब्रह्माऽसि। त्वमेव प्रत्यक्षं विष्णुरसि। त्वमेव प्रत्यक्षँ रुद्रोऽसि। त्वमेव प्रत्यक्षमृगसि। त्वमेव प्रत्यक्षं यजुरसि। त्वमेव प्रत्यक्षँ सामाऽसि। त्वमेव प्रत्यक्षमथर्वाऽसि। त्वमेव सर्वं छन्दोऽसि। आदित्याद्वायुर्जायते। आदि-त्याद्भूमिर्जायते। आदित्यादापो जायन्ते। आदित्याज्ज्योतिर्जायते। आदित्याद्व्योमादिशो

जायन्ते । आदित्याद्देवा जायन्ते । आदित्याद्वेदा जायन्ते । आदित्यो वा एष तन्मण्डलं तपति । असावादित्यो ब्रह्म । आदित्योऽन्तःकरणमनोबुद्धिचित्ताऽहङ्काराः । आदित्यो वै व्यानस्समानोदानोऽपाऽनः प्राऽणः । आदित्यो वै श्रोत्रत्वक्चक्षूरसनघ्राणाः । आदित्यो वै वाक्पाणिपादपायूपस्थाः । आदित्यो वै शब्दस्पर्शरूपरसगन्धाः । आदित्यो वै वचनाऽऽदानाऽऽगमनविसर्गाऽऽनन्दाः । आनन्दमयो (वि) ज्ञानमयो विज्ञानमय (घन) आदित्यः । नमो मित्राय भानवे मृत्योर्मा पाहि । भ्राजिष्णवे विश्वहेतवे नमः । सूर्याद्भवन्ति भूतानि सूर्येण पालितानि तु । सूर्ये लयं प्राऽऽप्नुवन्ति यस्सूर्यस्सोऽहमेव च । चक्षुर्नो देवस्सविता चक्षुर्न उत पर्वतः । चक्षुर्धाता दधातु नः । आदित्याय विद्महे सहस्रकिरणाय धीमहि । तन्नस्सूर्यः प्रचोदयात् । सविता पुरस्तात्सविता पश्चात्तात्स-

वितोत्तरात्तात्सवितताऽधरात्तात्सावितान स्सुवतु सर्वतातिँसविता नो रासतां दीर्घ मायुः। ओमित्येकाऽक्षरं ब्रह्म । घृणिरिति द्वे अक्षरे । सूर्य इत्यक्षरद्वयम्। आदित्य इति त्रीण्यक्षराणि । एत(क)स्यैव सूर्यस्याऽष्टाऽक्षरो मनुः। यस्सदाऽहरहर्जपति स वै ब्राह्मणो भवति स वै ब्राह्मणो भवति । सूर्याऽभिमुखो जप्त्वा महाव्याधिभयात्प्रमुच्यते । अलक्ष्मीर्नश्यति । अभक्ष्यभक्षणात्पूतो भवति । अगम्यागमनात्पूतो भवति । पतितसम्भाषणात्पूतो भवति । असत्सम्भाषणात्पूतो भवति । मध्याऽन्हे सूर्याऽभिमुखः पठेत् । सद्योत्पन्नपञ्चमहापातकात्प्रमुच्यते । सैषा सावित्रीं विद्यां न किं चिदपि न कस्मै चित्प्रशँसयेत् । य एतां महाभागः प्रातः पठति स भाग्यवाञ् जायते पशून्विन्दति । वेदार्थं लभते । त्रिकालमेतज्जप्त्वा ऋतुशतफलमवाऽऽप्नोति । हस्ताऽऽदित्ये जपति स

महामृत्युं तरति स महामृत्युं तरति य एवं वेद ॥ इत्युपनिषत् ॥ हरिः ॐ तत्सत् ॥
ॐ भद्रं कर्णेभिरिति शान्तिः ॥ इति सूर्योपनिषत्समाप्ता ॥

अथाऽक्ष्युपनिषत् ॥ यत्सप्तभूमिकाविद्यावेद्याऽऽनन्दकलेवरम् । विकलेबरकैवल्यं रामचन्द्रपदं भजे ॥ १ ॥ ॐ सह नाववत्विति शान्तिः ॥ हरिः ओमथ ह साङ्कृतिर्भगवानादित्यलोकं जगाम । तमादित्यं नत्वा चाक्षुष्मतीविद्यया तमस्तुवत् । ॐ नमो भगवते श्रीसूर्यायाऽक्षितेजसे नमः । ॐ खेचराय नमः । ॐ महासेनाय नमः । ॐ तमसे नमः । ॐ रजसे नमः । ॐ सत्त्वाय नमः । ओमसतो मा सतो (त्) गमय । तमसो मा ज्योतिर्गमय । मृत्योर्माऽमृतं गमय । उष्णो भगवाञ्छुचीरूपः ( हंसो भगवाञ्छुचीरूपः ) प्रतीरूपः । विश्वरूपं घृणिनं जातवेदसँ हिरण्मयं ज्योतीरूपं

तपन्तम् । सहस्त्ररश्मिश्शतधा वर्तमानः पुरुषः प्रजानामुदयत्येष सूर्यः । ॐ नमो भगवते श्रीसूर्यायाऽऽदित्यायाऽक्षितेजसे होवाहिनि (नी) (वाहिनि) (नी) स्वाहेति । एवं चाक्षुष्मतीविद्यया स्तुतश्श्रीसूर्यनाराऽयणस्सुप्रीतोऽब्रवीच्चाक्षुष्मतीविद्यां ब्राह्मणो यो नित्यमधीते न तस्याऽक्षिरोगो भवति । न तस्य कुलेऽन्धो भवति । अष्टौ ब्राह्मणान् ग्राहयित्वाऽथ विद्यासिद्धिर्भवति । य एवं वेद स महान्भवति ॥ १ ॥ अथ ह साङ्कृतिरादित्यं पप्रच्छ भगवन् ब्रह्मविद्यां मे ब्रूहीति । तमादित्यो होवाच । साङ्कृते शृणु वक्ष्यामि तत्त्वज्ञानं सुदुर्लभम् । येन विज्ञानमात्रेण जीवन्मुक्तो भविष्यसि ॥ १ ॥ सर्वमेकमजँ शान्तमनन्तं ध्रुवमव्ययम् । पश्यन्भूताऽर्थचिद्रूपँ शान्त आस्स्व यथासुखम् ॥ २ ॥ अवेदनं विदुर्योगं चित्तक्षयमकृत्रिमम् । योगस्थः कुरु कर्माणि नीरसो

त्वाऽथ मा कुरु ॥३॥ विरागमुपयात्यन्तर्वासनास्वनुवासरम् । क्रियासूदाररूपासु क्रमते मोदतेऽन्वहम् ॥ ४ ॥ ग्राम्यासु जडचेष्टासु सततं विचिकित्सते । नोदाहरति मर्माणि पुण्यकर्माणि सेवते ॥ ५ ॥ अनन्योद्वेगकारीणि मृदुकर्माणि सेवते । पापाद्बिभेति सततं न च भोगमपेक्षते ॥ ६ ॥ स्नेहप्रणयगर्भाणि पेशलान्युचितानि च । देशकालोपपन्नानि वचनान्यभिभाषते ॥ ७ ॥ मनसा कर्मणा वाचा सज्जनानुपसेवते । यतः कुतश्चिदानीय नित्यं शास्त्राण्यपेक्षते ॥ ८ ॥ तदाऽसौ प्रथमामेकां प्राऽऽप्तो भवति भूमिकाम् । एवं विचारवान्यस्स्यात्संसारोत्तारणं प्रति ॥ ९ ॥ स भूमिकावानित्युक्तश्शेषस्त्वार्य इति स्मृतः । विचारनाम्नीमितरामागतो योगभूमिकाम् ॥ १० ॥ श्रुतिस्मृतिसदाचारधारणाध्यानकर्मणः । मुख्यया व्याख्यया ऽऽख्यातान्छ्रयति श्रेष्ठपण्डितान्

॥ ११ ॥ पदाऽर्थप्रविभागज्ञः कार्याऽकार्यविनिर्णयम् । जानात्यधिगतश्चाऽन्यो ग्रहं ग्रहपतिर्यथा ॥ १२ ॥ मदाऽभिमानमात्सर्यलोभमोहाऽतिशायिताम् । बहिरप्यास्थितामीषत्त्यजत्यहिरिव त्वचम् ॥ १३ ॥ इत्थम्भूतमतिश्शास्त्रगुरुसज्जनसेवया । सरहस्यमशेषणे यथावदधिगच्छति ॥ १४ ॥ असंसर्गाऽभिधामन्यां तृतीयां योगभूमिकाम् । ततः पतत्यसौ कान्तः पुष्पशय्यामिवाऽमलाम् ॥ १५ ॥ यथावच्छास्त्रवाक्याऽर्थे मतिमाधाय निश्चलाम् । तापसाऽऽश्रमविश्रान्तैरध्यात्मकथनक्रमैः ॥ १६ ॥ शिलाशय्याऽऽसनाऽऽसीनो जरयत्यायुराततम् । वनाऽवनिविहारेण चित्तोपशमशोभिना ॥ १७ ॥ असङ्गसुखसौख्येन कालं नयति नीतिमान् । अभ्यासात्साधुशास्त्राणां करणात्पुण्यकर्मणाम् ॥ १८ ॥ जन्तोर्यथावदेवेयं वस्तुदृष्टिः प्रसीदति । तृतीयां भूमिकां प्राऽऽप्य बुद्धो-

ऽनु(न)भवति स्वरूपम् ॥१९॥ द्विप्रकारमसँसर्गं तस्य भेदमिमं शृणु । द्विविधोऽयमसँसर्ग-स्सामान्यश्श्रेष्ठ एव च ॥ २० ॥ नाऽहं कर्त्ता न भोक्ता च न बाध्यो न च बाधकः । इत्यसञ्जनमर्थेषु सामान्याऽसङ्गनामकम् ॥ २१ ॥ प्राऽक्कर्मनिर्मितं सर्वमीश्वराऽधीन-मेव वा । सुखं वा यदि वा दुःखं कैवाऽत्र तत्र कर्त्तृता ॥ २२ ॥ भोगाऽभोगा महा-रो(रा)गास्सम्पदः परमाऽऽपदः । वियोगायैव संयोगा आधयो व्याधयो धियाम् ॥२३॥ कालश्च कलनोद्युक्तस्सर्वभावाननारतम् । अनास्थयेति भावानां यदभावनमान्तरम् ॥ २४ ॥ वाक्याऽर्थलब्धमनसस्सामान्योऽसावसङ्गमः । अनेन क्रमयोगेन संयोगेन महाऽऽत्मनाम् ॥ २५ ॥ नाऽहं कर्त्तेश्वरः कर्ता कर्म वा प्राऽक्तनं मम । कृत्वा दूरतरे नूनमिति शब्दाऽर्थभावनम् ॥ २६ ॥ यन्मौनमासनं शान्तं तच्छ्रेष्ठाऽसङ्ग उच्यते ।

सन्तोषाऽऽमोदमधुरा प्रथमोदेति भूमिका ॥ २७ ॥ भूमिप्रोदितमात्रोऽन्तरमृताऽङ्कुरिकेव सा । एषा हि परिमृष्टाऽन्तस्सन्न्यासा प्रसवैकभूः ॥२८॥ द्वितीयां च तृतीयां च भूमिकां प्राऽऽप्नुयात्ततः । श्रेष्ठा सर्वगता ह्येषा तृतीया भूमिकाऽत्र हि ॥ २९ ॥ भवति प्रोज्झिताऽशेषसङ्कल्पकलनः पुमान् । भूमिकात्रितयाऽभ्यासादज्ञाने क्षयमागते ॥ ३० ॥ समं सर्वत्र पश्यन्ति चतुर्थीं भूमिकां गताः । अद्वैते स्थैर्यमायाते द्वैते च प्रशमं गते ॥३१॥ पश्यन्ति स्वप्नवल्लोकं चतुर्थीं भूमिकां गताः । भूमिकात्रितयं जाग्रच्चतुर्थी स्वप्न उच्यते ॥ ३२ ॥ चित्तं तु शरदभ्राँऽशविलयं प्रविलीयते । सत्त्वाऽवशेष एवाऽऽस्ते पञ्चमीं भूमिकां गताः ॥ ३३ ॥ जगद्विकल्पो नोदेति चित्तस्याऽत्र विलापनात् । पञ्चमीं भूमिकामेत्य सषुप्तपदनामिकाम् ॥ ३४ ॥ शान्ताऽशेषविशेषाँऽशास्तिष्ठत्यद्वैतमात्रकः ।

गलितद्वैतनिर्भासो मुदितोऽन्तः प्रबोधवान् ॥ ३५ ॥ सुषुप्तमन एवाऽऽस्ते पञ्चमीं भूमिकां गतः । अन्तर्मुखतया तिष्ठन्बहिर्वृत्तिपरोऽपि सन् ॥ ३६ ॥ परिश्रान्ततया नित्यं निद्रालुरिव लक्ष्यते । कुर्वन्नभ्यासमेतस्यां भूमिकायां विवासनः ॥ ३७ ॥ षष्ठीं तुर्याऽभिधामन्यां क्रमात्पतति भूमिकाम् । यत्र नाऽसन्न सद्रूपो नाऽहं नाऽप्यनहङ्कृतिः ॥ ३८ ॥ केवलं क्षीणमननमास्तेऽद्वैतेऽतिनिर्भयः । निर्ग्रन्थिश्शान्तसन्देहो जीवन्मुक्तो विभावनः ॥ ३९ ॥ अनिर्वाणोऽपि निर्वाणश्चित्रदीप इव स्थितः । षष्ठ्यां भूमावसौ स्थित्वा सप्तमीं भूमिमाऽऽप्नुयात् ॥४०॥ विदेहमुक्तताऽत्रोक्ता सप्तमी योगभूमिका । अगम्या वचसाँ शान्ता सा सीमा सर्वभूमिषु ॥ ४१ ॥ लोकाऽनुवर्तनं त्यक्का त्यक्का देहाऽनुवर्तनम् । शास्त्राऽनुवर्तनं त्यक्का स्वाऽध्यासाऽपनयं कुरु ॥ ४२ ॥ ओङ्कार-

मात्रमखिलं विश्वप्राऽऽज्ञाऽऽदिलक्षणम् । वाच्यवाचकता भेदाऽभेदेनाऽनुपलब्धितः॥४३॥ अकारमात्रं विश्वस्स्यादुकारस्तैजसस्स्मृतः । प्राऽऽज्ञो मकार इत्येवं परिपश्येत्क्रमेण तु ॥ ४४ ॥ समाधिकालात्प्राऽगेव विचिन्त्याऽतिप्रयत्नतः । स्थूलसूक्ष्मक्रमात्सर्वं चिदात्मनि विलापयेत् ॥ ४५ ॥ चिदात्मानं नित्यशुद्धबुद्धमुक्तसदद्वयः । परमाऽऽनन्दसन्देहो वासुदेवोऽहमोमिति ॥ ४६ ॥ आदिमध्याऽवसानेषु दुःखं सर्वमिदं यतः । तस्मात्सर्वं परित्यज्य तत्त्वनिष्ठो भवाऽनघ ॥ ४७॥ अविद्यातिमिराऽतीतं सर्वाऽऽभासविवर्जितम् । आनन्दममलं शुद्धं मनोवाचामगोचरम् ॥ ४८ ॥ प्रज्ञानघनमानन्दं ब्रह्माऽस्मीति विभावयेत् ॥ ४९ ॥ इत्युपनिषत् ॥ ॐ सह नाववत्विति शान्तिः ॥ हरिः ॐ तत्सत् ॥ इत्यक्ष्युपनिषत्समाप्ता ॥

अथाऽध्यात्मोपनिषत् ॥ यत्राऽन्तर्याम्यादिभेदस्तत्त्वतो न हि युज्यते। निर्भेदं परमाऽद्वैतं स्वमात्रमवशिष्यते ॥ ॐ पूर्णमद इति शान्तिः ॥ हरिः ओमन्तश्शरीरे निहितो गुहायामज एको नित्यमस्य पृथिवी शरीरं यः पृथिवीमन्तरे सञ्चरन्यं पृथिवी न वेद। यस्याऽऽपश्शरीरं यो अपोऽन्तरे सञ्चरन्यमापो न विदुः। यस्य तेजश्शरीरं यस्तेजोऽन्तरे सञ्चरन्यं तेजो न वेद। यस्य वायुश्शरीरं यो वायुमन्तरे सञ्चरन्यं वायुर्न वेद। यस्याऽऽकाशश्शरीरं य आकाशमन्तरे सञ्चरन्यमाकाशो न वेद। यस्य मनश्शरीरं यो मनोऽन्तरे सञ्चरन्यं मनो न वेद। यस्य बुद्धिश्शरीरं यो बुद्धिमन्तरे सञ्चरन्यं बुद्धिर्न वेद। यस्याऽहङ्कारश्शरीरं योऽहङ्कारमन्तरे सञ्चरन्यमहङ्कारो न वेद। यस्य चित्तं शरीरं यश्चित्तमन्तरे सञ्चरन्यं चित्तं न वेद। यस्याऽव्यक्तं शरीरं योऽव्यक्त-

मन्तरे सञ्चरन्यमव्यक्तं न वेद । यस्याऽक्षरं शरीरं योऽक्षरमन्तरे सञ्चरन्यमक्षरं न वेद । यस्य मृत्युश्शरीरं यो मृत्युमन्तरे सञ्चरन्यं मृत्युर्न वेद । स एष सर्वभूताऽन्तराऽऽत्माऽपहतपाप्मा दिव्यो देव एको नाराऽयणः । अहं ममेति यो भावो देहाऽक्षाऽऽदावनात्मनि । अध्यासोऽयं निरस्तव्यो विदुषा ब्रह्मनिष्ठया ॥ १ ॥ ज्ञात्वा स्वं प्रत्यगात्मानं बुद्धितद्वृत्तिसाक्षिणम् । सोऽहमित्येव तद्वृत्या स्वाऽन्यत्राऽऽत्ममतिं त्यजेत् ॥ २ ॥ लोकाऽनुवर्तनं त्यक्त्वा त्यक्त्वा देहाऽनुवर्तनम् । शास्त्राऽनुवर्तनं त्यक्त्वा स्वाऽध्यासाऽपनयं कुरु ॥ ३ ॥ स्वाऽऽत्मन्येव सदा स्थित्या मनो नश्यति योगिनः । युक्त्या श्रुत्या स्वाऽनुभूत्या ज्ञात्वा सार्वाऽऽत्म्यमात्मनः ॥ ४ ॥ निद्राया लोकवार्तायाश्शब्दादेरात्मविस्मृतेः । क्व चिन्नाऽवसरं दत्त्वा चिन्तयाऽऽत्मानमात्मनि ॥ ५ ॥ मातापित्रोर्मलोद्भूतं

मलमाँसमयं वपुः । त्यक्त्वा चण्डालवद्दूरं ब्रह्म भूय कृती भव ॥ ६ ॥ घटाऽऽकाशं महाऽऽकाश इवाऽऽत्मानं पराऽऽत्मनि । विलाप्याऽखण्डभावेन तूष्णीं भव सदा मुने ॥ ७ ॥ स्वप्रकाशमधिष्ठानं स्वयम्भूय सदा(ऽऽ)त्मना । ब्रह्माऽण्डमपि पिण्डाऽण्डं त्यज्यतां मलभाण्डवत् ॥ ८ ॥ चिदात्मनि सदाऽऽनन्दे देहरूढामहन्धियम् । निवेश्य लिङ्गमुत्सृज्य केवलो भव सर्वदा ॥ ९ ॥ यत्रैष जगदाभासो दर्पणाऽन्तःपुरं यथा । तद्ब्रह्माऽहमिति ज्ञात्वा कृतकृत्यो भवाऽनघ ॥ १० ॥ अहङ्कारग्रहान्मुक्तस्स्वरूपमुपपद्यते । चन्द्रवद्विमलः पूर्णस्सदाऽऽनन्दस्स्वयम्प्रभः ॥ ११ ॥ क्रियानाशाद्भवेच्चिन्तानाशोऽस्माद्वासनाक्षयः । वासनाप्रक्षयो मोक्षस्स जीवन्मुक्तिरिष्यते ॥ १२ ॥ सर्वत्र सर्वतस्सर्वब्रह्ममात्राऽवलोकनम् । सद्भावभावनादार्ढ्याद्वासनालयमश्नुते ॥ १३ ॥

प्रमादो ब्रह्मनिष्ठायां न कर्तव्यः कदा च न। प्रमादो मृत्युरित्याहुर्विद्यायां ब्रह्मवादिनः ॥ १४ ॥ यथाऽपकृष्टं शैवालं क्षणमात्रं न तिष्ठति । आवृणोति तथा माया प्राऽऽज्ञं वाऽपि पराऽङ्मुखम् ॥ १५ ॥ जीवतो यस्य कैवल्यं विदेहोऽपि स केवलः । समाधिनिष्ठतामेत्य निर्विकल्पो भवाऽनघ ॥ १६ ॥ अज्ञानहृदयग्रन्थेर्निश्शेषविलयस्तदा । समाधिना विकल्पेन यदाऽद्वैताऽऽत्मदर्शनम् ॥ १७ ॥ अत्राऽऽत्मत्वं दृढीकुर्वन्नहमादिषु सन्त्यजन् । उदासीनतया तेषु तिष्ठेद्घटपटाऽऽदिवत् ॥ १८ ॥ ब्रह्माऽऽदिस्तम्बपर्यन्तं मृषामात्रा उपाऽऽधयः । ततः पूर्णं स्वमात्मानं पश्येदेकाऽऽत्मना स्थितम् ॥ १९ ॥ स्वयं ब्रह्मा स्वयं विष्णुस्स्वयमिन्द्रस्स्वयं शिवः । स्वयं विश्वमिदँ सर्वँ स्वस्मादन्यन्न किं च न ॥ २० ॥ स्वाऽऽत्मन्यारोपिताऽशेषाऽऽभासवस्तुनिरासतः ।

स्वयमेव परम्ब्रह्म पूर्णमद्वयमक्रियम् ॥ २१ ॥ असत्कल्पो विकल्पोऽयं विश्वमित्येकवस्तुनि । निर्विकारे निराकारे निर्विशेषे भिदा कुतः ॥ २२ ॥ द्रष्टृदर्शनदृश्याऽऽदिभावशून्ये निरामये । कल्पाऽर्णव इवाऽत्यन्तं परिपूर्णे चिदात्मनि ॥ २३ ॥ तेजसीव तमो यत्र विलीनं भ्रान्तिकारणम् । अद्वितीये परे तत्त्वे निर्विशेषे भिदा कुतः ॥ २४ ॥ एकाऽऽत्मके परे तत्त्वे भेदकर्त्ता (कं तत्) कथं वसेत् । सुषुप्तौ सुखमात्रायां भेदः केनाऽवलोकितः ॥ २५ ॥ चित्तमूलो विकल्पोऽयं चित्ताऽभावे न कश्च न । अतश्चित्तं समाधेहि प्रत्यग्रूपे पराऽऽत्मनि ॥ २६ ॥ अखण्डाऽऽनन्दमात्मानं विज्ञाय स्वस्वरूपतः । बहिरन्तस्सदाऽऽनन्दरसाऽऽस्वादनमात्मनि ॥ २७ ॥ वैराग्यस्य फलं बोधो बोधस्योपरतिः फलम् । स्वाऽऽनन्दाऽनुभवाच्छान्तिरेषैवोपरतेः फलम् ॥२८॥ यद्युत्तरोत्तराऽभावे

पूर्वरूपं तु निष्फलम् । निवृत्तिः परमा तृप्तिरानन्दोऽनुपमस्स्वतः ॥२९॥ मायोपाऽऽधिर्जगद्योनिस्सर्वज्ञत्वाऽऽदिलक्षणः । पारोक्ष्यशबलस्सत्याऽऽद्यात्मकस्तत्पदाऽभिधः ॥ ३० ॥ आलम्बनतया भाति योऽस्मत्प्रत्ययशब्दयोः । अन्तःकरणसम्भिन्नबोधस्स त्वम्पदाऽभिधः ॥३१॥ मायाविद्ये विहायैव उपाऽऽधी परजीवयोः । अखण्डं सच्चिदानन्दं परम्ब्रह्म विलक्ष्यते ॥ ३२ ॥ इत्थं वाक्यैस्तथाऽर्थाऽनुसन्धानं श्रवणं भवेत् । युक्त्या सम्भावितत्वाऽनुसन्धानं मननं तु तत् ॥ ३३ ॥ ताभ्यां निर्विचिकित्सेऽर्थे चेतसस्थापितस्य तत् । एकतानत्वमेतद्धि निदिध्यासनमुच्यते ॥ ३४ ॥ ध्यातृध्याने परित्यज्य क्रमाद्ध्येयैकगोचरम् । निवातदीपवच्चित्तं समाधिरभिधीयते ॥ ३५ ॥ वृत्तयस्तु तदानीमप्यज्ञाता आत्मगोचराः । स्मरणादनुमीयन्ते व्युत्थितस्य समुत्थिताः ॥ ३६ ॥

अनादाविह सँसारे सञ्चिताः कर्मकोटयः । अनेन विलयं यान्ति शुद्धो धर्मो विवर्द्धते ॥ ३७ ॥ धर्ममेघमिमं प्राऽऽहुस्समाधिं योगवित्तमाः । वर्षत्येष (व) यथा धर्मोऽमृत-धारास्सहस्रशः ॥ ३८ ॥ अमुना वासनाजाले निश्शेषं प्रविलापिते । समूलोन्मूलिते पुण्यपापाऽऽख्ये कर्मसञ्चये ॥३९॥ वाक्यमप्रतिबद्धं सत्प्राऽक्परोक्षाऽवभासिते । कराऽऽम-लकवद्बोधमपरोक्षं प्रसूयते ॥ ४० ॥ वासनाऽनुदयो भोग्ये वैराग्यस्य तदाऽवधिः । अहम्भावोदयाऽभावो बोधस्य परमाऽवधिः ॥४१॥ लीनवृत्तेरनुत्पत्तिर्मर्यादोपरतेस्तु सा । स्थितप्रज्ञो यतिरयं यस्सदाऽऽनन्दमश्नुते ॥ ४२ ॥ ब्रह्मण्येव विलीनाऽऽत्मा निर्विकारो विनिष्क्रियः । ब्रह्माऽऽत्मनोश्शोधितयोरेकभावाऽवगाहिनि ॥ ४३ ॥ निर्विकल्पा च चिन्मात्रा वृत्तिः प्रज्ञेति कथ्यते । सा सर्वदा भवेद्यस्य स जीवन्मुक्त इष्यते ॥ ४४ ॥

देहेन्द्रियेष्वहम्भाव इदम्भावस्तदन्यके । यस्य नो भवतः क्वाऽपि स जीवन्मुक्त इष्यते ॥ ४५ ॥ न प्रत्यग्ब्रह्मणोर्भेदं कथाऽपि ब्रह्मसर्गयोः । प्रज्ञया यो विजानाति स जीवन्मुक्त इष्यते ॥ ४६ ॥ साधुभिः पूज्यमानेऽस्मिन्पीड्यमानेऽपि दुर्जनैः । सम-भावो भवेद्यस्य स जीवन्मुक्त इष्यते ॥ ४७ ॥ विज्ञातब्रह्मतत्त्वस्य यथापूर्वं न सँसृतिः । अस्ति चेन्न स विज्ञातब्रह्मभावो बहिर्मुखः ॥ ४८ ॥ सुखाऽऽद्यनुभवो यावत्तावत्प्रा-ऽऽरब्धमिष्यते । फलोदयः क्रियापूर्वो निष्क्रियो न हि कुत्र चित् ॥४९॥ अहं ब्रह्मेति विज्ञानात्कल्पकोटिशताऽर्जितम् । संञ्चितं विलयं याति प्रबोधात्स्वप्नकर्मवत् ॥ ५० ॥ स्वमसङ्गमुदासीनं परिज्ञाय नभो यथा । न श्लिष्यते यतिः किं चित्कदा चिद्भाविक-र्मभिः ॥ ५१ ॥ न नभो घटयोगेन सुरागन्धेन लिप्यते । तथाऽऽत्मोपाधियोगेन तद्ध-

मैनैव लिप्यते ॥५२॥ ज्ञानोदयात्पुराऽऽरब्धं कर्म ज्ञानान्न नश्यति । अदत्त्वा स्वफलं लक्ष्यमुद्दिश्योत्सृष्टबाणवत् ॥ ५३ ॥ व्याघ्रबुद्ध्या विनिर्मुक्तो बाणः पश्चात्तु गोमतौ । न तिष्ठति भिनत्त्येव लक्ष्यं वेगेन निर्भरम् ॥ ५४ ॥ अजरोऽस्म्यमरोऽस्मीति य आत्मानं प्रपद्यते । तदाऽऽत्मना तिष्ठतोऽस्य कुतः प्राऽऽरब्धकल्पना ॥ ५५॥ प्राऽऽरब्धं सिध्यति तदा यदा देहाऽऽत्मना स्थितिः । देहाऽऽत्मभावो नैवेष्टः प्राऽऽरब्धं त्यज्य-तामतः ॥ ५६ ॥ प्राऽऽरब्धकल्पनाऽप्यस्य देहस्य भ्रान्तिरेव हि । अध्यस्तस्य कुत-स्तत्त्वमसत्यस्य कुतो जनिः ॥ ५७ ॥ अजातस्य कुतो नाशः प्राऽऽरब्धमसतः कुतः। ज्ञानेनाऽज्ञानकार्यस्य समूलस्य लयो यदि ॥ ५८ ॥ तिष्ठत्ययं कथं देह इति शङ्का-वतो जडान् । समाधातुं बाह्यदृष्ट्या प्राऽऽरब्धं वदति श्रुतिः ॥ ५९ ॥ न तु देहाऽऽ-

दिसत्यत्वबोधनाय विपश्चिताम् । परिपूर्णमनाद्यन्तमप्रमेयमविक्रियम् ॥ ६० ॥ सद्घनं चिद्घनं नित्यमानन्दघनमव्ययम् । प्रत्यगेकरसं पूर्णमनन्तं सर्वतोमुखम् ॥ ६१ ॥ अहेयमनुपाऽऽदेयमनाधेयमनाश्रयम् । निर्गुणं निष्क्रियँ सूक्ष्मं निर्विकल्पं निरञ्जनम् ॥६२॥ अनिरूप्यस्वरूपं यन्मनोवाचामगोचरम् । सत्स(त्य)मृद्धँ स्वतस्सिद्धँ शुद्धं बुद्धमनीदृशम् ॥ ६३ ॥ एकमेवाऽद्वयं ब्रह्म नेह नानाऽस्ति किं च न । स्वाऽनुभूत्या स्वयं ज्ञात्वा स्वमात्मानमखण्डितम् ॥ ६४ ॥ ससिद्धस्सुसुखं तिष्ठ निर्विकल्पाऽऽत्मनाऽऽत्मनि । क्व गतं केन वा नीतं कुत्र लीनमिदं जगत् ॥ ६५ ॥ अधुनैव मया दृष्टं नाऽस्ति किं महदद्भुतम् । किं हेयं किमुपाऽऽदेयं किमन्यत्किं विलक्षणम् ॥ ६६ ॥ अखण्डाऽऽनन्दपीयूषपूर्णब्रह्ममहाऽर्णवे । न किं चिदत्र पश्यामि न शृणोमि न वेद्म्य-

हम् ॥ ६७ ॥ स्वाऽऽत्मनैव सदाऽऽनन्दरूपेणाऽस्मि स्वलक्षणः । असङ्गोऽहमनङ्गो-ऽहमलिङ्गोऽहमहँ हरिः ॥ ६८ ॥ प्रशान्तोऽहमनन्तोऽहं परिपूर्णश्चिरन्तनः । अकर्त्ता-ऽहमभोक्ताऽहमविकारोऽहमव्ययः ॥ ६९ ॥ शुद्धो(द्ध)बोधस्वरूपोऽहं केवलोऽहँ सदा-शिवः । एतां विद्यामपान्तरतमाय ददौ । अपान्तरतमो ब्रह्मणे ददौ । ब्रह्मा घोराऽङ्गि-रसे ददौ । घोराऽङ्गिरा रैक्काय ददौ । रैक्को रामाय ददौ । रामस्सर्वेभ्यो भूतेभ्यो ददा-वित्येतन्निर्वाणाऽनुशासनं वेदाऽनुशासनं वेदाऽनुशासनमित्युपनिषत् ॥ ॐ पूर्णमद इति शान्तिः ॥ हरिः ॐ तत्सत् ॥ इति पारमाऽर्थिकाऽध्यात्मोपनिषत्समाप्ता ॥

अथ कुण्डिकोपनिषत् ॥ कुण्डिकोपनिषत्ख्यातपरिव्राजकसन्ततिः । यत्र विश्रा-न्तिमगमत्तद्रामपदमाश्रये ॥१॥ ओमाप्यायन्त्विति शान्तिः ॥ हरिः ॐ ब्रह्मचर्याऽऽश्रमे

क्षीणे गुरुशुश्रूषणे रतः । वेदानधीत्याऽनुज्ञात उच्यते गुरुणाऽऽश्रमी ॥ १ ॥ दारमाहृत्य सदृशमग्निमाधाय शक्तितः । ब्राह्मीमिष्टिं यजेत्तासामहोरात्रेण निर्वपेत् ॥ २ ॥ संविभज्य सुतानर्थै ग्राम्यकामान्विसृज्य च । सञ्चरन्वनमार्गेण शुचौ देशे परिभ्रमन् ॥ ३ ॥ वायुभक्षोऽम्बुभक्षो वा विहितैः कन्दमूलकैः । स्वशरीरे समाप्याऽथ पृथिव्यां नाऽश्रु पातयेत् ॥ ४ ॥ सह तेनैव पुरुषः कथं सन्न्यस्त उच्यते । सनामधेयो यस्मिंस्तु कथं सन्न्यस्त उच्यते ॥ ५ ॥ तस्मात्फलविशुद्धाऽङ्गी सन्न्यासँ सँहिताऽऽत्मनाम् । अग्निवर्णं विनिष्क्रम्य वानप्रस्थं प्रपद्यते ॥ ६ ॥ लोकवद्भार्ययासक्तो वनं गच्छति संयतः । सन्त्यक्त्वा सँसृतिसुखमनुतिष्ठति किं मुधा ॥ ७ ॥ किं वा दुःखमनुस्मृत्य भोगाँस्त्यजति चोच्छ्रितान् । गर्भवासभयाद्भीतश्शीतोष्णाभ्यां तथैव च ॥ ८ ॥ गुह्यं

प्रवेष्टुमिच्छामि परं पदमनामयमिति । सन्न्यस्याऽग्निमपुनरावर्तनं यन्मृत्युर्जायमावह-मिति । अथाऽध्यात्ममन्त्राञ्जपेत् । दीक्षामुपेयात्काषायवासाः । कक्षोपस्थलोमानि वर्ज-येत् । उर्ध्व( गो ) बाहुर्विमुक्तमार्गो भवति । अनिकेतश्चरेद्भिक्षाऽऽशी । निदिध्यासनं दध्यात् । पवित्रं धारयेज्जन्तुसंरक्षणाऽर्थम् । तदपि श्लोका भवन्ति । कुण्डिकां चमसँ शिक्यं त्रिविष्टपमुपानहौ । शीतोपघातिनीं कन्थां कौपीनाऽऽच्छादनं तथा ॥९॥ पवित्रँ स्नानशाटीं च उत्तराऽऽसङ्गमेव च । अतोऽतिरिक्तं यत्किं( अन्यच्चाऽपेक्षपते किं ) चित्सर्वं तद्वर्जयेद्यतिः ॥ १० ॥ नदीपुलिनशायी स्याद्देवाऽगारेषु बाह्यतः । नाऽत्यर्थं सुखदुःखाभ्यां शरीरमुपतापयेत् ॥ ११ ॥ स्नानं पानं तथा शौचमद्भिः पूताभिराचरेत् । स्तूयमानो न तुष्येत निन्दितो न शपेत्परान् ॥ १२ ॥ भिक्षाऽऽदिवैदलं पात्रँ स्नानद्र-

व्यमवारितम् । एवं वृत्तिमुपाऽऽसीनो यतेन्द्रियो जपेत्सदा ॥ १३ ॥ विश्वाय मनुसंयोगं मनसा भावयेत्सुधीः । आकाशाद्वायुर्वायोर्ज्योतिर्ज्योतिष आपोऽद्भ्यः पृथिवी । एषां भूतानां ब्रह्म प्रपद्ये । अजरममरमक्षरमव्ययं प्रपद्ये । मय्यखण्डसुखाऽम्भोधौ बहुधा विश्ववीचयः । उत्पद्यन्ते विलीयन्ते मायामारुतविभ्रमात् ॥ १४ ॥ न मे देहेन सम्बन्धो मेघेनेव विहायसः । अतः कुतो मे तद्धर्मा जाग्रत्स्वप्नसुषुप्तिषु ॥ १५ ॥ आकाशवत्कल्पविदूरगोऽहमादित्यवद्भास्यविलक्षणोऽहम् । अहार्यवन्नित्यविनिश्चलोऽहमम्भोधिवत्पारविवर्जितोऽहम् ॥ १६ ॥ नाराऽयणोऽहं नरकाऽन्तकोऽहं पुराऽन्तकोऽहं पुरुषोऽहमीशः । अखण्डबोधोऽहमशेषसाक्षी निरीश्वरोऽहं निरहं च निर्ममः ॥ १७ ॥ तदभ्यासेन प्राऽणाऽपाऽनौ संयम्य तत्र श्लोका भवन्ति । वृषणाऽपाऽनयोर्मध्ये पाणी आस्थाय संश्रयेत् ।

सन्दश्य शनकैर्जिह्वां यवमात्रे विनिर्गताम् ॥ १८ ॥ माषमात्रीं तथा दृष्टिं श्रोत्रे स्थाप्य तथा भुवि । श्रवणे नासिके गन्धा यतस्स्वं न च संश्रयेत् ॥ १९ ॥ अथ शैवं पदं यत्र तद्ब्रह्म ब्रह्म तत्परम् । तदभ्यासेन लभ्येत पूर्वजन्माऽर्जिताऽऽत्मनाम् ॥२०॥ सम्भूतैर्वा-युसँश्रावैर्हृदयं तप उच्यते । ऊर्ध्वं प्रपद्यते देहाद्भित्त्वा मूर्धानमव्ययम् ॥ २१ ॥ स्वदे-हस्य तु मूर्धानं ये प्राऽऽप्य परमां गतिम् । भूयस्ते न निवर्तन्ते पराऽवराविदो जनाः ॥ २२ ॥ न साक्षिणँ साक्ष्यधर्मास्सँस्पृशन्ति विलक्षणम् । अविकारमुदासीनं गृहधर्माः प्रदीपवत् ॥ २३ ॥ जले वाऽपि स्थले वाऽपि लुठत्वेष जडाऽऽत्मकः । नाऽहं विलिप्ये तद्धर्मैर्घटधर्मैर्नभो यथा ॥ २४ ॥ निष्क्रियोऽस्म्यविकारोऽस्मि निष्कलोऽस्मि निराकृतिः । निर्विकल्पोऽस्मि नित्योऽस्मि निरालम्बोऽस्मि निर्द्वयः ॥ २५ ॥ सर्वाऽऽत्मकोऽहँ

699

सर्वोऽहं सर्वाऽतीतोऽहमद्वयः। केवलाऽखण्डबोधोऽहँ स्वाऽऽनन्दोऽहं निरन्तरः॥२६॥ स्वमेव सर्वतः पश्यन्मन्यमानस्स्वमद्वयम्। स्वाऽऽनन्दमनुभुञ्जानो निर्विकल्पो भवाम्यहम् ॥ २७ ॥ गच्छँस्तिष्ठन्नुपविशञ्छयानो वाऽन्यथाऽपि वा। यथेच्छया वसेद्विद्वानात्माऽऽरामस्सदा मुनिः ॥ २८ ॥ इत्युपनिषत् ॥ ओमाप्यायन्त्विति शान्तिः ॥ ह्रीरः ॐ तत्सत् ॥ इति कुण्डिकोपनिषत्समाप्ता ॥

**अथ सावित्र्युपनिषत् ॥** सावित्र्युपनिषद्वेद्यचित्सावित्रपदोज्वलम् । प्रतियोगिविनिर्मुक्तरामचन्द्रपदं भजे ॥ १ ॥ सावित्र्यात्मा पाशुपतं परं ब्रह्माऽवधूतकम्। त्रिपुरातपनं देवी त्रिपुरा कठभावना ॥ २ ॥ ओमाप्यायन्त्विति शान्तिः ॥ हरि ॐ कस्सविता का सावित्री अग्निरेव सविता पृथिवी सावित्री स यत्राऽग्निस्तत्पृथिवी यत्र वै (वा)

पृथिवी तत्राऽग्निस्ते द्वे योनी तदेकं मिथुनम् ॥ १ ॥ कस्सविता का सावित्री वरुण एव सविताऽऽपस्सावित्री स यत्र वरुणस्तदापो यत्र वा आपस्तद्वरुणस्ते द्वे योनिस्त-(नी त) देकं मिथुनम् ॥ २ ॥ कस्सविता का सावित्री वायुरेव सविताऽऽकाश-स्सावित्री स यत्र वायुस्तदाकाशो यत्र वा आकाशस्तद्वायुस्ते द्वे योनिस्त (नी त) देकं मिथुनम् ॥३॥ कस्सविता का सावित्री यज्ञ एव सविता छन्दाँसि सावित्री स यत्र यज्ञस्तत्र च्छन्दाँसि यत्र वा छन्दाँसि स यज्ञस्ते द्वे योनिस्त (नी त) देकं मिथुनम् ॥ ४ ॥ कस्सविता का सावित्री स्तनयित्नुरेव सविता विद्युत्सावित्री स यत्र स्तनयि-त्नुस्तद्विद्युत् यत्र वा विद्युत्तत्र स्तनयित्नुस्ते द्वे योनिस्त (नी त) देकं मिथुनम् ॥ ५ ॥ कस्सविता का सावित्री आदित्य एव सविता द्यौस्सावित्री स यत्राऽऽदि

त्यस्तद्द्यौर्यत्र वा द्यौस्तदादित्यस्ते द्वे योनिस्त( नी त )देकं मिथुनम् ॥ ६ ॥ कस्स-
विता का सावित्री चन्द्र एव सविता नक्षत्राणि सावित्री स यत्र चन्द्रस्तन्नक्षत्राणि
यत्र वा नक्षत्राणि स चन्द्रमास्ते द्वे योनिस्त( नी त )देकं मिथुनम् ॥ ७ ॥ कस्स-
विता का सावित्री मन एव सविता वाक् सावित्री स यत्र मनस्तद्वाक् यत्र वा वाक्
तन्मनस्ते द्वे योनिस्त ( नी त ) देकं मिथुनम् ॥ ८ ॥ कस्सविता का सावित्री
पुरुष एव सविता स्त्री सावित्री स यत्र पुरुषस्तत्स्त्री यत्र वा स्त्री स पुरुषस्ते द्वे योनि-
स्त ( नी त ) देकं मिथुनम् ॥ ९ ॥ तस्या एव प्रथमः पादो भूस्तत्सवितुर्वरेण्यमित्य-
ग्निर्वै वरेण्यमापो वरेण्यं चन्द्रमा वरेण्यम् । तस्या एव द्वितीयः पादो भर्गमयो भुवो
भर्गो देवस्य धीमहीत्यग्निर्वै भर्ग आदित्यो(पो) वै भर्गश्चन्द्रमा वै भर्गः। तस्या एष तृतीयः

पादस्त्वाधि (र्धि)यो यो नः प्रचोदयादिति स्त्री चैव पुरुषश्च प्रजनयतो यो वा एतां सावित्रीमेवं वेद स पुनर्मृत्युं जयति । बलाऽतिबलयोर्विराट् पुरुष ऋषिः । गायत्री छन्दः । गायत्री देवता । अकारोकारमकारा बीजाऽऽद्याः । क्षुधाऽऽदिनिरसने विनियोगः । क्लामित्यादिषडङ्गन्यासः ( ध्यानम् ) अमृतकरतलाऽऽग्रौ ( द्रौं ) सर्वसञ्जीवनाऽऽढ्यावघहरणसुदक्षौ वेदसारे मयूखे । प्रणवमयविकारौ भास्कराऽऽकारदेहौ सततमनुभवेऽहं तौ बलाऽति बलाऽन्तौ ( लेशौ ) ॥ ॐ ह्रीं बले महादेवि ह्रीं महाबले क्लीं चतुर्विधपुरुषाऽर्थसिद्धिप्रदे तत्सवितुर्वरदाऽऽत्मिके ह्रीं वरेण्यं भर्गो देवस्य वरदाऽऽत्मिके अतिबले सर्वदयामूर्ते बले सर्वक्षुच्छ्र(द्भ्र)मोपनाशिनि धीमहि धियो यो नर्जाते प्रचुर्यः ( र्यो ) प्रचोदयाऽऽत्मिके प्रणवशिरस्काऽऽत्मिके हुं फट् स्वाहा । एवं

विद्वान् कृतकृत्यो भवति सावित्र्या एव सलोकतां जयतीत्युपनिषत् ॥ ओमाप्यायन्त्विति शान्तिः ॥ हरि ॐ तत्सत् ॥ इति सावित्र्युपनिषत्समाप्ता ॥

अथाऽऽत्मोपनिषत् ॥ यत्र नाऽऽत्मप्रपञ्चोऽयमपह्नवपदं गतः। प्रतियोगिविनिर्मुक्तः परमाऽऽत्माऽवशिष्यते॥ ॐ भद्रं कर्णेभिरिति शान्तिः॥ हरिः ओमथाऽङ्गिरास्त्रिविधः पुरुषोऽजायताऽऽत्माऽऽन्तरात्मा परमाऽऽत्मा चेति। त्वक्चर्ममाँसरोमाऽङ्गुष्ठाऽङ्गुल्यपृष्ठवँशनखगुल्फोदरनाभिमेढ्रकट्यूरुकपोलश्रोत्रभ्रूललाटबाहुपार्श्वशिरोऽक्षीणि भवन्ति जायते म्रियत इत्येष आत्मा। अथाऽन्तरात्मा नाम पृथिव्यापस्तेजोवायुराकाशमिच्छाद्वेषसुखदुःखकाममोहविकल्पाऽ(ल्प)नादिस्मृतिलिङ्गोदात्ताऽनुदात्तह्रस्व (स्वर)दीर्घप्लुतस्खलितगर्जितस्फुटितमुदितनृत्तगीतवादित्रप्रलयविजृम्भिताऽऽदिभिश्श्रोता घ्राता रसयिता नेता

कर्त्ता विज्ञानाऽऽत्मा पुरुषः पुराणन्यायमीमाँसाधर्मशास्त्राणीति श्रवणघ्राणाऽऽकर्ष-णकर्मविशेषणं करोत्येषोऽन्तरात्मा । अथ परमाऽऽत्मा नाम । यथाऽक्षर उपासनीयः । स च प्राऽणाऽऽयामप्रत्याहारधारणाध्यानसमाधियोगाऽनुमानाऽऽत्मचिन्तकवटकणिका वा श्यामाकतण्डुलो वा वालाऽग्रक्षतसहस्रविकल्पनाऽऽदिभिस्स लभ्यते नो(सो)पलभ्यते न जायते न म्रियते न शुष्यति न क्लिद्यते न दह्यते न कम्पते न भिद्यते न च्छि(स्वि) द्यते निर्गुणस्साक्षिभूतश्शुद्धो निरवयवाऽऽत्मा केवलस्सूक्ष्मो निर्ममो निरञ्जनोनिर्विकार-श्शब्दस्पर्शरूपरसगन्धवर्जितो निर्विकल्पो निराकाङ्क्षस्सर्वव्यापी सोऽचिन्त्यो निर्वर्ण्यश्च पुनात्यशुद्धान्यपूतानि । निष्क्रियस्तस्य सँसारो नाऽस्ति । आत्मसंज्ञश्शिवश्शुद्ध एक एवा-ऽद्वयस्सदा । ब्रह्मरूपतया ब्रह्म केवलं प्रतिभासते ॥१॥ जगद्रूपतयाऽप्येतद्ब्रह्मैव प्रतिभा-

सते । विद्याऽविद्याऽऽदिभेदेन भावाऽभावाऽऽदिभेदतः ॥२॥ गुरुशिष्याऽऽदिभेदेन ब्रह्मैव प्रतिभासते । ब्रह्मैव केवलं शुद्धं विद्यते तत्त्वदर्शने ॥ ३ ॥ न च विद्या न चाऽविद्या न जगच्च न चाऽपरम् । सत्यत्वेन जगद्भानँ सँसारस्य प्रवर्तकम् ॥ ४ ॥ असत्यत्वेन भानं तु सँसारस्य निवर्तकम् । घटोऽयमिति विज्ञातुं नियमः को न्वपेक्षते ॥ ५ ॥ विना प्रमाणसुष्ठुत्वं यस्मिन्त्सति पदाऽर्थधीः । अयमात्मा नित्यसिद्धः प्रमाणे सति भासते ॥ ६ ॥ न देशं नाऽपि कालं वा न शुद्धिं वाऽप्यपेक्षते । देवदत्तोऽहमित्येतद्विज्ञानं निरपेक्षकम् ॥ ७ ॥ तद्वद्ब्रह्मविदोऽप्यस्य ब्रह्माऽहमिति वेदनम् । भानुनेव जगत्सर्वं भास्यते यस्य तेजसा ॥ ८ ॥ अनात्मकमसत्तुच्छं किं नु तस्याऽवभासकम् । वेदशास्त्रपुराणानि भूतानि सकलान्यपि ॥ ९ ॥ येनाऽर्थवन्ति तं किं नु विज्ञातारं

प्रकाशयेत् । क्षुधां देहव्यथां त्यक्त्वा बालः क्रीडति वस्तुनि ॥ १० ॥ तथैव विद्वान्रमते निर्ममो निरहँ सुखी । कामान्निष्कामरूपी सञ्चरत्येकचरो मुनिः ॥ ११ ॥ स्वाऽऽत्मनैव सदा तुष्टस्स्वयँ सर्वाऽऽत्मना स्थितः । निर्धनोऽपि सदा तुष्टोऽप्यसहायो महाबलः ॥ १२ ॥ नित्यतृप्तोऽप्यभुञ्जानोऽप्यसमस्समदर्शनः । कुर्वन्नपि न कुर्वाणश्चाऽभोक्ता फलभोग्यपि ॥ १३ ॥ शरीर्यप्यशरीर्येष परिच्छिन्नोऽपि सर्वगः । अशरीरँ सदा सन्तमिदं ब्रह्मविदं क चित् ॥ १४ ॥ प्रियाऽप्रिये न स्पृशतस्तथैव च शुभाऽशुभे । तमसा ग्रस्तवद्भानादग्रस्तोऽपि रविर्जनैः ॥ १५ ॥ ग्रस्त इत्युच्यते भ्रान्त्या ह्यज्ञात्वा वस्तुलक्षणम् । तद्वद्देहाऽऽदिबन्धेभ्यो विमुक्तं ब्रह्मवित्तमम् ॥ १६ ॥ पश्यन्ति देहिवन्मूढाश्शरीराऽऽभासदर्शनात् । अहिनि ( र्नि ) र्ल्वं-

  

यनीवाऽयं मुक्तदेहस्तु तिष्ठति ॥ १७ ॥ इतस्ततश्चाल्यमानो यत्किं चित्प्राऽणवायुना । स्रोतसा नीयते दारु यथा निम्नोन्नतस्थलम् ॥ १८ ॥ दैवेन नीयते देहो यथा कालो-पभुक्तिषु । लक्ष्याऽलक्ष्यगतिं त्यक्त्वा यस्तिष्ठेत्केवलाऽऽत्मना ॥ १९ ॥ शिव एव स्वयँ साक्षादयं ब्रह्मविदुत्तमः । जीवन्नेव सदा मुक्तः कृताऽर्थो ब्रह्मवित्तमः ॥ २० ॥ उपा-ऽऽधिनाशाद् ब्रह्मैव सद् ब्रह्माऽप्येति निर्द्वयम्। शैलूषो वेषसद्भावाऽभावयोश्च यथा पुमान् ॥ २१ ॥ तथैव ब्रह्मविच्छ्रेष्ठस्सदा ब्रह्मैव नाऽपरः । घटे नष्टे यथा व्योम व्योमैव भवति स्वयम् ॥ २२ ॥ तथैवोपाऽऽधिविलये ब्रह्मैव ब्रह्मवित्स्वयम् । क्षीरं क्षीरे यथा क्षिप्तं तैलं तैले जलं जले ॥ २३ ॥ संयुक्तमेकतां याति तथाऽऽत्मन्यात्मविन्मुनिः । एवं विदेहकैवल्यं सन्मात्रत्वमखण्डितम् ॥ २४ ॥ ब्रह्मभावं प्रपद्यैष यतिर्नाऽऽवर्तते

पुनः । सदाऽऽत्मकत्वविज्ञानदग्धाऽविद्याऽऽदिवर्ष्मणः ॥ २५ ॥ अमुष्य ब्रह्मभूतत्वाद् ब्रह्मणः कुत उद्भवः । मायाक्लृप्तौ बन्धमोक्षौ न स्तस्स्वाऽऽत्मनि वस्तुतः ॥ २६ ॥ यथा रज्जौ निष्क्रियायां सर्पा( र्वा )ऽऽभासविनिर्गमौ । अवृतेस्सदसत्त्वाभ्यां वक्तव्ये बन्धमोक्षणे ॥ २७ ॥ नाऽऽवृतिर्ब्रह्मणः का चिदन्याऽभावादनावृतम् । अस्तीति प्रत्ययो यश्च यश्च नाऽस्तीति वस्तुनि ॥ २८ ॥ बुद्धेरेव गुणावेतौ न तु नित्यस्य वस्तुनः । अतस्तौ मायया क्लृप्तौ बन्धमोक्षौ न चाऽऽत्मनि ॥ २९ ॥ निष्कले निष्क्रिये शान्ते निरवद्ये निरञ्जने । अद्वितीये परे तत्त्वे व्योमवत्कल्पना कुतः ॥३०॥ न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः । न मुमुक्षुर्न वै मुक्त इत्येषा परमाऽर्थता ॥३१॥ इत्युपनिषत् ॥ॐ भद्रं कर्णेभिरिति शान्तिः ॥ हरिः ॐ तत्सत् ॥ इत्यात्मोपनिषत्समाप्ता ॥

अथ पाशुपतब्रह्मोपनिषत् ॥ पाशुपतब्रह्मविद्यासंवेद्यं परमाऽक्षरम् । परमाऽऽनन्दसम्पूर्णरामचन्द्रपदं भजे ॥ ॐ भद्रं कर्णेभिरिति शान्तिः ॥ हरिः ओमथ ह वै स्वयम्भूर्ब्रह्मा प्रजास्सृजानीति कामकामो जायते कामेश्वरो वैश्रवणः । वैश्रवणो ब्रह्मपुत्रो वालखिल्यस्स्वयम्भुवं परिपृच्छति जगतां का विद्या का देवता जाग्रत्तुरीययोरस्य को देवो यानि तस्य वशानि कालाः कियत्प्रमाणाः कस्याऽऽज्ञया रविचन्द्रग्रहाऽऽदयो भासन्ते कस्य महिमा गगनस्वरूप एतदहँ श्रोतुमिच्छामि नाऽन्यो जानाति त्वं ब्रूहि ब्रह्मन् । स्वयम्भूरुवाच कृत्स्नजगतां मातृका विद्या द्वित्रिवर्णसहिता द्विवर्णमाता त्रिवर्णसहिता । चतुर्मात्राऽऽत्मकोङ्कारो मम प्राऽणाऽऽत्मिका देवता । अहमेव जगत्त्रयस्यैकः ( पतिः ) । मम वशानि सर्वाणि । युगान्यपि अहोरात्रादयो

मत्संवर्धिताः कालाः। मम रूपा रवेस्तेजश्चन्द्रनक्षत्रग्रहतेजाँसि च। गगनो मम त्रिश-
क्तिमायास्वरूपः नाऽन्यो मदस्ति। तमोमायाऽऽत्मको रुद्रस्सात्विकमायाऽऽत्मको विष्णू
राजसमायाऽऽत्मको ब्रह्मा। इन्द्राऽऽदयस्तामसराजसाऽऽत्मिका न सात्विकः कोऽपि
अघोरस्सर्वसाधारणस्वरूपः। समस्तयागानाँ रुद्रः पशु(पतिः)कर्त्ता। रुद्रो यागदेवः
विष्णुरध्वर्युः होतेन्द्रो देवता यज्ञभुग् मानसं ब्रह्म माहेश्वरं ब्रह्म मानसँ हँसस्सोऽहँ
हँस इति। तन्मययज्ञो नादाऽनुसन्धानम्। तन्मयाविकारो जीवः। परमाऽऽत्मस्व-
रूपो हँसः। अन्तर्बहिश्चरति हँसः। अन्तर्गतोऽनवकाशाऽन्तर्गतसुपर्णस्वरूपो हँसः।
षण्णवतितत्त्वतन्तुवद्व्यक्तं चित्सूत्रत्रयचिन्मयलक्षणं नवतत्त्वत्रिरावृतं ब्रह्मविष्णुमहेश्वरा-
ऽऽत्मकमग्नित्रयकलोपेतं चिद्ग्रन्थिबन्धनम्। अद्वैतग्रन्थिः यज्ञसाधारणाऽङ्गं बहिरन्तर्ज्व-

लनं यज्ञाऽङ्गलक्षणब्रह्मस्वरूपो हँसः। उपवीतलक्षणसूत्रब्रह्मगा यज्ञाः। ब्रह्माऽङ्गलक्षण-युक्तो यज्ञसूत्रम्। तद्ब्रह्मसूत्रम्। यज्ञसूत्रसम्बन्धी ब्रह्मयज्ञः। तत्स्वरूपोऽङ्गानि मात्राणि। मनोयज्ञस्य हँसो यज्ञसूत्रम्। प्रणवं ब्रह्मसूत्रं ब्रह्मयज्ञमयम्। प्रणवाऽन्तर्वर्ती हँसो ब्रह्म-सूत्रम्। तदेव ब्रह्मयज्ञमयं मोक्षक्रमम्। ब्रह्मसन्ध्यांक्रिया मनोयागः। सन्ध्याक्रिया मनोया-गस्य लक्षणम्। यज्ञसूत्रप्रणवब्रह्मयज्ञक्रियायुक्तो ब्राह्मणः। ब्रह्मचर्येण चरन्ति देवाः। हँससूत्रचर्या यज्ञाः। हँसप्रणवयोरभेदः। हँसस्य प्राऽर्थनास्त्रिकालाः। त्रिकालास्त्रिवर्णाः। त्रेताऽग्न्यनुसन्धानो यागः। त्रेताऽग्न्यात्माऽऽकृतिवर्णोङ्कारहँसाऽनुसन्धानोऽन्तर्यागः। चित्स्वरूपवत्तन्मयं तुरीयस्वरूपम्। अन्तरादित्ये ज्योतिस्स्वरूपो हँसः। यज्ञाऽङ्गं ब्रह्म-सम्पत्तिः। ब्रह्मप्रवृत्तौ तत्प्रणवहँससूत्रेणैव ध्यानमाचरन्ति। प्रोवाच पुनस्स्वयम्भुवं

प्रतिजानीते ब्रह्मपुत्रो ऋषिर्वालखिल्यः। हँससूत्राणि कतिसङ्ख्यानि कियद्वा प्रमाणम्। हृद्यादित्यमरीचीनां पदँ षण्णवतिः। चित्सूत्रघ्राणयोस्स्वर्निर्गता प्रणवधारा षडङ्गुलदशाऽशीतिः। वामबाहुर्दक्षिणकट्योरन्तश्चरति हँसः परमाऽऽत्मा। ब्रह्मगुह्यप्रकारो नाऽन्यत्र विदितः। ये जानन्ति तेऽमृतफलकाः। सर्वकालँ हँसं (न) प्रकाशकम्। प्रणवहँसाऽन्तर्ध्या(र्या)नप्रकृतिं विना न मुक्तिः। नव सूत्रान्परिचर्चितान्। तेऽपि यद्ब्रह्म चरन्ति। अन्तरादित्यं न ज्ञातं मनुष्याणाम्। जगदादित्यो रोचत इति ज्ञात्वा ते मर्त्या विबुधास्तपनप्राऽर्थनायुक्ता आचरन्ति। वाजपेयः पशुहर्त्ता अध्वर्युरिन्द्रो देवता अहिँसा धर्मयागः। परमहँसोऽध्वर्युः। परमाऽऽत्मा देवता पशुपतिः ब्रह्मोपनिषदो ब्रह्म। स्वाऽध्याययुक्ता ब्राह्मणाश्चरन्ति। अश्वमेधो महायज्ञकथा। तद्राज्ञा ब्रह्मचर्य-

माचरन्ति । सर्वेषा पूर्वोक्तब्रह्मयज्ञक्रमं मुक्तिक्रममिति ब्रह्मपुत्रः प्रोवाच । उदितो हँस ऋषिः । स्वयम्भूस्तिरो दधे । रुद्रो ब्रह्मोपनिषदो हँसज्योतिः पशुपतिः प्रणवस्तारकस्स एवं वेद । हँसाऽऽत्ममालिकावर्णब्रह्मकालप्रचोदिता । परमाऽऽत्मा पुमानिति ब्रह्मसम्पत्तिकारिणी ॥ १ ॥ अध्यात्मब्रह्मकल्पस्याऽऽकृतिः कीदृशी कया । ब्रह्मज्ञानप्रभासन्ध्याकालो गच्छति धीमताम् । हँसाऽऽख्यो देवमात्माऽऽख्यमात्मतत्त्वप्रजा कथम् ॥ २ ॥ अन्तःप्रणवनादाऽऽख्यो हँसः प्रत्ययबोधकः । अन्तर्गतप्रमागूढं ज्ञाननालं विराजितम् ॥ ३ ॥ शिवशक्त्यात्मकँ रूपं चिन्मयाऽऽनन्दवेदितम् । नादबिन्दुकला त्रीणि नेत्रं विश्वविचेष्टितम् ॥ ४ ॥ त्रियङ्गा ( यागा ) नि शिखा त्रीणि द्वित्राणां साङ्ख्यमाकृतिः । अन्तर्गूढप्रमा हँसः प्रभाणान्निर्गतं बहिः ॥ ५ ॥ ब्रह्मसूत्रपदं ज्ञेयं

ब्राह्मयं विध्युक्तलक्षणम् । हँसाऽकैंप्रणवध्यानमित्युक्तो ज्ञानसागरे ॥ ६ ॥ एतद्विज्ञान-
मात्रेण ज्ञानसागरपारगः । स्वतश्शिवः पशुपतिस्साक्षी सर्वस्य सर्वदा ॥ ७ ॥ सर्वेषां तु
मनस्तेन प्रेरितं नियमेन तु । विषये गच्छति प्राऽणश्चेष्टते वाग्वदत्यपि ॥ ८ ॥ चक्षुः
पश्यति रूपाणि श्रोत्रँ सर्वँ शृणोत्यपि। अन्यानि खानि सर्वाणि तेनैव प्रेरितानि तु ॥९॥
स्वँस्वं विषयमुद्दिश्य प्रवर्त्तन्ते निरन्तरम् । प्रवर्त्तकत्वं चाऽप्यस्य मायया न स्वभा-
वतः ॥ १० ॥ श्रोत्रमात्मनि चाऽध्यस्तँ स्वयं पशुपतिः पुमान् । अनुप्रविश्य श्रोत्रस्य
ददाति श्रोत्रताँ शिवः ॥ ११ ॥ मनस्त्वाऽऽत्मनि चाऽध्यस्तं प्रविश्य परमेश्वरः ।
मनस्त्वं तस्य सत्त्वस्थो ददाति नियमेन न तु ॥ १२ ॥ स एव विदितादन्यस्तथैवा-
ऽविदितादपि । अन्येषामिन्द्रियाणां तु कल्पितानामपीश्वरः ॥ १३ ॥ तत्तद्रूपमनु-

प्राऽऽप्य ददाति नियमेन तु । ततश्चक्षुश्च वाक्चैव मनश्चाऽन्यानि खानि च ॥ १४ ॥
न गच्छन्ति स्वयञ्ज्योतिस्स्वभावे परमाऽऽत्मनि । अकर्त्तृविषयप्रत्यक्प्रकाशँ स्वाऽऽत्म-
नैव तु ॥ १५ ॥ विना तर्कप्रमाणाभ्या ब्रह्म यो वेद वेद सः । प्रत्यगात्मा परञ्ज्यो-
तिर्माया सा तु महत्तमः ॥ १६ ॥ तथा सति कथं मायासम्भवः प्रत्यगात्मनि । तस्मा-
त्तर्कप्रमाणाभ्याँ स्वाऽनुभूत्या च चिद्घने ॥१७॥ स्वप्रकाशैकसँसिद्धे नाऽस्ति माया परा-
ऽऽत्मनि । व्यावहारिकदृष्ट्येयं विद्याऽविद्या न चाऽन्यथा ॥ १८ ॥ तत्त्वदृष्ट्या तु
नाऽस्त्येव तत्त्वमेवाऽस्ति केवलम् । व्यावहारिकदृष्टिस्तु प्रकाशाऽव्यभिचारतः ॥१९ ॥
प्रकाश एव सततं तस्मादद्वैत एव हि । अद्वैतमिति चोक्तिश्च प्रकाशाऽव्यभिचारतः
॥ २० ॥ प्रकाश एव सततं तस्मान्मौनँ हि युज्यते । अयमर्थो महान्यस्य स्वयमेव

प्रकाशितः ॥ २१ ॥ न स जीवो न च ब्रह्मा न चाऽन्यदपि किं च न । न तस्य वर्णा विद्यन्ते नाऽऽश्रमाश्च तथैव च ॥२२ ॥ न तस्य धर्मोऽधर्मश्च न निषेधो विधिर्न च। यदा ब्रह्माऽऽत्मकं सर्वं विभाति स्वत एव तु ॥ २३ ॥ तदा दुःखाऽऽदिभेदोऽयमाभासोऽपि न भासते । जगज्जीवाऽऽदिरूपेण पश्यन्नपि पराऽऽत्मवित् ॥ २४ ॥ न तत्पश्यति चिद्रूपं ब्रह्मवस्त्वेव पश्यति । धर्मधर्मित्ववार्ता च भेदे सति हि भिद्यते ॥ २५ ॥ भेदाऽभेदस्तथा भेदाऽभेदस्साक्षात्पराऽऽत्मनः । नाऽस्ति स्वाऽऽत्माऽतिरेकेण स्वयमेवाऽस्ति सर्वदा ॥ २६ ॥ ब्रह्मैव विद्यते साक्षाद्वस्तुतोऽवस्तुतोऽपि च । तथैव ब्रह्मविज्ज्ञानी किं गृण्हाति जहाति किम् ॥ २७ ॥ अधिष्ठानमनौपम्यमवाङ्मनसगोचरम् । यत्तदद्दृश्यमग्राह्यमगोत्रं रूपवर्जितम् ॥ २८ ॥ अचक्षुश्श्रोत्रमत्यर्थं तदपाणिपदं तथा।

नित्यं विभुँ सर्वगतँ सुसूक्ष्मं च तदव्ययम् ॥ २९ ॥ ब्रह्मैवेदममृतं तत्पुरस्ताद्ब्रह्मा-ऽऽनन्दं परमं चैव पश्चात् । ब्रह्माऽऽनन्दं परमं दक्षिणे च ब्रह्माऽऽनन्दं परमं चोत्तरं च ॥ ३० ॥ स्वाऽऽत्मन्येव स्वयँ सर्वँ सदा पश्यति निर्भयः । तदा मुक्तो न मुक्तश्च बन्ध ( द्ध ) स्यैव विमुक्ति ( क्त ) ता ॥ ३१ ॥ एवँरूपा परा विद्या सत्येन तपसाऽपि च । ब्रह्मचर्याऽऽदिभिर्धर्मैर्लभ्या वेदाऽन्तवर्त्मना ॥ ३२ ॥ स्वशरीरे स्वयञ्ज्योतिस्स्वरूपं पारमाऽर्थिकम् । क्षीणदोषाः प्रपश्यन्ति नेतरे मायया(ऽऽ)वृताः ॥३३ ॥ एवँ स्वरूपविज्ञानं यस्य कस्याऽस्ति योगिनः । कुत्र चिद्गमनं नाऽस्ति तस्य सम्पूर्णरूपिणः ॥३४॥ आकाश-मेकँ सम्पूर्णं कुत्र चिन्न हि गच्छति । तद्वद्ब्रह्माऽऽत्मविच्छ्रेष्ठः कुत्र चिन्नैव गच्छति ॥३५॥ अभक्ष्यस्य निवृत्त्या तु विशुद्धँ हृदयं भवेत् । आहारशुद्धौ चित्तस्य विशुद्धिर्भवति

स्वतः ॥ ३६ ॥ चित्तशुद्धौ क्रमाज्ज्ञानं त्रुट्यन्ते ग्रन्थयस्स्फुटम् । अभक्ष्यं ब्रह्मविज्ञानविहीनस्यैव देहिनः ॥ ३७ ॥ न सम्यग् ज्ञानिनस्तद्वत्स्वरूपँ सकलं खलु । अहमन्नँ सदाऽन्नाऽऽद इति हि ब्रह्मवेदनम् ॥ ३८ ॥ ब्रह्मविद्ग्रसति ज्ञानात्सर्वं ब्रह्माऽऽत्मनैव तु । ब्रह्मक्षत्राऽऽदिकँ सर्वं यस्य स्यादोदनँ सदा ॥३९॥ यस्योपसेचनं मृत्युस्तज्ज्ञानी तादृशः खलु । ब्रह्मस्वरूपविज्ञानाज्जगद्भोज्यं भवेत्खलु ॥ ४० ॥ जगदात्मतया भाति यदा भोज्यं भवेत्तदा । ब्रह्मस्वाऽऽत्मतया नित्यं भक्षितँ सकलं तदा ॥ ४१ ॥ यदाभासेन रूपेण जगद्भोज्यं भवेत्तु तत् । मानतस्स्वाऽऽत्मना भातं भक्षितं भवति ध्रुवम् ॥ ४२ ॥ स्वस्वरूँप स्वयं भुङ्क्ते नाऽस्ति भोज्यं पृथक् स्वतः । अस्ति चेदस्तितारूपं ब्रह्मैवाऽस्तित्वलक्षणम् ॥ ४३ ॥ अस्तितालक्षणा सत्ता सत्ता ब्रह्म न चाऽपरा । नाऽस्ति सत्ता-

ऽतिरेकेण नाऽस्ति माया च वस्तुतः ॥ ४४ ॥ योगिनामात्मनिष्ठानां माया स्वाऽऽत्मनि कल्पिता । साक्षिरूपतया भाति ब्रह्मज्ञानेन बाधिता ॥ ४५ ॥ ब्रह्मविज्ञानसम्पन्नः प्रतीतमाखिलं जगत् । पश्यन्नपि सदा नैव पश्यति स्वाऽऽत्मनः पृथक् ॥ ४६ ॥ इत्युपनिषत् ॥ ॐ भद्रं कर्णेभिरिति शान्तिः ॥ हरिः ॐ तत्सत् ॥ इति पाशुपतब्रह्मोपनिषत्समाप्ता ॥

**अथ परब्रह्मोपनिषत्** ॥ परब्रह्मोपनिषदि वेद्याऽऽखण्डसुखाऽऽकृति । परिव्राजकहृद्रेयं परितत्त्वैपदं भजे ॥१॥ ॐ भद्रं कर्णेभिरिति शान्तिः ॥ हरिः ओमथ हैनं महाशालश्शौनकोऽङ्गिरसं भगवन्तं पिप्पलाऽऽदं विधिवदुपसन्नः प्रपच्छ दिव्ये ब्रह्मपुरे के सम्प्रतिष्ठिता भवन्ति । कथँ सृज्यन्ते । नि(जन्नि)त्याऽऽत्मन एष महिमा । विभज्य एष महिमा विभुः ।

क एषः। तस्मै स होवाच। एतत्सत्यं यत्प्रब्रवीमि ब्रह्मविद्यां वरिष्ठां देवेभ्यः प्राऽणेभ्यः। परब्रह्मपुरे विरजं निष्कलँ शुभ्रमक्षरं विरजं ( शोकं ) विभाति। स नियच्छति मधुकरश्श्चेव विकर्मकः। अकर्मा स्वापीव स्थितः। कर्मक ( र ): कर्षकवत्फलमनुभवति। कर्ममर्मज्ञात् कर्म करोति। कर्ममर्म ज्ञात्वा कर्म कुर्यात्। को जालं विक्षिपेदेको नै ( केनै ) नमपकर्षत्यपकर्षति। प्राऽणदेवताश्चत्वारः। तास्सर्वा नाड्यस्सुषुप्तश्येनाऽऽकाशवत्। यथा श्येनः खमाश्रित्य याति स्वमालयं कुलाऽयम्। एवँ सुषुप्तं ब्रूत। अयं च परश्च स सर्वत्र हिरण्मये परे कोशे। अमृता ह्येषा नाडी त्रयँ सञ्चरति। तस्य त्रिपादं ब्रह्म। एषाऽत्रेष्य ततोऽनुतिष्ठति। अन्यत्र ब्रूत। अयं च परं च सर्वत्र हिरण्मये परे कोशे। यथैष देवदत्तो यष्ट्या च ताड्यमानो नैवेति। एवमिष्टापूर्तकर्म शुभाऽशुभैर्न लिप्यते।

यथा कुमारको निष्काम आनन्दमभियाति । य (त) थैष देवस्स्वप्न आनन्दमभियाति । वेद एवं परञ्ज्योतिः । ज्योतिषा मा ज्योतिरानन्दयत्येवमेव । तत्परं यच्चित्तं परमाऽऽत्मानमानन्दयति । शुभ्रवर्णमाजायतेश्वरात् । भूयस्तेनैव मार्गेण स्वप्नस्थानं निय (ग) च्छति । जलूकाऽभाववद्यथाकाममाजायतेश्वरात् । तावताऽऽत्मानमानन्दयति । परसन्धि यदरसन्धति । तत्परं नाऽपरं त्यजति । तदैव कपालाऽष्टकँ सँन्धाय य एष स्तन इवाऽवलम्बते सेन्द्रयोनिस्स वेदयोनिरिति । अत्र जाग्रति । शुभाऽशुभाऽतिरिक्तश्शुभाऽशुभैरपि कर्मभिर्न लिप्यते । य एष देवोऽन्यदेवस्य सम्प्रसादोऽन्तर्याम्यसङ्गचिद्रूपः पुरुषः । प्रणवहँसः परं ब्रह्म । न प्राऽणहँसः । प्रणवो जीवः । आद्या देवता निवेदयति । य एवं वेद । तत्कथं निवेदयते । जीवस्य ब्रह्मत्वमापादयति । सत्त्वम-

थाऽस्य पुरुषस्याऽन्तश्शिखोपवीतत्वं ब्राह्मणस्य । मुमुक्षोरन्तश्शिखोपवीतधारणम् । बहिर्लक्ष्यमाणशिखायज्ञोपवीतधारणं कर्मिणो गृहस्थस्य । अन्तरुपवीतलक्षणं तु बहिस्त-न्तुवदव्यक्तमन्तस्तत्त्वमेलनम् । न सन्नाऽसन्न सदसद्भिन्नाऽभिन्नं न चोभयम् । न सभागं न निर्भागं न चाऽप्युभयरूपकम् ॥ ब्रह्माऽऽत्मैकत्वविज्ञानहेयं मिथ्यात्वकारणादिति । पञ्चपादब्रह्मणो न किं च न । चतुष्पादन्तर्वर्तिनोऽन्तर्जीवब्रह्मणश्चत्वारि स्थानानि । नाभिहृदयकण्ठमूर्धसु जाग्रत्स्वप्नसुषुप्तितुरीयाऽवस्थाः । आहवनीयगार्हपत्यदक्षिणस-भ्याऽग्निषु । जागरिते ब्रह्मा स्वप्ने विष्णुस्सुषुप्तौ रुद्रस्तुरीयमक्षरं चिन्मयम् । तस्मा-च्चतुरवस्था । चतुरङ्गुलवेष्टनमिव षण्णवतितत्त्वानि तन्तुवद्विभज्य तदा हि तं त्रिगु-णीकृत्य द्वात्रिंशत्तत्त्वनिष्कर्षमापाद्य ज्ञानपूतं त्रिगुणस्वरूपं त्रिमूर्तित्वं पृथग्वि-

ज्ञाय नवब्रह्माऽऽख्यनवगुणोपतं ज्ञात्वा नवमानमितास्त्रिः पुनस्त्रिगुणीकृत्य सूर्येन्द्व-ग्निकलास्वरूपत्वेनैकीकृत्याऽऽद्यन्तरैकत्वमपि मध्ये त्रिरावृत्य ब्रह्मविष्णुमहेश्वरत्वमनु-सन्धायाऽऽद्यन्तमेकीकृत्य चिद्ग्रन्थावद्वैतग्रन्थिं कृत्वा नाभ्यादिब्रह्मबिलप्रमाणं पृथक्-पृथक् सप्तविंशतितत्त्वसम्बन्धं त्रिगुणोपेतं त्रिमुर्तिलक्षणलक्षितमप्येकत्वमापाद्य वामाँ-साऽऽदिदक्षिणकट्यन्तं विभाव्याऽऽद्यन्तग्रहसम्मेलनमेकं ज्ञात्वा मूलमेकँ सत्यं मृण्मयं विज्ञातँ स्याद्वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यँ हँसेतिवर्णद्वयेनाऽन्त-शिखोपवीतित्वं निश्चित्य ब्राह्मणत्वं ब्रह्मध्यानाऽर्हत्वं यतित्वमलक्षिताऽन्तशिखोपवी-तित्वमेवं बहिर्लक्षितकर्मशिखाज्ञानोपवीतं गृहस्थस्याऽऽभासब्राह्मणत्वस्य केशसमू-हशिखाप्रत्यक्षकार्पासतन्तुकृतोपवीतत्वं चतुर्गुणीकृत्य चतुर्विंशतितत्त्वाऽऽपादनतन्तुकृत्यं

नवतत्त्वमेकमेव परब्रह्म तत्प्रतिसरयोग्यत्वाद्बहुमार्गप्रवृत्तिं कल्पयन्ति। सर्वेषां ब्रह्मा-ऽऽदीनां देवर्षीणां मनुष्याणां मूर्ति(क्ति)रेका। ब्रह्मैकमेव। ब्राह्मणत्वमेकमेव। वर्णाऽऽश्रमा-ऽऽचारविशेषाः पृथक्पृथक्। शिखा वर्णाऽऽश्रमिणामेकमे(कै)व। अपवर्गस्य यतेश्शिखा-यज्ञोपवीतमूलं प्रणवमेकमेव वदान्ति। हँसश्शि( शि )खा। प्रणवमुपवीतम्। नादस्स-न्धानम्। एष धर्मो नेतरो धर्मः। तत्कथमिति। प्रणवहँसो नादस्त्रिवृत्सूत्रं स्वहृदि चैतन्ये तिष्ठति। त्रिविधं ब्रह्म तद्विद्धि। प्रापञ्चिकशिखोपवीतं त्यजेत्। सशिखं वपनं कृत्वा बहिरसूत्रं त्यजेद्बुधः। यदक्षरं परब्रह्म तत्सूत्रमिति धारयेत् ॥ १ ॥

पुनर्जन्मनिवृत्त्यर्थं मोक्षस्याऽहर्निशँ स्मरेत्। सूचनात्सूत्रमित्युक्तँ सूत्रं नाम परं पदम् ॥ २ ॥ तत्सूत्रं विदितं येन स मुमुक्षुस्स भिक्षुकः। स वेदवित्सदाचारस्स विप्रः पङ्क्ति-

पावनः ॥ ३ ॥ येन सर्वमिदं प्रोतं सूत्रे मणिगणा इव । तत्सूत्रं धारयेद्योगी योगविद्ब्राह्मणो यतिः ॥४॥ बहिस्सूत्रं त्यजेद्विप्रो योगविज्ञानतत्परः । ब्रह्मभावमिदँ सूत्रं धारयेद्यस्स मुक्तिभाक् ॥ ५ ॥ नाऽशुचित्वं न चोच्छिष्टं तस्य सूत्रस्य धारणात् । सूत्रमन्तर्गतं येषां ज्ञानयज्ञोपवीतिनाम् ॥ ६ ॥ ये तु सूत्रविदो लोके ते च यज्ञोपवीतिनः । ज्ञानशिखिनो ज्ञाननिष्ठा ज्ञानयज्ञोपवीतिनः ॥ ७ ॥ ज्ञानमेव परं तेषां पवित्रं ज्ञानमीरितम् । अग्नेरिव शिखा नाऽन्या यस्य ज्ञानमयी शिखा ॥ ८ ॥ स शिखीत्युच्यते विद्वान्नेतरे केशधारिणः । कर्मण्यधिकृता ये तु वैदिके लौकिकेऽपि वा ॥ ९ ॥ ब्राह्मणाऽऽभासमात्रेण जीवन्ते कुक्षिपूरकाः । व्रजन्ते निरयं ते तु जनुर्जन्मनि जन्मनि ॥ १० ॥ वामाँसदक्षकट्यन्तं ब्रह्मसूत्रं तु सव्यतः । अन्तर्बहिरिवाऽत्यर्थं तत्त्वतन्तु-

समन्वितम् ॥ ११ ॥ नाभ्यादिब्रह्मरन्ध्राऽन्तं प्रमाणं धारयेत्सुधीः । तेभिर्धार्य-मिदँ सूत्रं क्रियाऽङ्गं तन्तुनिर्मितम् ॥ १२ ॥ शिखा ज्ञानमयी यस्य उपवीतं च तन्मयम् । ब्राह्मण्यँ सकलं तस्य नेतरेषां तु किं च न ॥ १३ ॥ इदं यज्ञोपवीतं तु परमं यत्पराऽयणम् । विद्वान्यज्ञोपवीती स धारयेद्यस्स मुक्तिभाक् ॥ १४ ॥ बहिरन्त-श्चोपवीती विप्रस्सन्न्यस्तुमर्हति । एकयज्ञोपवीती तु नैव सन्न्यस्तुमर्हति ॥ १५ ॥ तस्मा-त्सर्वप्रयत्नेन मोक्षाऽपेक्षी भवेद्यतिः । बहिस्सूत्रं परित्यज्य स्वाऽन्तस्सूत्रं तु धारयेत् ॥१६॥ बहिःप्रपञ्चशिखोपवीतित्वमनादृत्य प्रणवहँसशिखोपवीतित्वमवलम्ब्य मोक्षसाधनं कुर्या-दित्याह भगवाञ्छौनक इत्युपनिषत् ॥ ॐ भद्रं कर्णेभिरिति शान्तिः ॥ हरिः ॐ तत्सत् ॥ इति परब्रह्मोपनिषत्समाप्ता ॥

स्तथा । अकारमूर्तिमत्राऽपि स्मरेदेकाऽग्रमानसः ॥ ७ ॥ धारयेत्पूरितं विद्वान्प्रणवं सञ्जपन्वशी । उकारमूर्तिं स ध्यायञ्चतुष्षष्ठ्या तु मात्रया ॥ ८ ॥ मकारं तु स्मरन्पश्चाद्रेचयेदिडयाऽनिलम् । एवमेव पुनः कुर्यादिडयाऽऽपूर्य बुद्धिमान् ॥ ९ ॥ एवं समभ्यसेन्नित्यं प्राऽणाऽऽयामं मुनीश्वर । एवमभ्यासतो नित्यं षण्मासाद्यत्नवान्भवेत् ॥ १० ॥ वत्सराद्ब्रह्मविद्वान्स्यात्तस्मान्नित्यं समभ्यसेत् । योगाऽभ्यासरतो नित्यं स्वधर्मनिरतश्च यः ॥ ११ ॥ प्राऽणसंयमनेनैव ज्ञानान्मुक्तो भविष्यति । बाह्यादापूरणं वायोरुदरे पूरको हि सः ॥ १२ ॥ सम्पूर्णकुम्भवद्वायोर्धारणं कुम्भको भवेत् । बहिर्विरेचनं वायोरुदराद्रेचकस्स्मृतः ॥ १३ ॥ प्रस्वेदजनको यस्तु प्राऽणाऽऽयामेषु सोऽधमः । कम्पनं मध्यमं विद्यादुत्थानं चोत्तमं विदुः ॥ १४ ॥ पूर्वंपूर्वं प्रकुर्वीत यावदुत्थानसम्भवः ।

सम्भवत्युत्तमे प्राऽऽज्ञः प्राऽणाऽऽयामे सुखी भवेत् ॥ १५ ॥ प्राऽणाऽऽयामेन चित्तं तु शुद्धं भवति सुव्रत । चित्ते शुद्धे शुचिस्साक्षात्प्रत्यग्ज्योतिर्व्यवस्थितः ॥ १६ ॥ प्राऽणश्चित्तेन संयुक्तः परमाऽऽत्मानि तिष्ठति । प्राऽणाऽऽयामपरस्याऽस्य पुरुषस्य महाऽऽत्मनः ॥ १७ ॥ देहश्चोत्तिष्ठते तेन किं चिज्ज्ञानाद्विमुक्तता । रेचकं पूरकं मुक्त्वा कुम्भकं नित्यमभ्यसेत् ॥ १८ ॥ सर्वपापविनिर्मुक्तस्सम्यग्ज्ञानमवाऽऽप्नुयात् । मनोजवत्वमाप्नोति पलिताऽऽदि च नश्यति ॥ १९ ॥ प्राऽणाऽऽयामैकनिष्ठस्य न किं चिदपि दुर्लभम् । तस्मात्सर्वप्रयत्नेन प्राऽणाऽऽयामान्समभ्यसेत् ॥ २० ॥ विनियोगान्प्रवक्ष्यामि प्राऽणाऽऽयामस्य सुव्रत । सन्ध्ययोर्ब्राह्मकालेऽपि मध्याऽह्ने वाऽथवा सदा ॥ २१ ॥ बाह्यं प्राऽणं समाकृष्य पूरयित्वोदरेण च । नासाऽग्रे नाभिमध्ये च पादाऽङ्गुष्ठे च धारयेत् ॥ २२ ॥

सर्वरोगविनिर्मुक्तो जीवेद्वर्षशतं नरः। नासाऽग्रधारणाद्वाऽपि जितो भवति सुव्रत ॥२३॥ सर्वरोगनिवृत्तिस्स्यान्नाभिमध्ये तु धारणात् । शरीरलघुता विप्र पादाऽङ्गुष्ठनिरोधनात् ॥ २४ ॥ जिह्वया वायुमाकृष्य यः पिबेत्सततं नरः। श्रमदाहविनिर्मुक्तो योगी नीरोगतामियात् ॥ २५ ॥ जिह्वया वायुमाकृष्य जिह्वामूले निरोधयेत् । पिबेदमृतमव्यग्रं सकलं सुखमाप्नुयात् ॥ २६ ॥ इडया वायुमाकृष्य भ्रुवोर्मध्ये निरोधयेत्। यः पिबेदमृतँ शुद्धं व्याधिभिर्मुच्यते हि सः ॥ २७ ॥ इडया वेदतत्त्वज्ञ तथा पिङ्गलयैव च। नाभौ निरोधयेत्तेन व्याधिभिर्मुच्यते नरः ॥ २८ ॥ मासमात्रं त्रिसन्ध्यायां जिह्वयाऽऽरोप्य मारुतम्। अमृतं च पिबेन्नाभौ मन्दम्मन्दं निरोधयेत् ॥ २९ ॥ वातजाः पित्तजा दोषा नश्यन्त्येव न सँशयः। नासाभ्यां वायुमाकृष्य नेत्रद्वन्द्वे निरोधयेत्

 

॥ ३० ॥ नेत्ररोगा विनश्यन्ति तथा श्रोत्रनिरोधनात् । तथा वायुं समारोप्य धारये-च्छिरसि स्थितम् ॥ ३१ ॥ शिरोरोगा विनश्यन्ति सत्यमुक्तं हि साङ्कृते । स्वस्तिका-ऽऽसनमास्थाय समाहितमनास्तथा ॥ ३२ ॥ अपाऽनमूर्ध्वमुत्थाप्य प्रणवेन शनैश्शनैः । हस्ताभ्यां धारयेत्सम्यक्कर्णाऽऽदिकरणानि च ॥ ३३ ॥ अङ्गुष्ठाभ्यां मुने श्रोत्रे तर्ज-नीभ्यां तु चक्षुषी । नासापुटाऽवधानाभ्यां प्रच्छाद्य करणानि वै ॥ ३४ ॥ आनन्दा-ऽऽविर्भवो यावत्तावन्मूर्धनि धारणात् । प्राऽणः प्रयात्यनेनैव ब्रह्मरन्ध्रं महामुने ॥ ३५ ॥ ब्रह्मरन्ध्रं गते वायौ नादश्चोत्पद्यतेऽनघ । शङ्खध्वानिनिभश्चाऽऽदौ मध्ये मेघध्वनिर्यथा ॥ ३६ ॥ शिरोमध्यगते वायौ गिरिप्रस्रवणं यथा । पश्चात्प्रीतो महाप्राऽऽज्ञस्साक्षादात्मो-न्मुखो भवेत् ॥ ३७ ॥ पुनस्तज्ज्ञाननिष्पत्तिर्योगात्सँसारनिह्नुतिः । दक्षिणोत्तरगुल्फेन

सीविनीं पीडयेत्स्थिरम् ॥ ३८ ॥ सव्येतरेण गुल्फेन पीडयेद्बुद्धिमान्नरः । जान्वोरध स्थितां सन्धिं स्मृत्वा देवं त्रियम्बकम् ॥ ३९ ॥ विनायकं च सँस्मृत्य तथा वागीश्वरीं पुनः । लिङ्गनालात्समाकृष्य वायुमप्यग्रतो मुने ॥ ४० ॥ प्रणवेन नियुक्तेन बिन्दुयुक्तेन बुद्धिमान् । मूलाऽऽधारस्य विप्रेन्द्र मध्ये तं तु निरोधयेत् ॥ ४१ ॥ निरुध्य वायुना दीप्तो वह्निरूहति कुण्डलीम् । पुनस्सुषुम्नया वायुर्वह्निना सह गच्छति ॥ ४२ ॥ एवमभ्यासतस्तस्य जितो वायुर्भवेद्भृशम् । प्रस्वेदः प्रथमः पश्चात्कम्पनं मुनिपुङ्गव ॥ ४३ ॥ उत्थानं च शरीरस्य चिह्नमेतज्जितेऽनिले । एवमभ्यासतस्तस्य मूलरोगो विनश्यति ॥ ४४ ॥ भगन्दरं च नष्टं स्यात्सर्वरोगाणि साङ्कृते । पातकानि विनश्यन्ति क्षुद्राणि च महान्ति च ॥ ४५ ॥ नष्टे पापे विशुद्धं स्याच्चित्तदर्पणमद्भुतम् ।

पुनर्ब्रह्माऽऽदिभोगेभ्यो वैराग्यं जायते हृदि ॥ ४६ ॥ विरक्तस्य तु सँसाराज्ज्ञानं कैवल्यसाधनम् । तेन पापाऽपहानिस्स्याज्ज्ञात्वा देवँ सदाशिवम् ॥ ४७ ॥ ज्ञानाऽमृतरसो येन सकृदास्वादितो भवेत् । स सर्वकार्यमुत्सृज्य तत्रैव परिधावति ॥ ४८ ॥ ज्ञानस्वरूपमेवाऽऽहुर्जगदेतद्विलक्षणम् । अर्थस्वरूपमज्ञानात्पश्यन्त्यन्ये कुदृष्टयः ॥ ४९ ॥ आत्मस्वरूपविज्ञानादज्ञानस्य परिक्षयः । क्षीणेऽज्ञाने महाप्राऽऽज्ञ रागाऽऽदीनां परिक्षयः ॥ ५० ॥ रागाऽऽद्यसम्भवे प्राऽऽज्ञ पुण्यपापविमर्दनम् । तयोर्नाशे शरीरेण न पुनरसम्प्रयुज्यते ॥ ५१ ॥ इति ॥ इति षष्ठः खण्डः ॥ ॥ अथातस्सम्प्रवक्ष्यामि प्रत्याहारं महामुने । इन्द्रियाणां विचरतां विषयेषु स्वभावतः ॥ १ ॥ बलादाहरणं तेषां प्रत्याहारस्स उच्यते । यत्पश्यति तु तत्सर्वं ब्रह्म पश्यन्त्समाहितः ॥ २ ॥ प्रत्याहारो भवे-

देष ब्रह्मविद्भिः पुरोदितः। यद्यच्छुद्धमशुद्धं वा करोत्यामरणाऽन्तिकम् ॥ ३ ॥ तत्सर्वं ब्रह्मणे कुर्यात्प्रत्याहारस्स उच्यते। अथ वा नित्यकर्माणि ब्रह्माऽऽराधनबुद्धितः ॥ ४ ॥ काम्यानि च तथा कुर्यात्प्रत्याहारस्स उच्यते। अथ वा वायुमाकृष्य स्थानात्स्थानं निरोधयेत् ॥ ५ ॥ दन्तमूलात्तथा कण्ठे कण्ठादुरसि मारुतम्। उरोदेशात्समाकृष्य नाभिदेशे निरोधयेत् ॥ ६ ॥ नाभिदेशात्समाकृष्य कुण्डल्यां तु निरोधयेत्। कुण्डलीदेशतो विद्वान्मूलाऽऽधारे निरोधयेत् ॥ ७ ॥ अथाऽपाऽनात्कटिद्वन्द्वे तथोरौ च सुमध्यमे। तस्माज्जानुद्वये जङ्घे पादाऽङ्गुष्ठे निरोधयेत् ॥ ८ ॥ प्रत्याहारोऽयमुक्तस्तु प्रत्याहारस्मरैः पुरा। एवमभ्यासयुक्तस्य पुरुषस्य महाऽऽत्मनः ॥ ९ ॥ सर्वपापानि नश्यन्ति भवरोगश्च सुव्रत। नासाभ्यां वायुमाकृष्य निश्चलस्स्वस्तिकाऽऽसनः ॥ १० ॥ पूरये-

दनिलं विद्वानापादतलमस्तकम् । पश्चात्पादद्वये तद्वन्मूलाऽऽधारे तथैव च ॥ ११ ॥ नाभिकन्दे च हृन्मध्ये कण्ठमूले च तालुके । भ्रुवोर्मध्ये ललाटे च तथा मूर्धनि धारयेत् ॥ १२ ॥ देहे स्वाऽऽत्ममतिं विद्वान्त्समाकृष्य समाहितः । आत्मनाऽऽत्मनि निर्द्वन्द्वे निर्विकल्पे निरोधयेत् ॥१३॥ प्रत्याहारस्समाख्यातस्साक्षाद्वेदाऽन्तवेदिभिः । एवम(भ्य)भ्यासतस्तस्य न किं चिदपि दुर्लभम् ॥१४॥ इति ॥ इति सप्तमःखण्डः॥ ॥

अथाऽतस्सम्प्रवक्ष्यामि धारणाः पञ्च सुव्रत । देहमध्यगते व्योम्नि बाह्याऽऽकाशं तु धारयेत् ॥ १ ॥ प्राऽणे बाह्याऽनिलं तद्वज्ज्वलने चाऽग्निमौदरे । तोयं तोयांशके भूमिं भूमिभागे महामुने ॥ २ ॥ हयरावलकाराऽऽख्यं मन्त्रमुच्चारयेत्क्रमात् । धारणैषा परा प्रोक्ता सर्वपापविशोधिनी ॥ ३ ॥ जान्वन्तं पृथिवी ह्यंशो ह्यपा पाय्वन्तमुच्यते । हृद-

यांशस्तथाऽग्न्यंशो भ्रूमध्याऽन्तोऽनिलांशकः ॥ ४ ॥ आकाशांशस्तथा प्राऽऽज्ञ मूर्धांशः परिकीर्तितः । ब्रह्माणं पृथिवीभागे विष्णुं तोयांशके तथा ॥ ५ ॥ अग्न्यंशे च महेशानमीश्वरं चाऽनिलांशके । आकाशांशे महाप्राऽऽज्ञ धारयेत्तु सदाशिवम् ॥ ६ ॥ अथ वा तव वक्ष्यामि धारणां मुनिपुङ्गव । पुरुषे सर्वशास्तारं बोधाऽऽनन्दमयं शिवम् ॥ ७ ॥ धारयेद्बुद्धिमान्नित्यं सर्वपापविशुद्धये । ब्रह्माऽऽदिकार्यरूपाणि स्वेस्वे सँहृत्य कारणे ॥ ८ ॥ सर्वकारणमव्यक्तमनिरूप्यमचेतनम् । साक्षादात्मनि सम्पूर्णे धारयेत्प्रणवेन तु ( रः ) । इन्द्रियाणि समाहृत्य मनसाऽऽत्मनि योजयेत् ॥ ९ ॥ इति ॥ इत्यष्टमः खण्डः ॥ ॥ अथाऽतस्सम्प्रवक्ष्यामि ध्यानँ सँसारनाशनम् । ऋतँ सत्यं परं ब्रह्म सर्वसँसारभेषजम् ॥ १ ॥ ऊर्ध्वरेतं विरूपाऽक्षं विश्वरूपं महेश्वरम् । सोऽहमित्यादरे-

णैव ध्यायेद्योगीश्वरेश्वरम् ॥ २ ॥ अथ वा सत्यमीशानं ज्ञानमानन्दमद्वयम् । अत्यर्थमचलं नित्यमादिमध्याऽन्तवर्जितम् ॥ ३ ॥ तथा स्थूलमनाकाशमसँस्पृश्यमचाक्षुषम् । न रसं न च गन्धाऽऽख्यमप्रमेयमनूपमम् ॥ ४ ॥ आत्मानं सच्चिदानन्दमनन्तं ब्रह्म सुव्रत । अहमस्मीत्यभिध्यायेद्ध्येयाऽतीतं विमुक्तये ॥ ५ ॥ एवमभ्यासयुक्तस्य पुरुषस्य महाऽऽत्मनः । क्रमाद्वेदाऽन्तविज्ञानं विजायेत न सँशयः ॥ ६ ॥ इति ॥ इति नवमः खण्डः ॥ ॥ अथाऽतस्सम्प्रवक्ष्यामि समाधिं भवनाशनम् । समाधिस्सँविदुत्पत्तिः परजीवैकतां प्रति ॥ १ ॥ नित्यस्सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः । एकस्सन् भिद्यते भ्रान्त्या मायया न स्वरूपतः ॥ २ ॥ तस्मादद्वैतमेवाऽस्ति न प्रपञ्चो न सँसृतिः । यथाऽऽकाशो घटाऽऽकाशो मठाऽऽकाश इतीरितः ॥ ३ ॥ तथा भ्रान्तै-

द्विधा प्रोक्तो ह्यात्मा जीवेश्वराऽऽत्मना । नाऽहं देहो न च प्राऽणो नेन्द्रियाणि मनो न हि ॥ ४ ॥ सदा साक्षिस्वरूपत्वाच्छिव एवाऽस्मि केवलः । इति धीर्या मुनिश्रेष्ठ सा समाधिरिहोच्यते ॥ ५ ॥ साऽहं ब्रह्म न सँसारी न मत्तोऽन्यः कदा न च । यथा फेनतरङ्गाऽऽदि समुद्रादुत्थितं पुनः ॥६॥ समुद्रे लीयते तद्वज्जगन्मय्यनुलीयते । तस्मान्मनः पृथङ् नाऽस्ति जगन्माया च नाऽस्ति हि ॥ ७ ॥ यस्यैवं परमाऽऽत्माऽयं प्रत्यग्भूतः प्रकाशितः । स तु याति सपुम्भावं स्वयं साक्षात्पराऽमृतम् ॥ ८ ॥ यदा मनसि चैतन्यं भाति सर्वत्रगं सदा । योगिनोऽव्यवधानेन तदा सम्पद्यते स्वयम् ॥ ९ ॥ यदा सर्वाणि भूतानि स्वाऽत्मन्येव हि पश्यति । सर्वभूतेषु चाऽऽत्मानं ब्रह्म सम्पद्यते तदा ॥ १० ॥ यदा सर्वाणि भूतानि समाधिस्थो न पश्यति । एकीभूतः

परेणाऽसौ तदा भवति केवलः ॥११॥ यदा पश्यति चाऽऽत्मानं केवलं परमाऽर्थतः। मायामात्रं जगत्कृत्स्नं तदा भवति निर्वृतिः ॥१२॥ एवमुक्त्वा स भगवान्दत्ताऽऽत्रेयो महामुनिः। साङ्कृतिस्स्वस्वरूपेण सुखमास्तेऽतिनिर्भयः ॥१३॥ इति ॥ इति दशमः खण्डः ॥ ओमाप्यायन्त्विति शान्तिः ॥ हरिः ॐ तत्सत् ॥ इति (जाबाल) दर्शनोपनिषत्समाप्ता ॥

अथ तारसारोपनिषत् ॥ ॐ यन्नाराऽयणताराऽर्थसत्यज्ञानसुखाऽऽकृति। त्रिपान्नारा-ऽयणाऽऽकारं तद्ब्रह्मैवाऽस्मि केवलम् ॥ १ ॥ ॐ पूर्णमद इति शान्तिः ॥ हरिः ॐ बृहस्पतिरुवाच याज्ञवल्क्यं यदनु कुरुक्षेत्रं देवानां देवयजनँ सर्वेषां भूतानां ब्रह्मसदनम्। तस्माद्यत्र क्व च न गच्छेत्तदेव मन्येतेति। इदं वै कुरुक्षेत्रं देवाना देवयजनँ सर्वेषा भूतानां ब्रह्मसदनमविमुक्तं वै कुरुक्षेत्रं देवानां देवयजनँ सर्वेषां भूतानां ब्रह्मसदनम्। अत्र हि

जन्तोः प्राऽणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे ये (।ते) नाऽस्रावमृती भूत्वा मोक्षी भवति। तस्मादविमुक्तमेव निषेवेत।अविमुक्तं न विमुञ्चेत्। एवमेवैष भगवन्निति वै याज्ञवल्क्यः॥१॥ अथ हैनं भारद्वाजः पप्रच्छ याज्ञवल्क्यं किं तारकम्। किं तारयतीति। स होवाच याज्ञवल्क्यः। ॐ नमो नाराऽयणायेति तारकं चिदात्मकमित्युपाऽऽसितव्यम्। ओमित्येकाऽक्षरमात्मस्वरूपम्। नम इति द्व्यक्षरं प्रकृतिस्वरूपम्। नाराऽयणायेति पञ्चाऽक्षरं परम्ब्रह्मस्वरूपम्। इति य एवं वेद । सोऽमृतो भवति । ओमिति ब्रह्मा भवति। नकारो विष्णुर्भवति ।मकारो रुद्रो भवति । नकार ईश्वरो भवति । रकारोऽण्डविराड् भवति । यकारः पुरुषो भवति । णकारो भगवान्भवति । यकारः परमाऽऽत्मा भवति। एतद्वै नाराऽयणस्याऽष्टाऽक्षरं परमपुरुषो भवति।अयमृग्वेदः प्रथमः पादः ॥ ॥ ओमि-

त्येतदक्षरं परं ब्रह्म । तदेवोपाऽऽसितव्यम् । एतदेव सूक्ष्माऽष्टाऽक्षरं भवति । तदेतदष्टा-ऽऽत्मकोऽष्टधा भवति । अकारः प्रथमाऽक्षरो भवति । उकारो द्वितीयाऽक्षरो भवति । मकारस्तृतीयाऽक्षरो भवति । बिन्दुस्तुरीयाऽक्षरो भवति । नादः पञ्चमाऽक्षरो भवति । कला षष्ठाऽक्षरो भवति । कलाऽतीता सप्तमाऽक्षरो भवति । तत्परश्चाऽष्टमाऽक्षरो भवति । तारकत्वात्तारको भवति । तदेव तारकं ब्रह्म त्वं विद्धि । तदेवोपाऽऽसितव्यम् ॥ अत्रैते श्लोका भवन्ति ॥ अकारादभवद्ब्रह्मा जाम्बवानितिसंज्ञकः । उकाराऽक्षरसम्भूत उपेन्द्रो हरिनायकः ॥ १ ॥ मकाराऽक्षरसम्भूतश्शिवस्तु हनुमान्स्मृतः । बिन्दुरीश्व-रसंज्ञस्तु शत्रुघ्नश्चक्रराट् स्वयम् ॥२॥ नादो महाप्रभुर्ज्ञेयो भरतश्शङ्खनामकः । कलायाः पुरुषः साक्षाल्लक्ष्मणो धरणीधरः ॥ ३ ॥ कलाऽतीता भगवती स्वयं सीतेति संज्ञिता ।

तत्परः परमाऽऽत्मा च श्रीरामः पुरुषोत्तमः ॥४ ॥ ओमित्येतदक्षरमिदँ सर्वम् । तस्यो-पव्याख्यानं भूतं भव्यं भविष्यद्यच्चाऽन्यत्तत्त्वमन्त्रवर्णदेवताछन्दोऋक्कलाशक्तिसृष्ट्यात्म-कमिति । य एवं वेद । यजुर्वेदो द्वितीयः पादः॥ ॥ अथ हैनं भारद्वाजो याज्ञवल्क्यमुवाचा-ऽथकैर्मन्त्रैः परमाऽऽत्मा प्रीतो भवति । स्वाऽऽत्मानं दर्शयति । तन्नो ब्रूहि भगव इति । स होवाच याज्ञवल्क्यः । ॐ यो ह वै श्रीपरमाऽऽत्मा नाराऽयणस्स भगवानकारवाच्यो जाम्बवान्भूर्भुवस्सुवस्तस्मै वै नमोनमः ॥१॥ (ॐ यो ह वै श्रीपरमाऽऽत्मा नाराऽयणस्स भगवानुकारवाच्य उपेन्द्रस्वरूपो हरिनायको भूर्भुवस्सुवस्तस्मै वै नमोनमः ॥ २ ॥ ॐ यो ह वै परमाऽऽत्मा नाराऽयणस्स भगवान्मकारवाच्यश्शिवस्वरूपो हनूमान्भूर्भु-वस्सुवस्तस्मै वै नमोनमः ॥ ३ ॥ ॐ यो ह वै श्रीपरमाऽऽत्मा नाराऽयणस्स भगवान्

बिन्दुस्वरूपश्शत्रुघ्नो भूर्भुवस्सुवस्तस्मै वै नमोनमः ॥ ४ ॥ ॐ यो ह वै श्रीपरमाऽऽत्मा नाराऽयणस्स भगवान् नादस्वरूपो भरतो भूर्भुवस्सुवस्तस्मै वै नमोनमः ॥ ५ ॥ ॐ यो ह वै श्रीपरमाऽऽत्मा नाराऽयणस्स भगवान् कलास्वरूपो लक्ष्मणो भूर्भुवस्सुव-स्तस्मै वै नमोनमः ॥६॥ ॐ यो ह वै श्रीपरमाऽऽत्मा नाराऽयणस्स भगवान् कलाऽतीता भगवती (सीता) चित्स्वरूपा भूर्भुवस्सुवस्तस्मै वै नमोनमः ॥ ७ ॥ ) ( यथा प्रथमम-न्त्रोक्तावाद्यन्तौ तथा सर्वमन्त्रेषु द्रष्टव्यम् । उकारवाच्य उपेन्द्रस्वरूपो हारि-नायकः२ मकारवाच्यश्शिवस्वरूपो हनुमान्३ बिन्दुस्वरूपश्शत्रुघ्नः४ नादस्वरूपो भरतः५ कलास्वरूपो लक्ष्मणः६ कलाऽतीता भगवती सीता चित्स्वरूपा ७) ॐ यो ह वै श्रीपरमाऽऽत्मा नाराऽयणस्स भगवान्तत्परः परमपुरुषः पुराण-

पुरुषोत्तमो नित्यशुद्धबुद्धमुक्तसत्यपरमाऽनन्ताऽद्वयपरिपूर्णः परमाऽऽत्मा ब्रह्मैवाऽहं रामोऽस्मि भूर्भुवस्सुवस्तस्मै वै नमोनमः ॥ ८ ॥ एतदष्टविधमन्त्रं योऽधीते सोऽग्निपूतो भवति । स वायुपूतो भवति । स आदित्यपूतो भवति । स स्थाणुपूतो भवति । स सर्वैर्देवैर्ज्ञातो भवति । तेनेतिहासपुराणानाँ रुद्राणाँ शतसहस्राणि जप्तानि फलानि भवन्ति । श्रीमन्नाराऽयणाऽष्टाऽक्षराऽनुस्मरणेन गायत्र्याश्शतसहस्रं जप्तं भवति । प्रणवा-नामयुतं जप्तं भवति । दशपूर्वान्दशोत्तरान्पुनाति । नाराऽयणपदमवाऽऽप्नोति । य एवं वेद । तद्विष्णोः परमं पदँ । सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् । तद्विप्रासो विपन्यवो जागृवाँसस्समिन्धते । विष्णोर्यत्परमं पदम् ॥ इत्युपनिषत् ॥ सामवेदस्तृतीयः पादः । ॐ पूर्णमद इति शान्तिः ॥ हरिः ॐ तत्सत् ॥ इति तारसारोपनिषत्समाप्ता ॥

अथ महावाक्योपनिषत् ॥ ॐ यन्महावाक्यसिद्धाऽन्तमहाविद्याकलेबरम् । विकलेबरकैवल्यं रामचन्द्रपदं भजे ॥ १ ॥ ॐ भद्रं कर्णेभिरिति शान्तिः ॥ हरिः ओमथ होवाच भगवान्ब्रह्माऽपरोक्षाऽनुभवपरोनिषदं व्याख्यास्यामः । गुह्याद्गुह्यतरमेषा । न प्राकृतायोपदेष्टव्या । सात्त्विकायाऽन्तर्मुखाय परिशुश्रूषवे । अथ सँसृतिबन्धमोक्षयोर्विद्याऽविद्ये चक्षुषी उपसँहृत्य विज्ञायाऽविद्याऽऽलोकाऽण्ड ( न्ध ) स्तमोदृक् । तमो हि शारीरप्रपञ्चमाब्रह्मस्थावराऽन्तमनन्ताऽखिलाऽजाऽण्डभूतम् । निखिलनिगमोदितसकामकर्मव्यवहारो लोकः । नैषोऽन्धकारोऽयमात्मा । विद्या हि काण्डाऽन्तराऽऽदित्यो ज्योतिर्मण्डलं ग्राह्यम् । नाऽपरम् । असावादित्यो ब्रह्मेत्यजपयोपहितँ हँसस्सोऽहम् । प्राऽणाऽपाऽनाभ्यां प्रतिलोमाऽनुलोमाभ्याँ समुपलभ्यैवँ सा चिरं लब्ध्वा त्रिवृदात्मनि ब्रह्मण्यभिध्यायमाने सच्चि-

दानन्दः परमाऽऽत्माऽऽविर्भवति । सहस्रभानुमच्छुरिताऽऽपूरितत्वादलिप्या पाराऽवारपूर इव । सै (नै) षा समाधिः । नैषा योगसिद्धिः । नैषा मनोलयः । ब्रह्मैक्यं तत् । आदित्यवर्णं तमसस्तु पारे । सर्वाणि रूपाणि विचित्य धीरः । नामानि कृत्वाऽभिवदन्यदास्ते । धाता पुरस्ताद्यमुदाजहार । शक्रः प्रविद्वान्प्रदिशश्चतस्रः । तमेवं विद्वानमृत इह भवाति । नाऽन्यः पन्था अयनाय विद्यते । यज्ञेन यज्ञमयजन्त देवाः । तानि धर्माणि प्रथमान्यासन् । ते ह नाऽकं महिमानस्सचन्ते । यत्र पूर्वे साध्यास्सन्ति देवाः । सोऽहमर्कः परं ज्योतिरर्कज्योतिरहँ शिवः । आत्मज्योतिरहँ शुक्रस्सर्वज्योतिरसाव (द) होम् । एतदथर्वशिरोऽधीते । प्रातरधीयानो रात्रिकृतं पापं नाशयति । सायमधीयानो दिवसकृतं पापं नाशयति । तत्सायं प्रातः प्रयुञ्जानः पापोऽपापो भवति । माध्यन्दिनमादि-

290

त्याऽभिमुखोऽधीयानः पञ्चमहापातकोपपातकात्प्रमुच्यते । सर्ववेदपाराऽयणपुण्यं लभते । श्रीमहाविष्णुसायुज्यमवाऽऽप्नोतीत्युपनिषत् ॥ ॐ भद्रं कर्णेभिरिति शान्तिः ॥ हरिः ॐ तत्सत् ॥ इति श्रीमहावाक्योपनिषत्समाप्ता ॥

अथ पञ्चब्रह्मोपनिषत् ॥ ॐ ब्रह्माऽऽदिपञ्चब्रह्माणो यत्र विश्रान्तिमाप्नुयुः । तदखण्डसुखाऽऽकारं रामचन्द्रपदं भजे ॥ १ ॥ ॐ सह नाववत्विति शान्तिः ॥ हरिः ओमथ पैप्पलाऽऽदो भगवान्भो किमादौ किं जातमिति । सद्यो जातमिति । किं भगव इति । अघोर इति । किं भगव इति । वामदेव इति । किं वा पुनरिमे भगव इति । तत्पुरुष इति । किं वा पुनरिमे भगव इति । सर्वेषां दिव्या ( विद्या ) नां प्रेरयिता ईशान इति । ईशानो भूतभव्यस्य सर्वेषां देवयोगि ( नि ) नाम् । कति वर्णाः । कति

भेदाः । कति शक्तयः । यत्सर्वं तद्गुह्यम् । तस्मै नमो महादेवाय महारुद्राय । प्रोवाच तस्मै भगवान्महेशः । गोप्याद्गोप्यतरं लोके यद्यस्ति शृणु शाकल । सद्यो जातं मही पूषा रमा ब्रह्मा त्रिवृत्स्वरः ॥ १ ॥ ऋग्वेदो गार्हपत्यं च मन्त्रास्सप्त स्वरास्तथा । वर्णं पीतं क्रिया शक्तिस्सर्वाऽभीष्टफलप्रदम् ॥ २ ॥ अघोरँ सलिलं चन्द्रं गौरी वेद द्वितीयकम् । नीरदाऽऽभँ स्वरँ सान्द्रं दक्षिणाऽग्निरुदाहृतम् ॥ ३ ॥ पञ्चा-शद्वर्णसंयुक्तँ स्थितिरिच्छा क्रियाऽन्वितम् । शक्तिरक्षणसंयुक्तँ सर्वाऽघौघविनाशनम् ॥ ४ ॥ सर्वदुष्टप्रशमनँ सर्वैश्वर्यफलप्रदम् । वामदेवं महाबोधदायकं पावकाऽऽत्मकम् ॥ ५ ॥ विद्याऽऽलोकसमायुक्तं भानुकोटिसमप्रभम् । प्रसन्नँ सामवेदाऽऽख्यं नाना-ऽष्टकसमन्वितम् ॥ ६ ॥ धीरस्वरमधीनं चाऽऽहवनीयमनुत्तमम् । ज्ञानसँहारसंयुक्तँ

शक्तिद्वयसमन्वितम् ॥ ७ ॥ वर्णं शुक्लं तमोमिश्रं पूर्णबोधकरँ स्वयम् । धामत्रय-नियन्तारं धामत्रयसमन्वितम् ॥ ८ ॥ सर्वसौभाग्यदं नृणां सर्वकर्मफलप्रदम् । अष्टाऽक्षरसमायुक्तमष्टपत्राऽन्तरस्थितम् ॥ ९ ॥ यत्तत्तत्पुरुषं प्रोक्तं वायुमण्डलसंवृतम् । पञ्चाऽग्निना समायुक्तं मन्त्रशक्तिनियामकम् ॥ १० ॥ पञ्चाशत्स्वरवर्णाऽऽख्यमथर्ववेदस्वरूपकम् । कोटिकोटिगणाऽध्यक्षं ब्रह्माऽण्डाऽखण्डविग्रहम् ॥ ११ ॥ वर्णँ रक्तं कामदं च सर्वाऽऽधिव्याधिभेषजम् । सृष्टिस्थितिलयाऽऽदीनां कारणँ सर्वशक्तिधृक् ॥ १२ ॥ अवस्थात्रितयाऽतीतं तुरीयं ब्रह्मसंज्ञित ( सत्यचित्सुख ) म् । ब्रह्मविष्ण्वादिभिस्सेव्यँ सर्वेषां जनकं परम् ॥ १३ ॥ ईशानं परमं विद्यात्प्रेरकं बुद्धिसाक्षिणम् । आकाशाऽऽत्मकमव्यक्तमोङ्कारस्वरभूषितम् ॥ १४ ॥ सर्वदेवमयँ शान्तँ शान्त्याऽतीतँ

स्वराद्बहिः । अकाराऽऽदिस्वराऽध्यक्षमाकाशमयविग्रहम् ॥ १५ ॥ पञ्चकृत्यनियन्तारं पञ्चब्रह्माऽऽत्मकं बृहत् । पञ्चब्रह्मोपसँहारं कृत्वा स्वाऽऽत्मनि सँस्थितः ॥ १६ ॥ स्वमायावैभवान्त्सर्वान्त्सँहृत्य स्वाऽऽत्मनि स्थितः । पञ्चब्रह्माऽऽत्मकाऽतीतो भासते स्वस्वतेजसा ॥ १७ ॥ आदावन्ते च मध्ये च भासते नाऽन्यहेतुना । मायया मोहिताश्शम्भोर्महादेवं जगद्गुरुम् ॥ १८ ॥ न जानन्ति सुरास्सर्वे सर्वकारणकारणम् । न सन्दृशे तिष्ठति रूपमस्य परात्परं पुरुषं विश्वधाम ॥ १९ ॥ येन प्रकाशते विश्वं यत्रैव प्रविलीयते । तद्ब्रह्म परमँ शान्तं तद्ब्रह्माऽस्मि परं पदम् ॥ २० ॥ पञ्चब्रह्ममिदं (परं) विद्यात्सद्योजाताऽऽदिपूर्वकम् । दृश्यते श्रूयते यच्च पञ्चब्रह्माऽऽत्मकं स्वयम् ॥ २१ ॥ पञ्चधा वर्तमानं तं ब्रह्मकार्यमिति स्मृतम् । ब्रह्मकार्यमिति ज्ञा (श्रु) त्वा ईशानं

प्रतिपद्यते ॥ २२ ॥ पञ्चब्रह्माऽऽत्मकँ सर्वँ स्वाऽऽत्मनि प्रविलाप्य च । सोऽहमस्मीति जानीयाद्विद्वान्ब्रह्माऽमृतो भवेत् ॥ २३ ॥ इत्येतद्ब्रह्म जानीयाद्यस्स मुक्तो न सँशयः । पञ्चाऽक्षरमयँ शम्भुं परब्रह्मस्वरूपिणम् ॥ २४ ॥ नकाराऽऽदियकाराऽन्तं ज्ञात्वा पञ्चाऽक्षरं जपेत् । सर्वं पञ्चाऽऽत्मकं विद्यात्पञ्चब्रह्माऽऽत्मतत्त्वतः ॥ २५ ॥ पञ्चब्रह्माऽऽत्मिकीं विद्यां योऽधीते भक्तिभावितः । स पञ्चाऽऽत्मकतामेत्य भासते पञ्चधा स्वयम् ॥ २६ ॥ एवमुक्त्वा महादेवो गालवस्य महाऽऽत्मनः । कृपां चकार तत्रैव स्वाऽन्तर्धिमगमत्स्वयम् ॥ २७ ॥ यस्य श्रवणमात्रेणाऽश्रुतमेव श्रुतं भवेत् । अमतं च मतं ज्ञातमविज्ञातं च शाकल ॥ २८ ॥ एकेनैव तु पिण्डेन मृत्तिकायाश्च गौतम । विज्ञातं मृण्मयँ सर्वं मृदभिन्नँ हि कार्यकम् ॥ २९ ॥ एकेन लोहमणिना सर्वं लोहमयं यथा ।

विज्ञातँ स्यादथैकेन नखानां कृन्तनेन च ॥ ३० ॥ सर्वं कार्ष्णाऽयसं ज्ञातं तदभिन्नँ स्वभावतः । कारणाऽभिन्नरूपेण कार्यं कारणमेव हि ॥ ३१ ॥ तद्रूपेण सदा सत्यं भेदेनोक्तिर्मृषा खलु । तच्च कारणमेकँ हि न भिन्नं नोभयाऽऽत्मकम् ॥ ३२ ॥ भेदस्सर्वत्र मिथ्यैव धर्माऽऽदेरनिरूपणात् । अतश्च कारणं नित्यमेकमेवाऽद्वयं खलु ॥३३॥ अत्र कारणमद्वैतँ शुद्धचैतन्यमेव हि । अस्मिन्ब्रह्मपुरे वेश्म दहरं यदिदं मुने ॥ ३४ ॥ पुण्डरीकं तु तन्मध्ये आकाशो दहरोऽस्ति तत् । स शिवस्सच्चिदानन्दस्सोऽन्वेष्टव्यो मुमुक्षुभिः ॥ ३५ ॥ अयँ हृदि स्थितस्साक्षी सर्वेषामविशेषतः । तेनाऽयँ हृदयँ प्रोक्तश्शिवस्सँसारमोचकः ॥ ३६ ॥ इत्युपनिषत् ॥ ॐ सह नाववत्विति शान्तिः ॥ हरिः ॐ तत्सत् ॥ इति पञ्चब्रह्मोपनिषत्समाप्ता ॥

अथ प्राऽणाऽग्निहोत्रोपनिषत् ॥ ॐ शरीरयज्ञसँशुद्धचित्तसञ्ज्ञातबोधतः । मुनयो यत्पदं यान्ति तद्रामपदमाश्रये ॥ १ ॥ ॐ सह नाववत्विति शान्तिः ॥ ओमथाऽत-स्सर्वोपनिषत्सारँ सँसारज्ञानाऽतीतमन्त्रसूक्तँ शारीरयज्ञं व्याख्यास्यामः । यस्मिन्नेव पुरु-षश्शरीरे विनाऽप्यग्निहोत्रेण विनाऽपि साङ्ख्ययोगे ( ख्ये ) न सँसारविमुक्तिर्भव-तीति । स्वेन विधिनाऽन्नं भूमौ निक्षिप्य या ओषधयस्सोमराज्ञीरिति तिसृभिरन्नपत इति द्वाभ्यामनुमन्त्रयते । या त्वोषधयस्सोमराज्ञीर्बह्वीश्शतविचक्षणाः । बृहस्पतिप्रसू-तास्ता नो मुञ्चन्त्वँहसः ॥ १ ॥ याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः । ( अकोशा याश्च कोशिनीः । ) बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वँहसः ॥ २ ॥ जीवला नघारिषां ( षां ) मा ते बध्नाम्योषधीम् । या तयाऽऽयु रु ( र ) पाऽऽहरादप

रक्षाँसि चाऽऽतयात् ( अपातयादुपहगादप रक्षांसि चाऽऽतयात्। ) ॥ ३ ॥ अन्न-पतेऽन्नस्य नो धेह्यनमीवस्य शुष्मिणः । प्रप्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे ॥४॥ यदन्नमग्निर्बहुधा विराद्धि ( राजं ) ( रुद्धँ ) रुद्रैः प्रजग्धं (जाद्धं) यदि वा पिशाचैः । सर्वं तदीशानो अभयं कृणोतु शिवमीशानाय स्वाहा ॥५॥ अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः । त्वं यज्ञस्त्वं ब्रह्मा त्वँ रुद्रस्त्वं विष्णुस्त्वं वषट्कार आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवस्सुवरोन्नमः ( रोम् ) । आपः पुनन्तु पृथिवीं पृथिवी पूता पुनातु माम् । पुनन्तु ब्रह्मणस्पतिर्ब्रह्म पूता पुनातु माम् । यदुच्छिष्टमभो-ज्यम् ( ज्यं च ) । यद्वा दुश्चरितं मम । सर्वं पुनन्तु मामापोऽसतां च प्रतिग्रहँ स्वाहा। ( हं स्वम् ) ( हं त्वम् ) । अ(आपोऽ) मृतमस्य ( स्त्व ) मृतोपस्तरणमस्यमृतं

( च ) प्राऽणे जुहोम्यमा शिष्याऽन्तोऽसि । प्राऽणाय स्वाहा । अपाऽनाय स्वाहा । व्यानाय स्वाहा । उदानाय स्वाहा । समानाय स्वाहा । इति कानिष्ठया ( ष्ठिका ) ऽङ्गुल्याऽङ्गुष्ठेन च प्राऽणे जुहोमि ( ति ) । अनामिकया-ऽपाने। मध्यम ( मिक )या व्याने। सर्वाभिरुदाने। प्रदेशिन्या समाने । तू (वृ) ष्णीमे-कामेकऋषौ ( चा ) ( चौ ) जुहोति । द्वे आहवनीये । एकां (कं) दक्षिणाऽग्नौ। एकां ( कं ) गार्हपत्ये। एकाँ ( कँ ) सर्वप्रायश्चितीये ॥ अथाऽपिधानमस्य (नस्याऽ) मृतत्वायो ( पदधामीत्यु ) पस्पृश्य पुनरादाय पुनरुपस्पृशेत् । स ते ( व्ये ) प्राऽणा वाऽऽपो गृहीत्वा हृदयमन्वा ( नुप ) लभ्य जपेत् । प्राऽणो अग्निः परमाऽऽत्मा पञ्चवायुभिरा-वृतः । अभयँ सर्वभूतेभ्यो न मे भीतिः कदा च न ॥ १ ॥ इति । विश्वो ( ऽसि )

वैश्वानरो विश्वरूपं ( पो विश्वं ) त्वया धार्यते जायमानम् । विश्वं त्वाहुतयस्सर्वा यत्र ब्रह्मा ( विश्वा )ऽमृतोऽसि । महानवोऽयं पुरुषो योऽङ्गुष्ठाऽग्रे प्रतिष्ठितः । तमद्भिः परिषिञ्चामि सोऽस्याऽन्ते अमृताय च । अनावित्येष बाह्याऽऽत्मा ध्यायेताऽग्निहोत्रं जुहो(मी) ति । सर्वेषामेव सूनुर्भवति ( तु ) । अस्य यज्ञपरिवृतया (वृता आ )ऽऽहुती-र्होमयति । स्वशरीरे यज्ञं परिवर्त्तयामीति । चत्वारोऽग्नयस्ते किं भाग(नाम)धेयाः । तत्र सूर्यो ( र्या ) ऽग्निर्नाम सूर्य्यमण्डलाऽऽकृतिस्सहस्ररश्मि (भि) (ः) परिवृत एकऋषि-र्भूत्वा मूर्धनि तिष्ठति । यस्मादुक्तो दर्शनाऽग्निर्नाम चतुराकृतिराहवनीयो भूत्वा मुखे तिष्ठति । शारीरोऽग्निर्नाम जराप्रणुदा हविरवि( व )स्कन्दति । अर्द्धचन्द्राऽऽकृ-तिर्दक्षिणाऽग्निर्भूत्वा हृदये तिष्ठति । तत्र कोष्ठाऽग्निरिति । कोष्ठाऽग्निर्नामाऽशितपीत-

मा०अ० ॥७९०॥

लीढखादितानि (तँ) सम्यगू व्यष्टयँष (श्रप) यित्वा गार्हपत्यो भूत्वा नाभ्यां तिष्ठति । प्रायश्चित्तयस्त्वधस्तात्तिर्यक् तिस्रो हिमाँशुप्रभाभि ( भु )ः प्रजननकर्मा ॥ इति द्वितीयः खण्डः ॥ अस्य शारीरयज्ञस्य यूपरशनाशोभितस्य को यजमानः । का पत्नी । के ऋत्विजः । के सदस्याः । कानि यज्ञपात्राणि । कानि हवीँषि । का वेदिः । कोत्तरवे (काऽन्तर्वे) दिः । को द्रोणकलशः । को रथः । कः पशुः । कोऽध्वर्य्युः । को होता । को ब्राह्मणाच्छँसी । कः प्रतिप्रस्थाता । कःप्रस्तोता । को मैत्रावरुणः । क उद्गाता । का धारापोता । के दर्भाः । कस्स्रुवः । काऽऽज्यस्थाली । कावाघारौ । कावाज्यभागौ । के प्रयाजाः । के अनुयाजाः । केडा । कस्सूक्तवाकः । कश्शंयोर्वाकः । ( काऽहिँसा ) के पत्नीसंयाजाः । को यूपः । का रशना । का

उ० ॥७९०॥

इष्टयः । का दक्षिणा । किमवभृथमिति ॥ इति तृतीयः खण्डः ॥ अस्य शारीरयज्ञस्य यूपरशनाशोभितस्याऽऽत्मा यजमानः । बुद्धिः पत्नी । वेदा महर्त्विजः । अहङ्कारोऽध्वर्य्युः । चित्तँ होता । प्राऽणो ब्राह्मणाच्छँसी । अपाऽनः प्रतिप्रस्थाता । व्यानः प्रस्तोता । उदान उद्गाता । समानो मैत्रावरुणः । शरीरं वेदिः । नासिकोत्तरवे ( काऽन्तर्वे ) दिः । मूर्धा द्रोणकलशः । पादो रथः । दक्षिणहस्तस्स्रुवः । सव्य ( हस्त ) आज्यस्थाली । श्रोत्रे आघारौ । चक्षुषी आज्याभागौ । ग्रीवा धारापोता । तन्मात्राणि सदस्याः । महाभूतानि प्रयाजाः । भूतानि ( गुणाः ) अनुयाजाः । जिह्वेडा । दन्तोष्ठौ सूक्तवाकः । तालुश्शंयोर्वाकः । स्मृतिर्दया क्षान्तिरहिँसा पत्नीसंयाजाः । ओङ्कारो यूपः । आशा रशना । मनो रथः । कामः पशुः । केशा दर्भाः । बुद्धीन्द्रियाणि

यज्ञपात्राणि । कर्म्मेन्द्रियाणि हवीँषि । अहिँसा इष्टयः । त्यागो दक्षिणा । अवभृथं मरणात् । सर्वा ह्यस्मिन् देवताश्शरीरेऽधिसमाहिताः । वाराणस्यां मृतो वाऽपि इदं वा ब्रह्म य(ब्राह्मण)ः पठेत् । एकेन जन्मना जन्तुर्मोक्षं च प्राऽऽप्नुयादिति मोक्षं च प्राऽऽप्नुयादित्युपनिषत् ॥ ॐ सह नाववत्विति शान्तिः ॥ हरिः ॐ तत्सत् ॥ इत्यथर्ववेदे प्राऽणाऽग्निहोत्रोपनिषत्समाप्ता ॥

अथ गोपालपूर्वतापिन्युपनिषत् ॥ श्रीमत्पञ्चपदाऽगारँ सविशेषतयोज्ज्वलम् । प्रतियोगिविनिर्मुक्तं निर्विशेषँ हरिं भजे ॥१॥ ॐ भद्रं कर्णेभिरिति शान्तिः ॥ ( गोपालतापनं कृष्णं याज्ञवल्क्यं वराहकम् । शाट्यायनीहयग्रीवं दत्ताऽऽत्रेयं च गारुडम् ॥ १ ॥ ) हरिः ॐ सच्चिदानन्दरूपाय कृष्णायाऽक्लिष्टकर्म (कारि) णे । नमो वेदाऽन्त-

वेद्याय गुरवे बुद्धिसाक्षिणे ॥ २ ॥ ॐ मुनयो ह वै ब्राह्मणमूचुः । कः परमो देवः । कुतो मृत्युर्बिभेति । कस्य विज्ञानेनाऽखिलं विज्ञातं भवति । केनेदं विश्वं सँसरतीति । तदु होवाच ब्राह्मणः । कृष्णो वै परमं दैवतम् । गोविन्दान्मृत्युर्बिभेति । गोपीजनवल्लभज्ञानेनैतद्विज्ञातं भवति । स्वाहेदं विश्वँ सँसरतीति । तदु होचुः । कः कृष्णः । गोविन्दश्च कोऽसाविति । गोपीजनवल्लभश्च कः । का स्वाहेति । तानुवाच ब्राह्मणः । पापकर्षणो गोभूमिवेदवेदितो गोपीजनविद्याकला—पि—प्रेरकः । तन्माया चेति सकलं परं ब्रह्मैव तत् । यो ध्यायति रसति भजति सोऽमृतो भव ( ती ) ति । ते होचुः । किं तद्रूपं किँ रसनं किमाहो तद्भजनं तत्सर्वं विविदिषतामाख्याहीति । तदुहोवाच हैरण्यो गोपवेषमभ्राऽऽभं कल्पद्रुमाऽऽश्रितम् । तदिह श्लोका भवन्ति ॥ सत्पुण्डरीकनयनं मेघा-

ऽऽभं वैद्युताऽम्बरम् । द्विभुजं ज्ञानमुद्राऽऽढ्यं वनमालिनमीश्वरम् ॥ १ ॥ गोपगोपीगवाऽऽवीतँ सुरद्रुमतलाऽऽश्रितम् । दिव्याऽलङ्करणोपेतँ रत्नपङ्कजमध्यगम् ॥ २ ॥ कालिन्दीजलकल्लोलसङ्गिमारुतसेवितम् । चिन्तयञ्चेतसा कृष्णं मुक्तो भवति सँसृतेः ॥ ३ ॥ ( इति ) ॥ तस्य पुना रसनमिति जलभूमिं तु सम्पाता ( जलभूमीन्दुसम्पात ) कामाऽऽदि कृष्णायेत्येकं पदम् । गोविन्दायेति द्वितीयम् । गोपीजनेति तृतीयम् । वल्लभे ( भाये ) ति तुरीयम् । स्वाहेति पञ्चममिति पञ्चपदं जपन्पञ्चाऽङ्गं द्यावाभूमी सूर्याचन्द्रमसौ—साऽग्नि—तद्रूपतया ब्रह्म सम्पद्यत इति । तदेष श्लोकः क्लीमित्येतदादावादाय कृष्णाय गोविन्दाय गोपीजनवल्लभायेति बृहन्भानव्यासकृदुच्चरेद्योऽसौ गतिस्तस्याऽस्ति । मङ्क्षु नाऽन्या गतिस्स्यादिति । भक्तिरस्य भजनम् । एतदिहाऽमुत्रोपा-

ऽऽधिनैराश्येनाऽमुष्मिन्मनःकल्पनम्। एतदेव च नैष्कर्म्यम् । कृष्णं तं विप्रा बहुधा यजन्ति गोविन्दँ सन्तं बहुधा आराधयन्ति । गोपीजनवल्लभो भुवनानि दध्रे स्वाहा-ऽऽश्रितो जगदेतत्सुरेताः ॥ १ ॥ वायुर्यथैको भुवनं प्रविष्टो जन्येजन्ये पञ्चरूपो बभूव । कृष्णस्तदेकोऽपि जगद्धिताऽर्थँ शब्देनाऽसौ पञ्चपदो विभाति ॥ २ ॥ इति । ते होचुरुपा-ऽऽसनमेतस्य परमाऽऽत्मनो गोविन्दस्याऽखिलाऽऽधारिणो ब्रूहीति । तानुवाच यत्तस्य पीठँ हैरण्याऽष्टपलाशमम्बुजं तदन्तराऽधिकाऽनलाऽस्त्रयुगं तदन्तरालाऽऽद्यर्णाऽखिलबीजं कृष्णाय नम इति बीजाऽऽढ्यँ (ढ्यं) सब्रह्मा (ब्राह्म)णमादायाऽनङ्गगायत्रीं यथावदाऽऽलि-ख्य भूमण्डलँ शूलवेष्टितं कृत्वाऽङ्गवासुदेवाऽऽदिरुक्मिण्यादिस्वशक्तिं नन्दाऽऽदिवसु-देवाऽऽदिपार्थाऽऽदिनिद्ध्यादिवीतं यजेत्सन्ध्यासुप्रतिपत्तिभिरुपचारैः । तेनाऽस्याऽखिलं

भवत्यखिलं भवतीति ॥ २ ॥ तदिह श्लोका भवन्ति । एको वशी सर्वगः कृष्ण ईड्य एकोऽपि सन्बहुधा यो विभाति । तं पीठँ येऽनुभजन्ति धीरास्तेषाँ सिद्धिश्शाश्वती नेतरेषाम् ॥ ३ ॥ नित्यो नित्याना चेतनश्चेतनानामेको बहूना यो विदधाति कामान् । तं पीठगं येऽनुभजन्ति धीरास्तेषाँ सुखँ शाश्वतं नेतरेषाम् ॥ ४ ॥ एतद्विष्णोः परमं पदं ये नित्योद्युक्तास्तं यजन्ति न कामात्तेषामसौ गोपरूपः प्रयत्नात्प्रकाशयेदात्मपदं तदेव ॥ ५ ॥ यो ब्रह्माणं विदधाति पूर्वं यो विद्यां तस्मै गोपयति स्म कृष्णः । तँ ह देवमात्मबुद्धिप्रकाशं मुमुक्षुश्शरणं व्रजेत् ॥ ६ ॥ ओङ्कारेणाऽन्तरितं ये जपन्ति गोविन्दस्य पञ्चपदं मनुम् । तेषामसौ दर्शयेदात्मरूपं तस्मान्मुमुक्षुरभ्यसेन्नित्यशान्त्यै ॥ ७ ॥ एतस्मा एव पञ्चपदादभूवन् गोविन्दस्य मनवो मानवानाम् । दशाऽऽर्णो-

ऽऽद्यास्तेऽपि सङ्क्रन्दनाऽऽद्यैरभ्यस्यन्ते भूतिकामैर्यथावत् ॥ ८ ॥ ते पप्रच्छुस्तदु होवाच ब्रह्मसव ( द ) नं (चरतो) मे ध्यात(ऽध्यात्म)स्तुतः परमेश्वरः पराऽर्द्धोऽन्ते सोऽबुध्यत। कोपदेष्टा मे पुरुषः पुरस्तादाविर्बभूव। ततः प्रणतो मायाऽनुकूलेन हृदा मह्यमष्टादशाऽऽर्णस्वरूपँ सृष्टये दत्त्वाऽन्तर्हितः । पुनस्ते सिसृक्षतो मे प्राऽऽदुरभूवन्। तेष्वक्षरेषु विभज्य भविष्यज्जगद्रूपं प्राकाशयम् । तदिह कादाका ( पा )-लात्पृथिवीतोऽग्निर्बिन्दोरिन्दुस्तत्सम्पातात्तदर्क इति । क्लीङ्कारादजस्त्रं कृष्णादाकाशं खाद्वायुरुत्तरात्सुरभिविद्याः प्राऽऽदुरकार्षमकार्षमिति । तदुत्तरात्स्त्रीपुंसाऽऽदिभेदँ सकलमिदँ सकलमिदमिति ॥ ३ ॥ एतस्यैव यजने ( न ) चन्द्रध्वजो गतमोहमात्मानं वेदयति । ओङ्काराऽली ( लि ) कं मनुमावर्तयेत् । सङ्गरहितोऽभ्यानयत्।

तद्विष्णोः परमं पदँ सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् । तस्मादेनं नित्यमावर्तयेन्नित्यमावर्वयेदिति ॥ ४ ॥ तदाहुरेके यस्य प्रथमपदाद्भूमिर्द्वितीयपदाज्जलं तृतीयपदात्तेजश्चतुर्थपदाद्वायुश्चरमपदाद्व्योमेति । वैष्णवं पञ्चव्याहृतिमयं मन्त्रं कृष्णाऽवभासकं कैवल्यस्य सृत्यै सततमावर्तयेत्सततमावर्तयेदिति ॥ ५ ॥ तदत्र गाथाः ॥ यस्य प्रथमपदाद्भूमिर्द्वितीयपदात्सलिलोद्भवः । तृतीयात्तेज उद्भूतं चतुर्थाद्गन्धवाहनः ॥ १ ॥ पञ्चमादम्बरोत्पत्तिस्तमेवैकँ समभ्यसेत् । चन्द्रध्वजोऽगमद्विष्णोः परमं पदमव्ययम् ॥ २ ॥ ततो विशुद्धं विमलं विशोकमशेषलोभाऽऽदिनिरस्तसङ्गम् । यत्तत्पदं पञ्चपदं तदेव स वासुदेवो न यतोऽन्यदस्ति ॥ ३ ॥ तमेकं गोविन्दँ सच्चिदानन्दविग्रहं पञ्चपदं वृन्दाऽवनसुरभूरुहतलाऽऽसीनं सततं मरुद्गणोऽहं परमया स्तुत्या

तोष्यामि ॥ ॐ नमो विश्वरूपाय विश्वस्थित्यन्तहेतवे । विश्वेश्वराय विश्वाय गोविन्दाय नमोनमः ॥ १ ॥ नमो विज्ञानरूपाय परमाऽऽनन्दरूपिणे । कृष्णाय गोपीनाथाय गोविन्दाय नमोनमः ॥ २ ॥ नमः कमलनेत्राय नमः कमलमालिने । नमः कमलनाभाय कमलापतये नमः ॥ ३ ॥ बर्हाऽऽपीडाऽभिरामाय रामायाऽकुण्ठमेधसे । रमामानसहँसाय गोविन्दाय नमोनमः ॥ ४ ॥ कँसवँशविनाशाय केशिचाणूरघातिने । वृषभध्वजवन्द्याय पार्थसारथये नमः ॥ ५ ॥ वेणुनादविनोदाय गोपालायाऽहिमर्दिने । कालिन्दीकुललोलाय लोलकुण्डलधारिणे ॥ ६ ॥ बल्लवीवदनाऽम्भोजमालिने नृत्तशालिने । नमः प्रणतपालाय श्रीकृष्णाय नमोनमः ॥ ७ ॥ नमः पापप्रणाशाय गोवर्धनधराय च । पूतनाजीविताऽन्ताय तृणाऽऽवर्ताऽसुहारिणे ॥ ८ ॥ निष्कलाय विमो-

हाय शुद्धाया ऽशुद्धवैरिण । अद्वितीयाय महते श्रीकृष्णाय नमोनमः ॥ ९ ॥ प्रसीद परमाऽनन्द प्रसीद परमेश्वर । आधिव्याधिभुजङ्गेन दष्टं मामुद्धर प्रभो ॥ १० ॥ श्रीकृष्ण रुक्मिणीकान्त गोपीजनमनोहर । सँसारसागरे मग्नं मामुद्धर जगद्गुरो ॥ ११ ॥ केशव क्लेशहरण नाराऽयण जनार्दन । गोविन्द परमाऽऽनन्द माँ समुद्धर माधव ॥ १२ ॥ अथैवं स्तुतिभिराराधयामि । तथा यूयं पञ्चपदं जपन्तश्श्रीकृष्णं ध्यायन्त-स्सँसृतिं तरिष्यथेति होवाच हैरण्यगर्भः । अमुं पञ्चपदं मनुमावर्तयेद्यस्स यात्यनायासतः केवलं तत्पदं तत् । अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन्पुर्वमर्षदिति । तस्मा-त्कृष्ण एव परमो देवस्तं ध्यायेत् । तँ रसयेत् । तं यजेत् । तं भजेत् । ॐ तत्सदि-त्युपनिषद् ॥ इति गोपालपूर्वतान्युपनिषत्समाप्ता ॥

अथ गोपालोत्तरतापिन्युपनिषत् ॥ ॐ एकदा हि व्रजस्त्रियस्सकामाश्शर्वरीमुषित्वा सर्वेश्वरं गोपालं कृष्णमूचिरे । उवाच ताः कृष्ण अमुकस्मै ब्राह्मणाय भैक्षं दातव्यमिति दु(दू)र्वासस इति । कथं यास्यामो जलं तीर्त्वा यमुनायाः । यतश्श्रेयो भवति कृष्णेति ब्रह्मचारीत्युक्त्वा मार्गं वो दास्यति । यं माँ स्मृत्वाऽगाधा गाधा भवति । यं माँ स्मृत्वाऽपूतः पूतो भवति । यं माँ स्मृत्वाऽव्रती व्रती भवति । यं माँ स्मृत्वा सकामो निष्कामो भवति । यं माँ स्मृत्वाऽश्रोत्रियश्श्रोत्रियो भवति । यं माँ स्मृत्वाऽगाधत-स्स्पर्शरहिताऽपि सर्वा सरिद्गाधा भवति श्रुत्वा तद्वाक्यँ हि वै (रौद्रँ) स्मृत्वा तद्वाक्येन तीर्वा तत्सौर्याँ हि वै गत्वाऽऽश्रमँ पुण्यतमँ हि वै नत्वा मुनिँ श्रेष्ठतमँ हि वै रौद्रं चेति । दत्त्वाऽस्मै ब्राह्मणाय क्षीरमयं घृतमयमिष्टतमँ हि वै मृष्टतमँ हि तुष्टस्स्नात्वा

भुक्त्वा हित्वाऽऽशिषं प्रयुज्याऽन्नं ज्ञात्वाऽदात् । कथं यास्यामो तीर्त्वा सौर्याम् । स होवाच मुनिदु(र्दु)र्वासिनं माँ स्मृत्वा वो दास्यतीति मार्गम् । तासां मध्ये हि श्रेष्ठा गान्धर्वी ह्युवाच तँ हि वै ताभिः । एवं कथं कृष्णो ब्रह्मचारी । कथं दूर्वाऽशनो मुनिः । ताँ हि मुख्यां विधाय पूर्वमनुकृत्वा तुष्णीमासुः । शब्दवानाकाशश्शब्दाऽऽकाशाभ्यां भिन्नः । तस्मिन्नाकाशस्तिष्ठति । आकाशे तिष्ठति । स ह्याकाशस्तं न वेद । स ह्यात्मा । अहं कथं भोक्ता भवामि । स्पर्शवान्वायुस्स्पर्शवायुभ्या भिन्नः । तस्मिन्वायुस्तिष्ठति । वायौ तिष्ठति । वायुस्तं न वेद । स ह्यात्मा । अहं कथं भोक्ता भवामि । रूपवदिदं तेजो रूपाऽग्निभ्यां भिन्नः । तस्मिन्नग्निस्तिष्ठाति । अग्नौ तिष्ठति । अग्निस्तं न वेद । स ह्यात्मा । अहं कथं भोक्ता भवामि । रसवत्य आपो रसाऽद्भ्यां भिन्नाः । तास्वापस्तिष्ठन्ति । अप्सु

तिष्ठन्ति । आपस्तं न विदुः । स ह्यात्मा । अहं कथं भोक्ता भवामि । गन्धवतीयं भूमिर्गन्धभूमिभ्यां भिन्ना । तस्यां भूमिस्तिष्ठति । भूमौ तिष्ठति । भूमिस्तं न वेद । स ह्यात्मा। अहं कथं भोक्ता भवामि । इदं हि मनसैवेदं मनुते । तानीदँ हि गृह्णाति । यत्र सर्वमात्मैवाऽभूत्तत्र वा कुत्र मनुते । कथं वा गच्छतीति । स ह्यात्मा । अहँ कथं भोक्ता भवामि । अयं हि कृष्णो यो हि प्रेष्ठश्शरीरद्वयकारणं भवति । द्वा सुपर्णौ भवतो ब्रह्मणोऽहँ सम्भूतस्तथेतरो भोक्ता भवाति । अन्यो हि साक्षी भवतीति । वृक्षधर्मे तौ तिष्ठतः । अतो भोक्त्रभोक्तारौ । पूर्वो हि भोक्ता भवति । तथेतरो भोक्ता कृष्णो भवतीति । यत्र विद्याऽविद्ये न विदाम । विद्याऽविद्याभ्यां भिन्नो विद्यामयो हि यस्स कथं विषयी भवतीति । यो ह वै कामेन कामान्कामयते स कामी भवति । यो ह वै त्वकामेन कामान्कामयते

सोऽकामी भवति । जन्मजराभ्या भिन्न स्थाणुरयमच्छेद्योऽयम् । योऽसौ सूर्ये तिष्ठति योऽसौ गोषु तिष्ठति । योऽसौ गोपान्पालयति । योऽसौ सर्वेषु देवेषु तिष्ठति । योऽसौ सर्वैर्देवैर्गीयते । योऽसौ सर्वेषु भूतेष्वाविश्य भूतानि विदधाति स वो हि स्वामी भवति । सा होवाच गान्धर्वी कथं वाऽस्मासु जातो गोपालः कथं वा ज्ञातोऽसौ त्वया मुने कृष्णः । को वाऽस्य मन्त्रः । किँ स्थानम् । कथं वा देवक्यां जातः । को वाऽस्य जायाग्रामो भवति । कीदृशी पूजाऽस्य गोपालस्य भवति । साक्षात्प्रकृतिपरोऽयमात्मा गोपालः कथं त्ववतीर्णो भूम्याँ हि वै सा गान्धर्वी मुनिमुवाच । स होवाच ताँ हि वै पूर्वं नाराऽयणो यस्मिँल्लोका ओताश्च प्रोताश्च तस्य हृत्पद्माज्जातोऽब्जयोनिस्तपस्तप्त्वा तस्मै ह वरं ददौ । सकामप्रश्नमेव वव्रे । तं हाऽस्मै ददौ । स होवाचाऽब्जयोनिः ।

यो वाऽवताराणां मध्ये श्रेष्ठोऽवतारः को भवति। येन लोकास्स्तुष्टा भवन्ति। यँ स्मृत्वा मुक्ता अस्मात्सँसाराद्भवन्ति। कथं वाऽस्याऽवतारस्य ब्रह्मता भवति। स होवाच तं हि वै नाराऽयणो देवः। सकाम्या मेरोश्शृङ्गे यथा सप्तपुर्यो भवन्ति तथा निष्काम्या स्सकाम्या भूगोपालचक्रे सप्तपुर्यो भवन्ति। तासां मध्ये साक्षाद्ब्रह्मगोपालपुरी भवति। सकाम्या निष्काम्या देवानाँ सर्वेषां भूतानां भवति। अथाऽस्य भजनं भवति। यथा हि वै सरसि पद्म तिष्ठति तथा भूम्यां तिष्ठति। चक्रेण रक्षिता मथुरा। तस्माद्गोपाल-पुरी भवति। बृहद्बृहद्वनं मधोर्मधुवनं तालस्तालवनं काम्यं काम्यवनं बहुला बहुलवनं कुमुदः कुमुदवनं खदिरः खदिरवनं भद्रो भद्रवनं भाण्डीर इति भाण्डीरवनँ श्रीवनं लोहवनं वृन्दाऽवनमेतैरावृता पुरी भवति। तत्र तेष्वेव गगनेष्वेवं देवा मनुष्या गन्धर्वा

नागाः किन्नरा गायन्ति नृत्यन्ति नृत्यन्तीति । तत्र द्वादशाऽऽदित्या एकादश रुद्रा अष्टौ वसवस्सप्त मुनयो ब्रह्मा नारदश्च पञ्च विनायका वीरेश्वरो रुद्रेश्वरोऽम्बिकेश्वरो गणेश्वरो नीलकण्ठेश्वरो विश्वेश्वरो गोपालेश्वरो भद्रेश्वरो इत्यष्टावन्यानि लिङ्गानि चतुर्विंशतिर्भवन्ति । द्वे वने स्तः कृष्णवनं भद्रवनम् । तयोरन्तर्द्वादश वनानि पुण्यानि पुण्यतमानि । तेष्वेव देवास्तिष्ठन्ति । सिद्धास्सिद्धिं प्राऽऽप्ताः । तत्र हि रामस्य राममूर्तिः प्रद्युम्नस्य प्रद्युम्नमूर्तिरनिरुद्धस्याऽनिरुद्धमूर्तिः कृष्णस्य कृष्णमूर्तिः । वनेष्वेवं मथुरास्वेवं द्वादश मूर्तयो भवन्ति । एकाँ हि रुद्रा यजन्ति । द्वितीयां हि ब्रह्मा यजति । तृतीयां ब्रह्मजा यजन्ति । चतुर्थीं मरुतो यजन्ति । पञ्चमीं विनायका यजन्ति । षष्ठीं च वसवो यजन्ति । सप्तमीमृषयो यजन्ति । अष्टमीं गन्धर्वा यजन्ति । नवमीमप्सरसो

यजन्ति। दशमी वै ह्यन्तर्धाने तिष्ठति। एकादशी(शामि)ति स्वपदाऽनुगा। द्वादशी(शमि)ति भूम्यां तिष्ठति ताँ हि ये यजन्ति। ते मृत्युं तरन्ति। मुक्तिं लभन्ते। गर्भजन्मजरामरणतापत्रयाऽऽत्मकदुःखं तरन्ति। तदप्येते श्लोका भवन्ति। सम्प्राऽऽप्य मथुराँ रम्याँ सदा ब्रह्माऽऽदिवन्दिताम्। शङ्खचक्रगदाशार्ङ्गरक्षितां मुसलाऽऽदिभिः ॥१॥ यत्राऽसौ सँस्थितः कृष्णः स्त्रीभिश्शक्त्या समाहितः। रमाऽनिरुद्धप्रद्युम्नै रुक्मिण्या सहितो विभुः ॥२॥ चतुश्शब्दो भवेदेको ह्योङ्कारश्च (स्य) उदाहृतः। तस्मादेव परो रजसेति सोऽहमित्यवधार्याऽऽत्मानं गोपालोऽहमिति भावयेत्। स मोक्षमश्नुते। स ब्रह्मत्वमधिगच्छति। स ब्रह्मविद्भवति। स गोपाञ्जीवानात्मत्वेन सृष्टिपर्यन्तमालाति। स गोपालो ह्योम् (ह्यों भवति)। तत्सत्सोऽहम्। परं ब्रह्म कृष्णाऽऽत्मको नित्याऽऽनन्दैकस्वरूपस्सोऽहम्। तत्सद्गोपालोऽहमेव। परँ सत्यम-

बाधितँ सोऽहमित्यात्मानमादाय मनसैक्यं कुर्यात् । आत्मानं गोपालोऽहमिति भावयेत् । स एवाऽव्यक्तोऽनन्तो नित्यो गोपालः । मथुरायाँ स्थितिर्ब्रह्मन्त्सर्वदा मे भविष्यति । शङ्खचक्रगदापद्मवनमालाधरस्य वै ॥ १ ॥ विश्वरूपं परं ज्योतिस्स्वरूपं रूपवर्जितम् । मथुरामण्डले यस्तु जम्बूद्वीपे स्थितोऽपि वा ॥ २ ॥ योऽर्चयेत्प्रतिमा मा च स मे प्रियतरो भुवि । तस्यामधिष्ठितः कृष्णरूपी पूज्यस्त्वया सदा ॥ ३ ॥ चतुर्धा चाऽस्याऽवतारभेदत्वेन यजन्ति माम् । युगाऽनुवर्तिनो लोका यजन्ती ह सुमेधसः ॥ ४ ॥ गोपालं साऽनुजं कृष्णं रुक्मिण्या सह तत्परम् । गोपालोऽहमजो नित्यः प्रद्युम्नोऽहं सनातनः ॥ ५ ॥ रामोऽहमनिरुद्धोऽहमात्मानं चाऽर्चयेद्बुधः । मयोक्तेन स धर्मेण निष्कामेन विभागशः ॥ ६ ॥ तैरहं पूजनीयो हि भद्र कृष्णनिवासिभिः ।

तद्धर्मगतिहीना ये तस्यां मयि पराऽयणाः ॥७॥ कलिना ग्रसिता ये वै तेषा तस्यामव-स्थितिः । यथा त्वं सह पुत्रैस्तु यथा रुद्रो गणैस्सह ॥ ८ ॥ यथा श्रियाऽभियुक्तोऽहं तथा भक्तो मम प्रियः । स होवाचाऽजयोनिश्चतुर्भिर्देवैः कथमेको देवस्स्यात् । एकमक्षरं यद्विश्रुतमनेकाऽक्षरं कथं सम्भूतम् । स होवाच तँ हि पूर्वमेकमेवाऽद्वितीयं ब्रह्माऽऽसीत् । तस्मादव्यक्तमेकाऽक्षरम् । तस्मादक्षरान्महत् । महतोऽहङ्कारः । तस्मा-दहङ्कारात्पञ्च तन्मात्राणि । तेभ्यो भतानि । तैरावृतमक्षरम् । अक्षरोऽहमोङ्कारोऽयमज-रोऽमरोऽभयोऽमृतो ब्रह्माऽभयँ हि वै । स मुक्तोऽहमस्मि । अक्षरोऽहमस्मि । सत्तामात्रं चित्स्वरूपं प्रकाशं व्यापकं तथा ॥ ९ ॥ एकमेवाऽद्वयं ब्रह्म मायया च चतुष्ट-यम् । रोहिणीतनयो विश्व अकाराऽक्षरसम्भवः ॥ १० ॥ तैजसाऽऽत्मकप्रद्युम्न उका-

राऽक्षरसम्भवः । प्राऽऽज्ञाऽऽत्मकोऽनिरुद्धोऽसौ मकाराऽक्षरसम्भवः ॥ ११ ॥ अर्धमात्राऽऽत्मकः कृष्णो यस्मिन्विश्वं प्रतिष्ठितम् । कृष्णाऽऽत्मिका जगत्कर्त्री मूलप्रकृतिरुक्मिणी ॥ १२ ॥ व्रजस्त्रीजनसम्भूतश्श्रुतिभ्यो ज्ञान ( ब्रह्म ) सङ्गतः । प्रणवत्वेन प्रकृतित्वं वदन्ति ब्रह्मवादिनः ॥ १३ ॥ तस्मादोङ्कारसम्भूतो गोपालो विश्वसँस्थितः । क्लीमोङ्कारस्यैकत्वं (तत्त्वं) वदान्ति ब्रह्मवादिनः ॥१४॥ मथुरायां विशेषेण मां ध्यायन्मोक्षमश्नुते । अष्टपत्रं विकसितं हृत्पद्मं तत्र सँस्थितम् ॥१५॥ दिव्यध्वजाऽऽतपत्रैस्तु चिह्नितं चरणद्वयम् । श्रीवत्सलाञ्छनं हृत्स्थं कौस्तुभं प्रभया युतम् ॥ १६ ॥ चतुर्भुजं शङ्खचक्रशार्ङ्गपद्मगदाऽन्वितम् । सुकेयूराऽन्वितं बाहुं कण्ठमालासुशोभितम् ॥ १७ ॥ द्युमत्किरीटमभयं स्फुरन्मकरकुण्डलम् । हिरण्मयं सौम्यतनुं स्वभक्तायाऽभयप्रदम् ॥ १८ ॥

ध्यायेन्मनसि मां नित्यं वेणुशृङ्गधरं तु वा। मथ्यते तु जगत्सर्वं ब्रह्मज्ञानेन येन वा ॥ १९ ॥ मत्सारभूतं यद्यत्स्यान्मथुरा सा निगद्यते। अष्टदिक्पालकैर्भूमिपद्मं विकसितं जगत् ॥ २० ॥ सँसाराऽर्णवसञ्जातँ सेवितं मम मानसे। चन्द्रसूर्यत्विषो दिव्या ध्वजा मेरुर्हिरण्मयाः ॥ २१ ॥ आतपत्रं ब्रह्मलोकमथो ( कं तदू ) ( धो ) र्ध्वं चरणँ स्मृतम्। श्रीवत्सस्य स्वरूपं तु वर्तते लाञ्छनैस्सह ॥ २२ ॥ श्रीवत्सलक्षणं तस्मात्कथ्यते ब्रह्मवादिभिः। येन सूर्याऽग्निवाक्चन्द्रतेजसा स्वस्वरूपिणा ॥ २३ ॥ वर्तते कौस्तुभाऽऽख्यमणिं वदन्तीशमानिनः। सत्त्वं रजस्तम इति अहङ्कारश्चतुर्भुजः ॥ २४ ॥ पञ्चभूताऽऽत्मकँ शङ्खं करे रजसि संस्थितम्। बालस्वरूपमित्यन्तं मनश्चक्रं निगद्यते ॥ २५ ॥ आद्या माया भवेच्छार्ङ्गं पद्मं विश्वं करे स्थितम्। आद्या विद्या गदा वेद्या

सर्वदा मे करे स्थिता ॥ २६ ॥ धर्माऽर्थकामकेयूरैर्दिव्यैर्दिव्यमयेरितैः । कण्ठं तु निर्गुणं प्रोक्तं माल्यते आद्यया ऽजया ॥ २७ ॥ माला निगद्यते ब्रह्मन्तव पुत्रैस्तु मानसैः । कूटस्थँ सत्त्वरूपं च किरीटं प्रवदन्ति माम् ॥२८॥ क्षी (क्ष)रोत्तरं प्रस्फुरन्तं कुण्डलं युगलँ स्मृतम् । ध्यायेन्मम प्रियं नित्यं स मोक्षमधिगच्छति ॥ २९ ॥ स मुक्तो भवति तस्मै स्वाऽऽत्मानं तु ददामि वै । एतत्सर्वं मया प्रोक्तं भविष्यद्वै विधे तव ॥ ३० ॥ स्वरूपं द्विविधं चैव सगुणं निर्गुणाऽऽत्मकम् ॥ ३१ ॥ स होवाचा-ऽब्जयोनिः । व्यक्तीनां मूर्तीनां प्रोक्ताना कथं चाऽऽभरणानि भवन्ति । कथं वा देवा यजन्ति । रुद्रा यजन्ति । ब्रह्मा यजति । ब्रह्मजा यजन्ति । विनायका यजन्ति । द्वाप-शाऽऽदित्या यजन्ति । वसवो यजन्ति । गन्धर्वा यजन्ति । सपदाऽनुगा अन्तर्धाने

तिष्ठन्ति । कां मनुष्या यजान्ति । स होवाच तँ हि वै नाराऽयणो देव आद्या व्यक्ता द्वादश मूर्तयस्सर्वेषु लोकेषु सर्वेषु देवेषु सर्वेषु मनुष्येषु तिष्ठन्तीति । रुद्रेषु रौद्री ब्रह्मणीषु ब्राह्मी देवेषु दैवी मनुष्येषु मानवी विनायकेषु विघ्न-विनाशिनी आदित्येषु ज्योतिर्गन्धर्वेषु गान्धर्वी अप्सरस्स्वेवं गौर्वसुष्वेवं कास्या अन्त-र्धानेष्वप्रकाशिनी आविर्भावतिरोभावा स्वपदे तिष्ठन्ति । तामसी राजसी सात्विकी मानुषी विज्ञानघन आनन्दसच्चिदानन्दैकरसे भक्तियोगे तिष्ठति । ॐ प्राऽणा-ऽऽत्मने ॐ तत्सद्भूर्भुवस्सुवस्तस्मै प्राऽणाऽऽत्मने नमोनमः ॥ १ ॥ ॐ श्रीकृष्णाय गोविन्दाय गोपीजनवल्लभाय ॐ तत्सद्भूर्भुवस्सुवस्तस्मै नमोनमः ॥ २ ॥ ओम-पाऽनाऽऽत्मने ॐ तत्सद्भूर्भुवस्सुवस्तस्मै अपाऽनाऽऽत्मने नमोनमः ॥ ३ ॥ ॐ श्रीकृ-

ष्णायाऽनिरुद्धाय ॐ तत्सद्भूर्भुवस्सुवस्तस्मै वै नमोनमः ॥ ४ ॥ ॐ व्यानाऽऽत्मने ॐ तत्सद्भूर्भुवस्सुवस्तस्मै व्यानाऽऽत्मने नमोनमः ॥ ५ ॥ ॐ श्रीकृष्णाय रामाय ॐ तत्सद्भूर्भुवस्सुवस्तस्मै वै नमोनमः ॥ ६ ॥ ओमुदानाऽऽत्मने ॐ तत्सद्भूर्भुवस्सुवस्तस्मै उदानाऽऽत्मने नमोनमः ॥ ७ ॥ ॐ श्रीकृष्णाय देवकीनन्दनाय ॐ तत्सद्भूर्भुवस्सुवस्तस्मै वै नमोनमः ॥ ८ ॥ ॐ समानाऽऽत्मने ॐ तत्सद्भूर्भुवस्सुवस्तस्मै समानाऽऽत्मने नमोनमः ॥ ९ ॥ ॐ श्रीगोपालाय निजस्वरूपाय ॐ तत्सद्भूर्भुवस्सुवस्तस्मै वै नमोनमः ॥ १० ॥ ॐ योऽसौ प्रधानाऽऽत्मा गोपाल ॐ तत्सद्भूर्भुवस्सुवस्तस्मै वै नमोनमः ॥ ११ ॥ ॐ योऽसाविन्द्रियाऽऽत्मा गोपाल ॐ तत्सद्भूर्भुवस्सुवस्तस्मै वै नमोनमः ॥ १२ ॥ ॐ योऽसौ भूताऽऽत्मा गोपाल ॐ तत्स-

र्भुवस्सुवस्तस्मै वै नमोनमः ॥ १३ ॥ ॐ योऽसावुत्तमपुरुषो गोपाल ॐ तत्सद्भू-
र्भुवस्सुवस्तस्मै वै नमोनमः ॥ १४ ॥ ॐ योऽसौ ब्रह्म परं वै ब्रह्म ॐ तत्सद्भू-
र्भुवस्सुवस्तस्मै वै नमोनमः ॥ १५ ॥ ॐ योऽसौ सर्वभूताऽऽत्मा गोपाल ॐ तत्स-
द्भूर्भुवस्सुवस्तस्मै वै नमोनमः ॥ १६ ॥ ॐ जाग्रत्स्वप्नसुषुप्तितुरीयतुरीयाऽतीतोऽन्तर्यामी
गोपाल ॐ तत्सद्भूर्भुवस्सुवस्तस्मै वै नमोनमः ॥ १७ ॥ एको देवस्सर्वभूतेषु गूढस्सर्व-
व्यापी सर्वभूताऽन्तराऽऽत्मा। कर्माऽध्यक्षस्सर्वभूताऽधिवासस्साक्षी चेता केवलो निर्गुणश्च
॥१८॥ रुद्राय नमः। आदित्याय नमः। विनायकाय नमः। सूर्याय नमः। विद्यायै नमः।
इन्द्राय नमः। अग्नये नमः। यमाय नमः। निर्ऋतये नमः। वरुणाय नमः।
वायवे नमः। कुबेराय नमः। ईशानाय नमः। सर्वेभ्यो देवेभ्यो नमः। दत्त्वा स्तुतिं पुण्य-

तमा ब्रह्मणे स्वस्वरूपिणे। कर्त्तृत्वं सर्वभूतानामन्तर्धाने बभूव सः ॥१९॥ ब्रह्मणे ब्रह्मपुत्रेभ्यो नारदात्तु श्रुतं मुने। तथा प्रोक्तं तु गान्धर्वी गच्छ त्वं स्वाऽऽलयाऽन्तिकम् ॥२०॥ इति ॥ ॐ भद्रं कर्णेभिरिति शान्तिः ॥ हरिः ॐ तत्सत् ॥ इति गोपालोत्तरतापिन्युपनिषत्समाप्ता ॥

अथ कृष्णोपनिषत् ॥ ॐ यो रामः कृष्णतामेत्य सार्वाऽऽत्म्यं प्राऽऽप्य लीलया। अतोषयद्देवमौनिपटलं तं नतोऽस्म्यहम् ॥ १ ॥ ॐ भद्रं कर्णेभिरिति शान्तिः। हरिः ॐ श्रीमहाविष्णुँ सच्चिदानन्दलक्षणँ रामचन्द्रं दृष्ट्वा सर्वाऽङ्गसुन्दरं मुनयो वनवासिनो विस्मिता बभूवुः। तँ होचुर्नोऽवद्यमवतारान्वै गण्यन्ते आलिङ्गामो भवन्तमिति। भवाऽन्तरे कृष्णाऽवतारे यूयं गोपिका भूत्वा मामालिङ्गथ अन्ये येऽवतारास्ते हि

गोपा न स्त्रीश्च नो (वो) कुरु। अन्योऽन्यविग्रहं धार्यं तवाऽङ्गस्पर्शनादिह। शश्वत्स्पर्शयिताऽस्माकं गृह्णीमोऽवतारान्वयम् ॥ १ ॥ रुद्राऽऽदीनां वचश्श्रुत्वा प्रोवाच भगवान्स्स्वयम्। अङ्गसङ्गं करिष्यामि भवद्वाक्यं करोम्यहम् ॥ २ ॥ मोदितास्ते सुरास्सर्वे कृतकृत्याऽधुना वयम्। यो नन्दः परमाऽऽनन्दो यशोदा मौक्तिगेहिनी ॥ ३ ॥ माया सा त्रिविधा प्रोक्ता सत्त्वराजसतामसी। प्रोक्ता च सात्विकी रुद्रे भक्ते ब्रह्मणि राजसी ॥ ४ ॥ तामसी दैत्यपक्षेषु माया त्रेधा ह्युदाहृता। अजेया वैष्णवी माया जप्येन च सुता पुरा ॥ ५ ॥ देवकी ब्रह्मपुत्रा सा या वेदैरुपगीयते। निगमो वसुदेवो यो वेदाऽर्थः कृष्णरामयोः ॥ ६ ॥ स्तुवन्ति सततं यस्तु सोऽवतीर्णो महीतले। वने वृन्दाऽवने क्रीडन् गोपगोपीसुरैस्सह ॥ ७ ॥ गोप्यो गाव ऋच-

स्तस्य यष्टिका कमलाऽऽसनः । वँशस्तु भगवान्रुद्रश्श्‍ृङ्गमिन्द्रस्सगौसुरः ॥ ८ ॥ गोकुलं वनवैकुण्ठं तापसास्तत्र ते द्रुमाः । लोभक्रोधाऽऽदयो दैत्याः कलि-कालस्तिरस्कृतः ॥ ९ ॥ गोपरूपो हरिस्साक्षान्मायाविग्रहधारणः । दुर्बोधं कुहकं तस्य मायया मोहितं जगत् ॥ १० ॥ दुर्जया सा सुरैस्सर्वैर्धृष्टिरूपो भवेद्विजः । रुद्रो येन कृतो वँशस्तस्य माया जगत्कथम् ॥ ११ ॥ बलं ज्ञानं सुरणां वै तेषां ज्ञानं हृतं क्षणात् । शेषनागो भवेद्रामः कृष्णो ब्रह्मैव शाश्वतम् ॥ १२ ॥ अष्टावष्टसहस्रे द्वे शताऽऽधिक्या स्त्रियस्तथा । ऋचोपनिषदस्ता वै ब्रह्मरूपा ऋचास्त्रियः॥ १३ ॥ द्वेष-श्चाणूरमल्लोऽयं मत्सरो मुष्टिको जयः । दर्पः कुवलयाऽऽपीडो गर्वो रक्षः खगो बकः ॥ १४ ॥ दया सा रोहिणी माता सत्यभामा धरेति वै । अघाऽसुरो महाव्याधिः

कलिः कँसस्स भूपतिः ॥ १५ ॥ शमो मित्रस्सुदामा च सत्याऽक्रूरोद्धवो दमः । यश्श-ङ्खस्स स्वयं विष्णुर्लक्ष्मीरूपो व्यवस्थितः ॥ १६ ॥ दुग्धसिन्धौ समुत्पन्नो मेघघोषस्तु सँस्मृतः । दुग्धोदधिः कृतस्तेन भग्नभाण्डो दधिग्रहे ॥ १७ ॥ क्रीडते बालको भूत्वा पूर्ववत्सुमहोदधौ । सँहाराऽर्थं च शत्रूणाँ रक्षणाय च सँस्थितः ॥ १८ ॥ कृपाऽर्थे सर्वभू-तानां गोप्तारं धर्ममात्मजम् । यत्स्रष्टुमीश्वरेणाऽऽसीत्तच्चक्रं ब्रह्मरूपधृक् (त्) ॥ १९ ॥ जयन्तीसम्भवो वायुश्चमरो धर्मसंज्ञितः । यस्याऽसौ ज्वलनाऽऽभासः खड्गरूपो महेश्वरः ॥ २० ॥ कश्यपोलूखलः ख्यातो रज्जुर्माताऽदितिस्तथा । चक्रँ शङ्खं च सँसिद्धिं बिन्दुं च सर्वमूर्धनि ॥ २१ ॥ यावन्ति देवरूपाणि वदन्ति विबुधा जनाः । नमन्ति देवरूपेभ्य एवमादि न सँशयः ॥ २२ ॥ गदा च कालिका साक्षात्सर्वशत्रुनिबर्हिणी । धनुश्शार्ङ्गं

स्वयं या च शरत्कालस्सुभोजनः ॥ २३ ॥ अजकाण्डं जगद्बीजं धृतं पाणौ स्वलीलया । गदी वटभाण्डीरस्सुदा ( धा ) मा नारदो मुनिः ॥ २४ ॥ वृन्दा भक्तिः क्रिया बुद्धिः सर्वजन्तुप्रकाशिनी । तस्मान्न भिन्नं नाऽभिन्नमाभिर्भिन्नो न वै विभुः ॥ २५ ॥ भूमावुत्तारितँ सर्वं वैकुण्ठँ स्वर्गवासिनाम् ॥ ( सर्वतीर्थफलं लभते य एवं वेद । देहबन्धाद्विमुच्यते ॥ ) इत्युपनिषत् ॥ ॐ भद्रकर्णेभिरिति शान्तिः ॥ हरिः ॐ तत्सत् ॥ इति कृष्णोपनिषत्समाप्ता ॥

अथ यज्ञावल्क्योपनिषत् ॥ ॐ सन्न्यासज्ञानसम्पन्ना यान्ति यद्वैष्णवं पदम् । तद्वै पदं ब्रह्मतत्त्वँ रामचन्द्रपदं भजे ॥ १ ॥ ॐ पूर्णमद इति शान्तिः ॥ हरिःओमथ जनको ह वैदेहो याज्ञवल्क्यमुपसमेत्योवाच भगवन्सन्न्यासमनुब्रूहीति कथँ सन्न्यासल-

क्षणम् । स होवाच याज्ञवल्क्यो ब्रह्मचर्यँ समाप्य गृही भवेत् । गृहाद्वनी भूत्वा प्रव्रजेत् । यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा । अथ पुनर्व्रती वाऽव्रती वा स्नातको वाऽस्नातको वा उत्सन्नाऽग्निरनग्निको वा यदहरेव विरजेत्त-दहरेव प्रव्रजेत् । तदेके प्राजापत्यामेवेष्टिं कुर्वन्ति । अथ वा न कुर्यादाग्नेय्यामेव कुर्यात् । अग्निर्हि प्राऽणः । प्राऽणमेवैतया करोति । त्रैधातवीयामेव कुर्यात् । एतयैव त्रयो धातवो यदुत सत्त्वँ रजस्तम इति । अयन्ते योनिरृत्विजो यतो जातो अरो-थाः । तं जानन्नग्न आरोहाऽथानो वर्धया रयिमित्यनेन मन्त्रेणाऽग्निमाजिघ्रेत् । एष अग्नेर्योनिर्यः प्राऽणं गच्छ स्वां योनिं गच्छ स्वाहेत्येवमेवैतदाग्रामादग्निमाहृत्य पूर्व-मग्निमाजिघ्रेत् । यदाग्निं न विन्देदप्सु जुहुयादापो वै सर्वा देवतास्सर्वाभ्यो देव-

तृ‍यो जुहोमि स्वाहेति स्वा (साऽऽ) ज्यँ हविरनामयम्। मोक्षमन्त्रस्त्रय्येवं वेद तद्ब्रह्म
पाऽऽसितव्यम्। शिखां यज्ञोपवीतं छित्त्वा सन्न्यस्तं मयेति त्रिवारमुच्चरेत्। एवमेवैत-
गवन्निति वै याज्ञवल्क्य ॥ १ ॥ अथ हैनमत्रिः प्रपच्छ याज्ञवल्क्यं यज्ञोपवीती कथं
ब्राह्मण इति। स होवाच याज्ञवल्क्य इदं प्रणवमेवाऽस्य तद्यज्ञोपवीतं य आत्मा।
प्राऽऽश्याऽऽचम्याऽयं विधिरथ (वा) परिव्राड्विवर्णवासा मुण्डोऽपरिग्रहश्शुचिरद्रोही
भैक्षमाणो ब्रह्मभूयाय भवति। एष पन्थाः पारिव्राजकाना वीराऽध्वनि (ध्वाने) वा
नाशके वाऽपां प्रवेशे वाऽग्निप्रवेशे वा महाप्रस्थाने वा। एष पन्था ब्रह्मणा हाऽनुवित्तस्ते-
नेति। स सन्न्यासी ब्रह्मविदिति। एवमेवैष भगवन्निति वै याज्ञवल्क्य। तत्र परमहंसा नाम
संवर्तकाऽऽरुणिश्वेतकेतुदूर्वासऋभुनिदाघदत्ताऽऽत्रेयशुकवामदेवहारीतकप्रभृतयो (ऽ)

व्यक्तलिङ्गा (अ) व्यक्ताऽऽचारा अनुन्मत्ता उन्मत्तवदाचरन्तः परस्त्रीपुरपराऽङ्मुखा-
स्त्रिदण्डं कमण्डलुं भुक्तपात्रं जलपवित्रँ शिखां यज्ञोपवीतं बहिरन्तश्चेत्येतत्सर्वं भूस्वा-
हेत्यप्सु परित्यज्याऽऽत्मानमन्विच्छेत् । यथा जातरूपधरा निर्द्वन्द्वा निष्परिग्रहास्तत्त्व-
ब्रह्ममार्गे सम्यक् सम्पन्नाश्शुद्धमानसाः प्राऽणसन्धारणाऽर्थं यथोक्तकाले विमुक्तो भैक्ष-
माचरन्नुदरपात्रेण लाभाऽलाभौ समौ भूत्वा करपात्रेण वा कमण्डलूदकपो भैक्ष-
माचरन्नुदरमा (पा) त्रसङ्ग्रहः पात्राऽन्तरशून्यो जलस्थलकमण्डलुरबाधकरह(स्य)स्थल-
निकेतनो लाभाऽलाभौ समौ (भूत्वा) शून्यागारदेवगृहतृणकूटवल्मीकवृक्षमूलकुलालशा-
लाऽग्निहोत्रशालानदीपुलिनगिरिकुहरकोटरकन्दरनिर्झरस्थण्डिलेष्वनिकेतनिवास्यप्रय-
त्नश्शुभाऽशुभकर्मनिर्मूलनपरस्सन्न्यासेन देहत्यागं करोति स परमहँसो नामेति ।

आशाऽम्बरो न नमस्कारो न दारपुत्राऽभिलाषी लक्ष्याऽलक्ष्यनिर्वर्त्तकः परिव्राट् परमेश्वरो भवति। अत्रैते श्लोका भवन्ति। यो भवेत्पूर्वसन्न्यासी तुल्यो वै धर्मतो यदि। तस्मै प्रणामः कर्तव्यो नेतराय कदा च न ॥ १ ॥ प्रमादिनो बहिश्चित्ताः पिशुनाः कलहोत्सुकाः। सन्न्यासिनोऽपि दृश्यन्ते देव (वेद) सन्दूषिताऽऽशयाः ॥ २ ॥ नामाऽऽदिभ्यः परे भूम्नि स्वाराज्ये चेत्स्थितोऽद्वये। प्रणमेत्कं तदाऽऽत्मज्ञो न कार्यं कर्मणा तदा ॥ ३ ॥ ईश्वरो जीवकलया प्रविष्टो भगवानिति। प्रणमेद्दण्डवद्भूमावाश्वचण्डालगोखरम् ॥ ४ ॥ माँसपाञ्चालिकायास्तु यन्त्रलोकेऽङ्गपञ्जरे। स्नाय्वस्थिग्रन्थिशालिन्यो स्त्रियः किमिव शोभनम् ॥ ५ ॥ त्वङ्माँसरक्तबाष्पाऽम्बु पृथक्कृत्वा विलोचने। समालोकय रम्यं चेत्किं मुधा परिमुह्यसि ॥ ६ ॥ मेरुशृङ्गतटोल्लासिगङ्गा-

जलरयोपमा । दृष्टा यस्मिन्मुने मुक्ताहारस्योल्लासशालिता ॥ ७ ॥ श्मशानेषु दिगन्तेषु स एव ललनास्तनः । श्वभिरास्वाद्यते काले लघुपिण्ड इवाऽन्धसः ॥ ८ ॥ केशकज्जलधारिण्यो दुस्स्पर्शा लोचनप्रियाः । दुष्कृताऽग्निशिखा नार्यो दहन्ति तृणवन्नरम् ॥ ९ ॥ ज्वलना अतिदूरेऽपि सरसा अपि नीरसाः । स्त्रियो हि नरकाऽग्नीनामिन्धनं चारु दारुणम् ॥ १० ॥ कामनाम्ना किरातेन विकीर्णा मुग्धचेतसः । नार्यो नरविहङ्गनामङ्गबन्धनवागुराः ॥ ११ ॥ जन्मपल्वलमत्स्यानां चित्तकर्दमचारिणाम् । पुँसां दुर्वासनारज्जुर्नारी वि(ब)डिशपिण्डिका ॥ १२ ॥ सर्वेषा दोषरत्नानाँ सुसमुद्गिकयाऽनया । दुःखशृङ्खलया नित्यमलमस्तु मम स्त्रिया ॥ १३ ॥ यस्य स्त्री तस्य भोगेच्छा निस्त्रीकस्य क्व भोगभूः । स्त्रियं त्यक्त्वा जगत्त्यक्तं जगत्त्यक्त्वा सुखी भवेत् ॥ १४ ॥

अलभ्यमानस्तनयः पितरौ क्लेशयेच्चिरम्। लब्धो हि गर्भपातेन प्रसवेन च बाधते ॥ १५ ॥ जातस्य ग्रहरोगाऽऽदि कुमारस्य च धूर्तता। उपनीतेऽप्यविद्यत्वमनुद्वाहश्च पण्डिते ॥ १६ ॥ यूनश्च परदाराऽऽदि दारिद्र्यं च कुटुम्बिनः। पुत्रदुःखस्य नाऽस्त्यन्तो धनी चेन्म्रियते तदा ॥ १७ ॥ न पाणिपादचपलो न नेत्रचपलो यतिः। न च वाक्चपलश्चैव ब्रह्मभूतो जितेन्द्रियः ॥ १८ ॥ रिपौ बद्धे स्वदेहे च समैकाऽऽत्म्यं प्रपश्यतः। विवेकिनः कुतः कोपः स्वदेहाऽवयवेष्विव ॥ १९ ॥ अपकारिणि कोपश्चेत्कोपे कोपः कथं न ते। धर्माऽर्थकाममोक्षाणां प्रसह्य परिपन्थिनि ॥ २० ॥ नमोऽस्तु मम कोपाय स्वाऽऽश्रयज्वालिने भृशम्। कोपस्य मम वैराग्यदायिने दोषबोधिने ॥ २१ ॥ यत्र सुप्ता जना नित्यं प्रबुद्धस्तत्र संयमी। प्रबुद्धा यत्र ते विद्वान्

सुषुप्तिं याति योगिराट् ॥ २२ ॥ चिदिहाऽस्तीति चिन्मात्रमिदं चिन्मयमेव च । चित्त्वं चिदहमेते च लोकाश्चिदिति भावय ॥ २३ ॥ यतीनां तदुपाऽऽदेयं पारहँस्यं परं पदम् । नाऽतः परतरं किं चिद्विद्यते मुनिपुङ्गव ॥ २४ ॥ इत्युपनिषत् ॥ ॐ पूर्णमद इति शान्तिः ॥ हरिः ॐ तत्सत् ॥ इति याज्ञवल्क्योपनिषत्समाप्ता ॥

अथ वराहोपनिषत् ॥ ॐ श्रीमद्वराहोपनिषद्वेद्याऽऽखण्डसुखाऽऽकृति । त्रिपान्नाराऽयणाऽऽख्यं तद्रामचन्द्रपदं भजे ॥ १ ॥ ॐ सह नाववत्विति शान्तिः ॥ हरिः ओमथ ऋभुर्वै महामुनिर्देवमानेन द्वादशवत्सरं तपश्चचार । तदवसाने वराहरूपी भगवान्प्राऽऽदुरभूत् । स होवाचोत्तिष्ठोत्तिष्ठ वरं वृणीष्वेति । सोदतिष्ठत् । तस्मै नमस्कृत्योवाच भगवन्कामिभिर्यद्यत्कामितं तत्तत्त्वत्सकाशात्स्वप्नेऽपि न याचे । समस्त-

वेदशास्त्रेतिहासपुराणानि समस्तविद्याजालानि ब्रह्माऽऽदयस्सुरास्सर्वे त्वद्रूपज्ञानान्मुक्ति-माहुः। अतस्त्वद्रूपप्रतिपादिकां ब्रह्मविद्यां ब्रूहीति होवाच। तथेति स होवाच वराह-रूपी भगवान्। चतुर्विंशतितत्त्वानि केचिदिच्छन्ति वादिनः। केचित्षट्त्रिंशत्तत्त्वानि केचित्षण्णवतीनि च ॥ १ ॥ तेषां क्रमं प्रवक्ष्यामि साऽवधानमनाश्शृणु। ज्ञानेन्द्रियाणि पञ्चैव श्रोत्रत्वग्लोचनाऽऽदयः ॥ २ ॥ कर्मेन्द्रियाणि पञ्चैव वाक्पाण्यङ्घ्र्यादयः क्रमात्। प्राऽणाऽऽदयस्तु पञ्चैव पञ्च शब्दाऽऽदयस्तथा ॥ ३ ॥ मनोबुद्धिरहङ्कार-श्चित्तं चेति चतुष्टयम्। चतुर्विंशति तत्त्वानि तानि ब्रह्मविदो विदुः ॥ ४ ॥ एतै-स्तत्त्वैस्समं पञ्चीकृतभूतानि पञ्च च। पृथिव्यापस्तथा तेजो वायुराकाशमेव च ॥ ५ ॥ देहत्रयं स्थूलसूक्ष्मकारणानि विदुर्बुधाः। अवस्थात्रितयं चैव जाग्रत्स्वप्नसुषुप्तयः ॥ ६ ॥

ऽतीतां सर्वोत्कटां सर्वमन्त्राऽऽसनगतां पीठोपपीठदेवतापरिवृता चतुर्भुजां श्रियं हिर-
ण्यवर्णामिति पञ्चदशर्ग्भिर्ध्यायेत् । अथ पञ्चदश ऋगात्मकस्य श्रीसूक्तस्याऽऽनन्दकर्दम-
चिक्लीतेन्दिरासुता ऋषयः । श्रीरित्याद्या ऋचः । चतुर्दशानामृचामानन्दाऽऽद्यृषयः । हिर-
ण्यवर्णाऽऽद्याद्यत्रयस्याऽनुष्टुप् छन्दः । काँसोस्मीत्यस्य बृहती छन्दः । तदन्ययोर्द्वयोस्त्रिष्टुप् ।
पुनरष्टकस्य शेषस्य प्रस्तारपङ्क्तिः । श्र्यग्निर्देवता । हिरण्यवर्णामिति बीजम् ।
काँसोऽस्मीति शक्तिः । हिरण्मया चन्द्रारजतस्रजा ( हिरण्यण्यस्रजा ) हिरण्या
हिरण्यवर्णेति प्रणवाऽऽदिनमोऽन्तैश्चतुर्थ्यन्तैरङ्गन्यासः । अथ वक्त्रत्रयैरङ्गन्यासः ।
मस्तकलोचनश्रुतिघ्राणवदनकण्ठबाहुद्वयहृदयनाभिगुह्यपायूरुजानुजङ्घेषु श्रीसूक्तैरेव
क्रमशो न्यसेत् । अमलकमलसंस्था तद्रजःपुञ्जवर्णा करकमलधृतेष्टाऽभीतियुग्मा-

ऽम्बुजा च । मणिमकुटविचित्राऽलङ्कृताऽऽकल्पजालैस्सकलभुवनमाता सन्ततं श्री-
श्श्रियै नः ॥ १ ॥ तत्पीठकर्णिकायाँ ससाध्यँ श्रीबीजम् । वस्वादित्यकलापद्मेषु
श्रीसूक्तगताऽर्धाऽर्धर्चा तद्बहिर्यश्शुचिरिति मातृकया च श्रियं यन्त्राऽङ्गदशकं च विलि-
ख्य श्रियमावाहयेत् । अङ्गैः प्रथमाऽऽवृतिः । पद्माऽऽदिभिर्द्वितीया । लोकेशैस्तृतीया ।
तदायुधैस्तुरीयाऽऽवृतिर्भवति । श्रीसूक्तैरावाहनाऽऽदि । षोडशसहस्रजपः । सौभाग्य-
रमैकाऽक्षर्या भृगुनृचद्गायत्री । श्रिय ऋष्यादयः । शमिति बीजशक्तिः । श्रीमित्यादि षड-
ङ्गम् । भूयाद्भूयो द्विपद्माऽभयवरदकरा तप्तकार्तस्वराऽऽभा शुभ्राऽभ्राऽऽभेभयुग्मद्वयक-
रधृतकुम्भाऽद्भिरासिच्यमाना । रक्तौघाऽऽबद्धमौलिर्विमलतरदुकूलाऽऽर्तवाऽऽलेपनाऽऽढ्या
पद्माऽक्षी पद्मनाभोरसि कृतवसतिः पद्मगा श्रीश्श्रियै नः ॥ १ ॥ तत्पीठम् । अष्टपत्रं वृत्तत्रयं

द्वादशराशिखण्डं चतुरश्रँ रमापीठं भवति। कर्णिकायां ससाध्यं श्रीबीजम्। विभूतिरुन्नतिः कान्तिस्सृष्टिः कीर्तिस्सन्न(स्थितिर्न)तिर्व्यु(पु)ष्टिस्स(रु)त्कृष्टिर्ऋद्धिरिति प्रणवाऽऽदिनमोऽन्तैश्चतुर्थ्यन्तैर्नवशक्तिं यजेत्। अङ्गे प्रथमाऽऽवृतिः। वासुदेवा ऽऽदिभिर्द्वितीया। बालक्या-दिभिस्तृतीया। इन्द्राऽऽदिभिश्चतुर्थी भवति। द्वादशलक्षजपः। श्रीलक्ष्मीर्वरदा विष्णुपत्नी वसुप्रदा। हिरण्यरूपा स्वर्णमालिनी रजतस्रजा स्वर्णप्रभा स्वर्णप्राऽऽकारा पद्मवासिनी पद्म-हस्ता पद्मप्रिया मुक्ताऽलङ्कारा चन्द्रसूर्या बिल्वप्रिया ईश्वरी भुक्तिर्मुक्तिर्विभूतिर्ऋद्धिस्स-मृद्धिःकृष्टिः पुष्टिर्धनदा धनेश्वरी श्रद्धा भोगिनी भोगदा सावित्री धात्री विधात्रीत्यादिप्रण-वाऽऽदिनमोऽन्ताश्चतुर्थ्यन्ता मन्त्राः। एकाऽक्षरवदङ्गाऽऽदिपीठम्। लक्षजपः। दशांशं तर्प-णम्। दशांशं हवनम्। द्विजतृप्तिः। निष्कामानामेव श्रीविद्यासिद्धिः। न कदाऽपि

सकामानामिति ॥ १ ॥ अथ हैनं देवा ऊचुस्तुरीयया मायया निर्दिष्टं तत्त्वं ब्रूहीति ।
तथेति स होवाच । योगेन योगो ज्ञातव्यो योगो योगात्प्रवर्द्धते । योऽप्रमत्तस्तु योगेन
स योगी रमते चिरम् ॥ १ ॥ समापय्य निद्रां सुजीर्णेऽल्पभोजी श्रमत्याज्यबाधे
विविक्ते प्रदेशे । सदा शीतनिस्तृष्ण एष प्रयत्नोऽथ वा प्राऽणरोधो निजाऽभ्यासमा-
र्गात् ॥ २ ॥ वक्त्रेणाऽऽपूर्य वायुं हुतवहनिलयेऽपाऽनमाकृष्य धृत्वा स्वाऽङ्गुष्ठाऽऽद्य-
ङ्गुलीभिर्वरकरतलयोष्षड्भिरेवं निरुध्य । श्रोत्रे नेत्रे च नासापुटयुगलमथोऽनेन मार्गेण
सम्यक् पश्यन्ति प्रत्ययांशं प्रणवबहुविधध्यानसंलीनचित्ताः ॥ ३ ॥ श्रवणमुखनयन-
नासानिरोधनेनैव कर्तव्यम् । शुद्धसुषुम्नासरणौ स्फुटममलं श्रूयते नादः ॥ ४ ॥ विचि-
त्रघोषसंयुक्ताऽनाहते श्रूयते ध्वनिः । दिव्यदेहश्च तेजस्वी दिव्यगन्धोऽप्यरोगवान् ॥ ५ ॥

सम्पूर्णहृदयश्शून्ये त्वारम्भे योगवान्भवेत् । द्वितीया विघटीकृत्य वायुर्भवति मध्यगः ॥ ६ ॥ दृढाऽऽसनो भवेद्योगी पद्माऽऽद्यासनसँस्थितः । विष्णुग्रन्थेस्ततो भेदात्परमाऽऽनन्दसम्भवः ॥ ७ ॥ अतिशून्यो विमर्दश्च भेरीशब्दस्ततो भवेत् । तृतीया यत्नतो भित्त्वा निनादो मर्द्दलध्वनिः ॥ ८ ॥ महाशून्यं ततो याति सर्वसिद्धिसमाश्रयम् । चित्ताऽऽनन्दं ततो भित्त्वा सर्वपीठगताऽनिलः ॥ ९ ॥ निष्पत्तौ वैष्णवश्शब्दः कणतीति कणो भवेत् । एकीभूतं तदा चित्तं सनकाऽऽदिमुनीडितम् ॥ १० ॥ अन्तेऽनन्तं समारोप्य खण्डेऽखण्डं समर्पयन् । भूमानं प्रकृतिं ध्यात्वा कृतकृत्योऽमृतो भवेत् ॥ ११ ॥ योगेन योगं सँरोध्य भावं भावेन चाऽञ्जसा । निर्विकल्पं परं तत्त्वँ सदा भूत्वा परं भवेत् ॥ १२ ॥ अहम्भावं परित्यज्य जगद्भावमनीदृशम् । निर्विकल्पे

स्थितो विद्वान्भूयो नाऽप्यनुशोचति ॥१३॥ सलिले सैन्धवं यद्वत्साम्यं भवति योगतः। तथाऽऽत्ममनसोरैक्यं समाधिरभिधीयते॥१४॥ यदा सङ्क्षीयते प्राऽणो मानसं च प्रलीयते। तदा समरसत्वं यत्समाधिरभिधीयते ॥ १५ ॥ यत्समत्वं तयोरत्र जीवाऽऽत्मपरमाऽऽत्मनोः। समस्तनष्टसङ्कल्पस्समाधिरभिधीयते ॥ १६ ॥ प्रभाशून्यं मनश्शून्यं बुद्धिशून्यं निरामयम्। सर्वशून्यं निराभासँ समाधिरभिधीयते ॥ १७ ॥ स्वयमुच्चलिते देहे देही नित्यसमाधिना। निश्चलं तं विजानीयात्समाधिरभिधीयते ॥ १८ ॥ यत्रयत्र मनो याति तत्रतत्र परं पदम्। तत्रतत्र परं ब्रह्म सर्वत्र समवस्थितम् ॥ १९ ॥ इति ॥ २ ॥ अथ हैनं देवा ऊचुर्नवचक्रविवेकमनुब्रूहीति। तथेति स होवाच। आधारे ब्रह्मचक्रं त्रिरावृतं (वर्तँ) भगमण्डलाऽऽकारम्। तत्र

मूलकन्दे शक्तिः पावकाऽऽकारं ध्यायेत्। तत्रैव कामरूपपीठँ सर्वकामप्रदं भवति। इत्याधारचक्रम्। द्वितीयँ स्वाऽधिष्ठानचक्रँ षड्दलम्। तन्मध्ये पश्चिमाऽभिमुखं लिङ्गं प्रवालाऽङ्कुरसदृशं ध्यायेत्। तत्रैवोड्याणपीठं जगदाकर्षणसिद्धिदं भवति। तृतीयं नाभिचक्रं पञ्चाऽऽवर्तँ सर्पकुटिलाऽऽकारम्। तन्मध्ये कुण्डलिनीं बालाऽर्ककोटिप्रभां तटित्सन्निभा (तनुमध्यां) ध्यायेत्। सामर्थ्यशक्तिस्सर्वसिद्धिप्रदा भवति। मणिपूरकचक्रँ हृदयचक्रम्। अष्टदलमधोमुखम्। तन्मध्ये ज्योतिर्मयलिङ्गाऽऽकारं ध्यायेत्। सैव हँसकला सर्वप्रियस्सर्वलोकवश्यकरी भवति। कण्ठचक्रं चतुरङ्गुलम्। तत्र वामे इडा चन्द्रनाडी दक्षिणे पिङ्गला सूर्यनाडी तन्मध्ये सुषुम्नाँ श्वेतवर्णां ध्यायेत्। य एवं वेदाऽनाहतसिद्धिदा भवति। तालुचक्रम्। तत्राऽमृतधाराप्रवाहः। घण्टिकालिङ्गमूलचक्ररन्ध्रे राजदन्ताऽवल-

म्नि नीविवरं दशद्वादशाऽरम्। तत्र शून्यं ध्यायेत् । चित्तलयं भवति । सप्तमं भ्रूचक्रमङ्गुष्ठमात्रम् । तत्र ज्ञाननेत्रं दीपशिखाऽऽकारं ध्यायेत्। तदेव कपालकन्दवाक्सिद्धिदं भवति । आज्ञाचक्रमष्टमम्। ब्रह्मरन्ध्रं निर्वाणचक्रम्। तत्र सूचिकागृ(ग्र)हेतरं धूम्रशिखाऽऽकारं ध्यायेत्। तत्र जालन्धरपीठं मोक्षप्रदं भवतीति परब्रह्मचक्रम्। नवममाकाशचक्रम् । तत्र षोडशदलपद्ममूर्ध्वमुखं तन्मध्यकर्णिकात्रिकूटाऽऽकारम्।तन्मध्ये ऊर्ध्वशक्तिः। तां पश्यन् ध्यायेत्। तत्रैव पूर्णगिरिपीठँ सर्वेच्छासिद्धिसाधनं भवति । सौभाग्यलक्ष्म्युपनिषदं नित्यमधीते सोऽग्निपूतो भवति । स वायुपूतो भवति। स सकलधनधान्यसत्पुत्रकलत्रहयभूगजपशुमहिषीदासीदासयोगज्ञानवान्भवति। न स पुनरावर्तत न स पुनरावर्तत इत्युपनिषत् ॥ ॐ वाङ् मे मनसीति शान्तिः ॥ हरिः ॐ तत्सत् ॥ इति श्रीसौभाग्यलक्ष्म्युपनिषत्समाप्ता ॥

अथ सरस्वतीरहस्योपनिषत् ॥ ॐ प्रतियोगिविनिर्मुक्तब्रह्मविद्यैकगोचरम्। अखण्डनिर्विकल्पं तद्रामचन्द्रपदं भजे ॥१॥ ॐ वाङ्मे मनसीति शान्तिः ॥ हरिः ओमृषयो ह वै भगवन्तमाश्वलायनं सम्पूज्य पप्रच्छुः केनोपायेन तज्ज्ञानं तत्पदाऽर्थाऽवभासकम्। यदुपासऽऽनया तत्त्वं जानासि भगवन्वद ॥ १ ॥ सरस्वतीदशश्लोक्या सऋचा बीजमिश्रया। स्तुत्वा जप्त्वा परां सिद्धिमलभं मुनिपुङ्गवाः ॥ २ ॥ ऋषय ऊचुः ॥ कथं सारस्वतप्राऽऽप्तिः केन ध्यानेन सुव्रत। महासरस्वती येन तुष्टा भगवती वद ॥ ३ ॥ स होवाचाऽऽश्वलायनः । अस्य श्रीसरस्वतीदशश्लोकीमहामन्त्रस्य । अहमाश्वलायन ऋषिः। अनुष्टुप् छन्दः। श्रीवागीश्वरी देवता। यद्वागिति बीजम्। देवीं वाचमिति शक्तिः। प्र णो देवीति कीलकम्। विनियोगस्तत्प्रीत्यर्थे। श्रद्धा मेधा प्रज्ञा धारणा वाग्दे-

वता महासरस्वतीत्येतैरङ्गन्यासः ॥ नीहारहारघनसारसुधाऽऽकराऽऽभां कल्याणदां कनकचम्पकदामभूषाम् । उत्तुङ्गपीनकुचकुम्भमनोहराऽङ्गीं वाणीं नमामि मनसा वचसा विभूत्यै ॥ १ ॥ ॐ प्रणोदेवीत्यस्य मन्त्रस्य । भरद्वाज ऋषिः । गायत्री छन्दः । श्रीसरस्वती देवता । प्रणवेन बीजशक्तिः कीलकम् । इष्टाऽर्थे विनियोगः । मन्त्रेण न्यासः ॥ या वेदाऽन्ताऽर्थतत्त्वैकस्वरूपा परमाऽर्थतः । नामरूपाऽऽत्मना व्यक्ता सा मां पातु सरस्वती ॥ ॐ प्र णो देवी सरस्वती वाजेभिर्वाजिनीवती ॥ धीनामवित्र्यवतु ॥१॥ आ नो दिव इति मन्त्रस्य । अत्रिर्ऋषिः । त्रिष्टुप् छन्दः । सरस्वती देवता । ह्रीमिति बीजशक्तिः कीलकम् । इष्टाऽर्थे विनियोगः । मन्त्रेण न्यासः ॥ या साऽङ्गोपाऽङ्गवेदेषु चतुर्ष्वेकैव गीयते । अद्वैता ब्रह्मणश्शक्तिस्सा मां पातु सरस्वती ॥ ह्रीमा नो दिवो बृहतः

सर०र०

॥८४९॥

पर्वतादा सरस्वती यजतागं तु यज्ञम् । हवं देवी जुजुषाणा घृताची शग्मान्नो वाच-मुशती शृणोतु ॥ २ ॥ पावकान इति मन्त्रस्य । मधुच्छन्द ऋषिः । गायत्री छन्दः । सरस्वती देवता । श्रीमिति बीजशक्तिः कीलकम् । इष्टाऽर्थे विनियोगः । मन्त्रेण न्यासः ॥ या वर्णपदवाक्याऽर्थस्वरूपेणैव वर्तते(पा परमाऽर्थतः) । अनादिनिधनाऽनन्ता सा मां पातु सरस्वती ॥ श्रीं पावका नस्सरस्वती वाजेभिर्वाजिनीवती । यज्ञं वष्टु धिया वसुः ॥ ३ ॥ चोदयित्रीति मन्त्रस्य । मधुच्छन्द ऋषिः । गायत्री छन्दः । सरस्वती देवता । ब्लूमिति बीजशक्तिः कीलकम् । मन्त्रेण न्यासः ॥ अध्यात्ममाधिदैवं च देवानां सम्यगीश्वरी । प्रत्यगास्ते वदन्ती या सा मां पातु सरस्वती ॥ ब्लूं चोदयित्री सूनृतानां चेतन्ती सुमतीनाम् । यज्ञं दधे सरस्वती ॥ ४ ॥ महो अर्णोति मन्त्रस्य । मधुच्छन्द ऋषिः । गायत्री

छन्दः । सरस्वती देवता । सौरिति बीजशक्तिः कीलकम् । मन्त्रेण न्यासः । अन्तर्यो-
म्यात्मना विश्वं त्रैलोक्यं या नियच्छति । रुद्राऽऽदित्याऽऽदिरूपस्था यस्यामावेश्य तां
पुनः । ध्यायन्ति सर्वरूपैका सा मा पातु सरस्वती । सौर्महो अर्णस्सरस्वती प्रचेतयति
केतुना । धियो विश्वा विराजति ॥५॥ चत्वारि वागिति मन्त्रस्य उचत्य(थ्य)पुत्र (त्रो दी-
र्घतम) ऋषिः । त्रिष्टुप् छन्दः । सरस्वती देवता । ऐमिति बीजशक्तिः कीलकम् । मन्त्रेण
न्यासः । या प्रत्यगूदृष्टिभिर्जीवैर्व्यज्यमानाऽनुभूयते । व्यापिनी ज्ञप्तिरूपैका सा मां पातु
सरस्वती ॥ ऐं चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा
त्रीणि निहिता नेङ्गयति तुरीयं वाचो मनुष्या वदन्ति ॥ ६ ॥ यद्वाग्वदन्तीति मन्त्रस्य
भार्गव ऋषिः । त्रिष्टुप् छन्दः । सरस्वती देवता । क्लीमिति बीजशक्तिः कीलकम् ।

मन्त्रेण न्यासः । नामजात्यादिभिर्भेदैरष्टधा या विकल्पिता। निर्विकल्पाऽऽत्मना व्यक्ता सा मा पातु सरस्वती ॥ क्लीं यद्वाग्वदन्त्यविचेतनानि राष्ट्री देवानां निषसाद मन्द्रा । चतस्र ऊर्जं दुदुहे पयाँसि क स्विदस्याः परमं जगाम ॥ ७ ॥ देवीं वाचमिति मन्त्रस्य भार्गव ऋषिः । त्रिष्टुप् छन्दः । सरस्वती देवता । सौरिति बीजशक्तिः कीलकम् । मन्त्रेण न्यासः । व्यक्ताऽव्यक्तगिरस्सर्वे वेदा (देवा) ऽऽद्या व्याहरन्ति याम् । सर्व-कामदुघा धेनुस्सा मां पातु सरस्वती ॥ सौर्देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति । सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुपसुष्टुतैतु ॥ ८ ॥ उत त्व इति मन्त्रस्य बृहस्पतिर्ऋषिः । त्रिष्टुप् छन्दः । सरस्वती देवता । समिति बीज-शक्तिः कीलकम् । मन्त्रेण न्यासः । यां विदित्वाऽखिलं बन्धं निर्मथ्याऽम(खि)लवर्त्म-

ना। योगी याति परँ स्थानँ सा मा पातु सरस्वती ॥ समुत त्वः पश्यन्न ददर्श वाचमुत त्वश्शृण्वन्न शृणोत्येनाम् । उतो त्वस्मै तन्वाँ३ विसस्रे जायेव पत्य उशती सुवासाः ॥ ९ ॥ अम्बितम इति मन्त्रस्य गृत्समद ऋषिः । अनुष्टुप् छन्दः । सरस्वती देवता । ऐमिति बीजशक्तिः कीलकम् । मन्त्रेण न्यासः । नामरूपाऽऽत्मकँ सर्वं यस्यामावेश्यतां पुनः । ध्यायन्ति ब्रह्मरूपैका सा मां पातु सरस्वती ॥ ऐमम्बितमे नदीतमे देवितमे सरस्वति । अप्रशस्ता इव स्मसि प्रशस्ति(स्त)मम्ब नस्कृधि ॥१०॥ चतुर्मुखमुखाऽम्भोजवनहँसवधूर्मम । मानसे रमतां नित्यँ सर्वशुक्ला सरस्वती ॥ १ ॥ नमस्ते शारदे देवि काश्मीरपुरवासिनि । त्वामहं प्रार्थये नित्यं विद्यादानं च देहि मे ॥ २ ॥ अक्षसूत्राऽङ्कुशधरा पाशपुस्तकधारिणी । मुक्ताहारसमायुक्ता वाचि तिष्ठतु मे

सर० र० ॥८५१॥

सदा । कम्बुकण्ठी सुताम्रोष्ठी सर्वाऽऽभरणभूषिता । महासरस्वती देवी जिह्वाऽग्रे सन्निवेश्यताम् ॥ ४ ॥ या श्रद्धा धारणा मेधा वाग्देवी विधिवल्लभा । भक्तजिह्वाऽग्रसदना शमाऽऽदिगुणदायिनी ॥ ५ ॥ नमामि यामिनीनाथलेखाऽलङ्कृतकुन्तलाम् । भवानीं भवसन्तापनिर्वापणसुधानदीम् ॥ ६ ॥ यः कवित्वं निरातङ्कं भुक्तिमुक्तिं ( क्ती ) च वाञ्छति । सोऽभ्यर्च्यैनां दशश्लोक्या नित्यं ( भक्त्या ) स्तौति सरस्वतीम् ॥ ७ ॥ तस्यैवँ स्तुवतो नित्यँ समभ्यर्च्य सरस्वतीम् । भक्तिश्रद्धाऽभियुक्तस्य षाण्मासात्प्रत्ययो भवेत् ॥ ८ ॥ ततः प्रवर्तते वाणी स्वेच्छया ललिताऽक्षरा । गद्यपद्याऽऽत्मकैश्शब्दैरप्रमेयैर्विवक्षितैः ॥ ९ ॥ अश्रुतो बुध्यते ग्रन्थः प्रायस्सारस्वतः कविः । इत्येवं निश्चयं विप्रास्सा होवाच सरस्वती ॥ १० ॥ आत्मविद्या मया लब्धा

उ० ॥८५॥

ब्रह्मणैव सनातनी । ब्रह्म त्वं मे सदा नित्यँ सच्चिदानन्दरूपतः ॥ ११ ॥ प्रकृतित्वं नतस्सृष्टँ सत्त्वाऽऽदिगुणसाम्यतः । सत्यमाभाति चिच्छाया दर्पणे प्रतिबिम्बवत् ॥ १२ ॥ तेन चित्प्रतिबिम्बेन त्रिविधा भाति सा पुनः । प्रकृत्यवच्छिन्नतया पुरुषत्वं पुनश्च ते ॥ १३ ॥ शुद्धसत्त्वप्रधानायां मायायां बिम्बितो ह्यजः । सत्त्वप्रधाना प्रकृतिर्मायेति प्रतिपाद्यते ॥ १४ ॥ सा माया स्ववशोपाऽऽधिस्सर्वज्ञस्येश्वरस्य हि । वश्यमायत्वमेकत्वं सर्वज्ञत्वं च तस्य तु ॥ १५ ॥ सात्त्विकत्वात्समष्टित्वात्साक्षित्वा-ज्जगतामपि । जगत्कर्तुमकर्तुं वा चाऽन्यथा कर्तुमीशते ॥ १६ ॥ यस्स ईश्वर इत्युक्त-स्सर्वज्ञत्वाऽऽदिभिर्गुणैः । शक्तिद्वयँ हि मायाया विक्षेपाऽऽवृतिरूपकम् ॥ १७ ॥ विक्षे-पशक्तिर्लिङ्गाऽऽदिब्रह्माऽण्डाऽन्तं जगत्सृजेत् । अन्तर्दृग्दृश्ययोर्भेदं बहिश्च ब्रह्मसर्गयोः

सर० र०

॥८५२॥

॥ १८ ॥ आवृणोत्यपरा शक्तिस्सा सँसारस्य कारणम् । साऽक्षिणः पुरतो भातं लिङ्ग-देहेन संयुतम् ॥ १९ ॥ चितिच्छायासमावेशाज्जीवस्स्याद्व्यावहारिकः । अस्य जीव-त्वमारोपात्साऽक्षिण्यप्यवभासते ॥२०॥ आवृतौ तु विनष्टाया भेदे भातेऽप(प्र)याति तत् । तथा सर्गब्रह्मणोश्च भेदमावृत्य तिष्ठति ॥ २१ ॥ या शक्तिस्तद्वशाद्ब्रह्म विकृतत्वेन भासते । अत्राऽप्यावृतिनाशेन विभाति ब्रह्मसर्गयोः ॥२२॥ भेदस्तयोर्विकारस्स्यात्सर्गे न ब्रह्मणि क चित् । अस्ति भाति प्रियँ रूपं नाम चेत्यँशपञ्चकम् ॥ २३ ॥ आद्यत्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् । अपेक्ष्य नामरूपे द्वे सच्चिदानन्दतत्परः ॥ २४ ॥ समाधिँ सर्वदा कुर्याद्धृदये वाऽथ वा बहिः । सविकल्पो निर्विकल्पस्समाधिर्द्विविधो हृदि ॥ २५ ॥ दृश्यशब्दाऽनुभेदेन सविकल्पः पुनर्द्विधा । कामाऽऽद्याश्चित्तगा दृश्यास्तत्सा-

ऽक्षित्वेन चेतनम् ॥ २६ ॥ ध्यायेद्दृश्याऽनुविद्धोऽयं समाधिस्सविकल्पकः । असङ्ग-
सच्चिदानन्दस्स्वप्रभो द्वैतवर्जितः ॥ २७ ॥ अस्मीतिशब्दविद्धोऽयं समाधिस्सविकल्पकः
स्वाऽनुभूतिरसाऽऽवेशाद्दृश्यशब्दाऽऽद्यपेक्षितुः ॥ २८ ॥ निर्विकल्पस्समाधिस्स्यान्निवात-
स्थितदीपवत् । हृदीव बाह्यदेशेऽपि यस्मिन्कस्मिंश्च वस्तुनि ॥ २९ ॥ समाधिराद्य
( दृक् ) सन्मात्रान्नाम ( ना ) रूपपृथक्कृतिः । स्तब्धीभावो रसाऽऽस्वादात्तृ-
तीयः पूर्ववन्मतः ॥ ३० ॥ एतैस्समाधिभिष्षड्भिर्नयेत्कालं निरन्तरम् । देहाऽभिमाने
गलिते विज्ञाते परमाऽऽत्मनि । यत्रयत्र मनो याति तत्रतत्र पराऽमृतम् ॥ ३१ ॥
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसँशयाः । क्षीयन्ते चाऽस्य कर्माणि तस्मिन्दृष्टे परा-
ऽवरे ॥ ३२ ॥ मयि जीवत्वमीशत्वं कल्पितं वस्तुतो न हि । इति यस्तु विजानाति

बह्वृच

॥८५३॥

स मुक्तो नाऽत्र सँशयः ॥ ३३ ॥ इत्युपनिषत् ॥ ॐ वाङ्मे मनसीति शान्तिः ॥ हरिः ॐ तत्सत् ॥ इति सरस्वतीरहस्योपनिषत्समाप्ता ॥

अथ बह्वृचोपनिषत् ॥ ॐ बह्वृचाऽऽख्यब्रह्मविद्यामहाखण्डाऽर्थवैभवम् । अखण्डाऽऽनन्दसाम्राज्यं रामचद्रपदं भजे ॥१॥ ॐ वाङ्मे मनसीति शान्तिः ॥ हरिः ॐ देवी ह्येकाऽग्र आसीत् । सैव जगदण्डमसृजत् । कामकलेति विज्ञायते । शृङ्गारकलेति विज्ञायते । तस्या एव ब्रह्मा अजीजनत् । विष्णुरजीजनत् । रुद्रोऽजीजनत् । सर्वे मरुद्गणा अजीजनन् । गन्धर्वाऽप्सरसः किन्नरा वादित्रवादिनस्समन्तादजीजनन् । भोग्यमजीजनत् । सर्वमजीजनत् । सर्वं शाक्तमजीजनत् । अण्डजँ स्वेदजमुद्भिज्जं जरायुजं यत्किं चैतत्प्राऽणिस्थावरजङ्गमं मनुष्यमजीजनत् । सैषा परा शक्तिः ।

८०

॥८५३

सैषा शाम्भवी विद्या काऽऽदिविद्येति वा हाऽऽदिविद्येति वा साऽऽदिविद्येति वा रहस्यम् । ओमोँ वाचि प्रतिष्ठा सैव पुरत्रयं शरीरत्रयं व्याप्य बहिरन्तरव भासयन्ती देशकालवस्त्वन्तरसङ्गान्महात्रिपुरसुन्दरी वै प्रत्यक् चितिः । सैवाऽऽत्मा । ततोऽन्यदसत्यमनात्मा । अत एषा ब्रह्मसंवित्तिर्भावाऽभावकला (वि) निर्मुक्ता चिदा (द्वि) द्याऽद्वितीयब्रह्मसंवित्तिस्सच्चिदानन्दलहरी महात्रिपुरसुन्दरी बहिरन्त-राऽनुप्रविश्य स्वयमेकैव विभाति । यदस्ति सन्मात्रम् । यद्विभाति चिन्मात्रम् । यत्प्रिय-मानन्दं तदेतत्सर्वाऽऽकारा महात्रिपुरसुन्दरी । त्वं चाऽहं च सर्वं विश्वं सर्वदेवता । इत-रत्सर्वं महात्रिपुरसुन्दरी । सत्यमेकं ललिताऽऽख्यं वस्तु तदद्वितीयमखण्डाऽर्थं परं ब्रह्म । पञ्चरूपपरित्यागादस्वरूपप्रहाणतः । अधिष्ठानं परं तत्त्वमेकं सच्छिष्यते

महत् ॥ इति । प्रज्ञानं ब्रह्मेति वा अहं ब्रह्माऽस्मीति वा भाष्यते । तत्त्वमसीत्येव सम्भाष्यते । अयमात्मा ब्रह्मेति वा ब्रह्मैवाऽहमस्मीति वा योऽहमस्मीति वा सोहमस्मीति वा योऽसौ सोऽहमस्मीति वा या भाष्यते सैषा षोडशी श्रीविद्या पञ्चदशाऽक्षरी श्रीमहात्रिपुरसुन्दरी बालाऽम्बिकेति बक(ग)लेति वा मातङ्गीति स्वयंवरकल्याणीति भुवनेश्वरीति चामुण्डेति चण्डेति वाराहीति तिरस्करिणी राजमातङ्गीति वा शुकश्यामलेति वा लघुश्यामलेति वा अश्वारूढेति वा प्रत्यङ्गिरा धूमावती सावित्री सरस्वती ब्रह्माऽऽनन्दकलेति । ऋचो अक्षरे परमे व्योमन् । यस्मिन्देवा अधि विश्वे निषेदुः । यस्तन्न वेद किमृचा करिष्यति । य इत्तद्विदुस्त इमे समासते ॥ इत्युपनिषत् ॥ ॐ वाङ् मे मनसीति शान्तिः ॥ हरिः ॐ तत्सत् ॥ इति बह्वृचोपनिषत्समाप्ता ॥

अथ मुक्तिकोपनिषत् ॥ ओमीशाऽऽद्यष्टोत्तरशतवेदाऽन्तपटलाऽऽशयम् । मुक्तिकोपनिषद्वेद्यँ रामचन्द्रपदं भजे ॥ १ ॥ हरिः ॐ पूर्णमद शान्तिः ॥ ओमयोध्यानगरे रम्ये रत्नमण्डपमध्यमे । सीताभरतसौमित्रिशत्रुघ्नाऽऽद्यैस्समन्वितम् ॥ १ ॥ सनकाऽऽद्यैर्मुनिगणैर्वसिष्ठाऽऽद्यैश्शुकाऽऽदिभिः । अन्यैर्भागवतैश्चाऽपि स्तूयमानमहर्निशम् ॥ २ ॥ धीविक्रियासहस्राणाँ साऽक्षिणं निर्विकारिणम् । स्वरूपध्याननिरतँ समाधिविरमे हरिम् ॥ ३ ॥ भक्त्या शुश्रूषया रामँ स्तुवन्पप्रच्छ मारुतिः । राम त्वं परमाऽऽत्माऽसि सच्चिदानन्दविग्रहः ॥४॥ इदानीं त्वाँ रघुश्रेष्ठ प्रणमामि मुहुर्मुहुः । त(त्व)द्रूपं ज्ञातुमिच्छामि तत्त्वतो राम मुक्तये ॥ ५ ॥ अनायासेन येनाऽहं मुच्येयं भवबन्धनात् । कृपया वद मे राम येन मुक्तो भवाम्यहम् ॥ ६ ॥ साधु पृष्टं महाबाहो

वदामि शृणु तत्त्वतः । वेदाऽन्ते सुप्रतिष्ठोऽहं वेदाऽन्तँ समुपाऽऽश्रय ॥ ७ ॥ वेदा-ऽन्ताः के रघुश्रेष्ठ वर्त्तन्ते कुत्र ते वद । हनूमञ्छृणु वक्ष्यामि वेँदाऽन्तस्थितिमञ्जसा ॥ ८ ॥ निश्वासभूता मे विष्णोर्वेदा जातास्सुविस्तराः । तिलेषु तैलवद्वेदे वेदाऽन्त-स्सुप्रतिष्ठितः ॥ ९ ॥ राम वेदाः कतिविधास्तेषाँ शाखाश्च राघव । तासूपनिषदः कास्स्युः कृपया वद तत्त्वतः ॥ १० ॥ श्रीराम उवाच । ऋग्वेदाऽऽदिविभागेन वेदा-श्चत्वार ईरिताः । तेषां शाखा ह्यनेकास्स्युस्तासूपनिषदस्तथा ॥ ११ ॥ ऋग्वेदस्य तु शाखास्स्युरेकविंशँतिसङ्ख्यकाः । नवाऽधिकशतं शाखा यजुषो मारुताऽऽत्मज ॥ १२ ॥ सहस्रसङ्ख्यया जाताश्शाखास्साम्नः परन्तप । अथर्वणस्य शाखास्स्युः पञ्चा-शद्भेदतो हरे ॥ १३ ॥ एकैकस्यास्तु शाखाया एकैकोपनिषन्मता । तासामेकामृचं येन

पठ्यते भक्तितो मयि ॥ १४ ॥ स मत्सायुज्यपदवीं प्राऽऽप्नोति मुनिदुर्लभाम् । राम के चिन्मुनिश्रेष्ठा मुक्तिरेकेति चक्षिरे॥ १५ ॥ के चित्त्वन्नामभजनात्काश्यां तारोपदेशतः । अन्ये तु साङ्ख्ययोगेन भक्तियोगेन चाऽपरे ॥ १६ ॥ अन्ये वेदाऽन्तवाक्याऽर्थविचारात्परमर्षयः । सालोक्याऽऽदिविभागेन चतुर्द्धा मुक्तिरीरिता ॥ १७ ॥ सहोवाच श्रीरामः । कैवल्यमुक्तिरेकैव पारमाऽऽर्थिकरूपिणी । दुराचाररतो वाऽपि मन्नामभजनात्कपे ॥ १८ ॥ सालोक्यमुक्तिमाप्नोति न तु लोकाऽन्तराऽऽदिकम् । काश्यां तु ब्रह्मनालेऽस्मिन्मृतो मत्तारमाप्नुयात् ॥ १९ ॥ पुनरावृत्तिरहितां मुक्तिं प्राऽऽप्नोति मानवः । यत्र कुत्राऽपि वा काश्यां मरणे स महेश्वरः ॥ २० ॥ जन्तोर्दक्षिणकर्णे तु मत्तारँ समुपाऽऽदिशेत् । निर्धूताऽशेषपापौघो मत्सारूप्यं

भजत्ययम् ॥ २१ ॥ सैव सालोक्यसारूप्यमुक्तिरित्यभिधीयते । सदाचाररतो भूत्वा द्विजो नित्यमनन्यधीः ॥ २२ ॥ मयि सर्वाऽऽत्मकेभावो मत्सामीप्यं भजत्ययम् । सैव सालोक्यसारूप्यसामीप्या मुक्तिरिष्यते ॥ २३ ॥ गुरूपदिष्टमार्गेण ध्यायन्मद्गुण-मव्ययम् । मत्सायुज्यं द्विजंस्सम्यग्भजेद्भ्रमरकीटवत् ॥ २४ ॥ सैव सायुज्यमुक्तिस्स्या-द्ब्रह्माऽऽनन्दकरी शिवा । चतुर्विधा तु या मुक्तिर्मदुपाऽऽसनया भवेत् ॥ २५ ॥ इयं कैवल्यमुक्तिस्तु केनोपाऽयेन सिध्यति । माण्डूक्यमेकमेवाऽलं मुमुक्षूणा विमुक्तये ॥ २६ ॥ तथाऽप्यसिद्धं चेज्ज्ञानं दशोपनिषदं पठ । ज्ञानं लब्ध्वाऽचिरादेव मामकं धाम यास्यसि ॥ २७ ॥ तथाऽपि दृढता नो चेद्विज्ञानस्याऽञ्जनासुत । द्वात्रिंशाँऽऽख्यो-पनिषदं समभ्यस्य निवर्त्तय ॥ २८ ॥ विदेहमुक्ताविच्छा चेदष्टोत्तरशतं पठ । तासां

क्रमँ सशान्तिं च शृणु वक्ष्यामि तत्त्वतः ॥ २९ ॥ ईशकेनकठप्रश्नमुण्डमाण्डूक्यतित्ति-रिः । ऐतरेयञ्च छान्दोग्यं बृहदारण्यकं तथा ॥ ३० ॥ ब्रह्मकैवल्यजाबालश्वेताऽश्वो हँस आरुणिः । गर्भो नाराऽयणो हँसो बिन्दुर्नादशिरश्शिखा ॥ ३१ ॥ मैत्रायणी कौषि-तकी बृहज्जाबालतापनी । कालाऽग्निरुद्रमैत्रेयी सुबालक्षुरिमन्त्रिका ॥ ३२ ॥ सर्वे सारं निरालम्बँ रहस्यं वज्रसूचिकम् । तेजोनादध्यानविद्यायोगतत्त्वाऽऽत्मबोधकम् ॥३३॥ परिव्राट् त्रिशिखी सीता चूडा निर्वाणमण्डलम् । दक्षिणा शरभँ स्कन्दं महानारा-ऽयणाऽऽह्वयम् ॥ ३४ ॥ रहस्यँ रामतपनं वासुदेवञ्च मुद्गलम् । शाण्डिल्यं पैङ्गलं भिक्षु-महच्छारीरकँ शिखा ॥ ३५ ॥ तुरीयाऽतीतसन्न्यासपरिव्राजाऽक्षमालिका । अव्यक्तै-काऽक्षरं पूर्णा सूर्याऽक्ष्यध्यात्मकुण्डिका ॥ ३६ ॥ सावित्र्यात्मा पाशुपतं परम्ब्रह्माऽव-

धूतकम् । त्रिपुरातपनं देवी त्रिपुरा कठभावना । हृदयं कुण्डली भस्म रुद्राऽक्षगण-
दर्शनम् ॥ ३७ ॥ तारसारमहावाक्यपञ्चब्रह्माऽग्निहोत्रकम् । गोपालतपनं कृष्णं याज्ञ-
वल्क्यं वराहकम् ॥ ३८ ॥ शाट्यायनी हयग्रीवं दत्ताऽऽत्रेयं च गारुडम् । कलि-
जाबालिसौभाग्यरहस्यऋचमुक्तिका ॥ ३९ ॥ एवमष्टोत्तरशतं भावनात्रयनाशनम् ।
ज्ञानवैराग्यदं पुँसां वासनात्रयनाशनम् ॥ ४० ॥ पूर्वोत्तरेषु विहिततत्तच्छान्तिपुर-
स्सरम् । वेदविद्याव्रतस्नातदेशिकस्य मुखात्स्वयम् ॥ ४१ ॥ गृहीत्वाऽष्टोत्तरशतं ये
पठन्ति द्विजोत्तमाः । प्राऽऽरब्धक्षयपर्यन्तं जीवन्मुक्ता भवन्ति ते ॥ ४२ ॥ ततः
कालवशादेव प्राऽऽरब्धे तु क्षयं गते । वैदेहीं मामकीं मुक्तिं यान्ति नाऽस्त्यत्र सँशयः
॥ ४३ ॥ सर्वोपनिषदां मध्ये सारमष्टोत्तरं शतम् । सकृच्छ्रवणमात्रेण सर्वाऽघौघनि-

कृन्तनम् ॥ ४४ ॥ मयोपदिष्टँ शिष्याय तुभ्यं पवननन्दन । इदँ शास्त्रं मयाऽऽदिष्टं गुह्यमष्टोत्तरँ शतम् ॥ ४५ ॥ ज्ञानतोऽज्ञानतो वाऽपि पठतां बन्धमोचकम् । राज्यं देयं धनं देयं याचतः कामपूरणम् ॥ ४६ ॥ इदमष्टोत्तरशतं न देयं यस्य कस्यचित् । नाऽऽस्तिकाय कृतघ्नाय दुराचाररताय वै ॥ ४७ ॥ मद्भक्तिविमुखायाऽपि शा(सच्छा)स्त्रगर्तेषु मुह्यते । गुरुभक्तिविहीनाय दातव्यं न कदा च न ॥ ४८ ॥ सेवापराय शिष्याय हितपुत्राय मारुते । मद्भक्ताय सुशीलाय कुलीनाय सुमेधसे ॥ ४९ ॥ सम्यक् परीक्ष्य दातव्यमेवमष्टोत्तरँ शतम् । यः पठेच्छृणुयाद्वाऽपि स मामेति न सँशयः । तदेतदृचाऽभ्युक्तम् । विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि। असूयकायाऽजनृवे शठाय मा मा ब्रूयाद्वीर्यवती तथा स्याम् ॥ यमेवैष विद्याश्रुतमप्रमत्तं

मेधाविनं ब्रह्मचर्योपपन्नम् । अस्मा इमामुपसन्नाय सम्यक् परीक्ष्य दद्याद्वैष्णवीमात्म-निष्ठाम् ॥ १ ॥ इति ॥ अथ हैनँ श्रीरामचन्द्रं मारुतिः पप्रच्छ ऋग्वेदाऽऽदिविभागेन पृथक् शान्तिमनुब्रूहीति । सहोवाच श्रीरामः । ऐतरेयकौषीतकीनादबिन्द्वात्मप्रबोध-निर्वाणमुद्गलाऽक्षमालिकात्रिपुरासौभाग्यबह्वृचानामृग्वेदगतानां दशसङ्ख्याकानामुप-निषदां वाङ् मे मनसीति शान्तिः ॥ १ ॥ ईशावास्यबृहदारण्यजावालहँसपरमहँससु-बालमन्त्रिकानिरालम्बात्रिशिखीब्राह्मणमण्डलब्राह्मणाऽद्वयतारकपैङ्गलभिक्षुतुरीयाऽतीता-ऽध्यात्मतारसारयाज्ञवल्क्यशाट्यायनीमुक्तिकानाँ शुक्लयजुर्वेदगतानामेकोनविंशँतिसङ्-ख्याकानामुपनिषदां पूर्णमद इति शान्तिः ॥ २ ॥ कठवल्लीतैत्तिरीयकब्रह्मकैवल्य-श्वेताऽश्वतरगर्भनाराऽयणाऽमृतबिन्द्वमृतनादकालाऽग्निरुद्रक्षुरिकासर्वसारशुकरहस्यते-

जोबिन्दुध्यानबिन्दुब्रह्मविद्यायोगतत्त्वदक्षिणामूर्त्तिस्कन्दशारीरकयोगशिखैकाऽक्षराऽक्ष्य-
वधूतकठरुद्रहृदययोगकुण्डलिनीपञ्चब्रह्मप्राऽणाऽग्निहोत्रवराहकलिसन्त (न्ता) रणसरस्व-
तीरहस्यानां कृष्णयजुर्वेदगतानां द्वात्रिँशत्सङ्ख्याकानामुपनिषदां सह नाववत्विति
शान्तिः ॥ ३ ॥ केनच्छान्दोग्याऽऽरुणिमैत्राऽयणिमैत्रेयीवज्रसूचिकायोगचूडामणिवासु-
देवमहत्सन्न्यासाऽव्यक्तकुण्डिकासावित्रीरुद्राऽक्षजाबालदर्शनजाबालीनाँ सामवेदगतानाँ
षोडशसङ्ख्याकानामुपनिषदामाप्यायन्त्विवति शान्तिः ॥ ४ ॥ प्रश्नमुण्डकमाण्डूक्या-
ऽथर्वशिरोऽथर्वशिखाबृहज्जाबालनृसिँहतापनीनारदपरिव्राजकसीताशरभमहानाराऽयण--
रामरहस्यरामतापनीशाण्डिल्यपरमहँसपरिव्राजकाऽन्नपूर्णासूर्याऽऽत्मपाशुपतपरब्रह्मत्रिपुरा-
तपनदेवीभावनाब्रह्मजाबालगणपतिमहावाक्यगोपालतपनकृष्णहयग्रीवदत्ताऽऽत्रेयगारु--

डानामथर्ववेदगतानामेकत्रिंशत्सङ्ख्याकानामुपनिषदां भद्रं कर्णेभिरिति शान्तिः ॥ ५ ॥ मुमुक्षवः पुरुषास्साधनचतुष्टयसम्पन्नाश्श्रद्धावन्तस्सुकुलभवं श्रोत्रियं शास्त्रवात्सल्यगुणवन्तमकुटिलं सर्वभूतहिते रतं दयासमुद्रं सद्गुरुं विधिवदुपसङ्गम्योपहारपाणयोऽष्टोत्तरशतोपनिषदं विधिवदधीत्य श्रवणमनननिदिध्यासनानि नैरन्तर्येण कृत्वा प्रारब्धक्षयाद्देहत्रयभङ्गं प्राप्योपाधिविनिर्मुक्तघटाकाशवत्परिपूर्णता विदेहमुक्तिः । सैव कैवल्यमुक्तिरिति । अत एव ब्रह्मलोकस्था अपि ब्रह्ममुखाद्वेदान्तश्रवणादि कृत्वा तेन सह कैवल्यं लभन्ते । अतस्सर्वेषां कैवल्यमुक्तिर्ज्ञानमात्रे ( र्गे ) णोक्ता । न कर्मसाङ्ख्ययोगोपासनादिभिरित्युपनिषत् ॥ इति प्रथमोऽध्यायः॥ ॥तथा हैनं श्रीरामचन्द्रं मारुतिः पप्रच्छ । केयं वा तत्सिद्धिस्सिद्धा

वा किं प्रयोजनमिति । सहोवाच श्रीरामः । पुरुषस्य कर्त्तृत्वभोक्तृत्वसुखदुःखा-ऽऽदिलक्षणश्चित्तधर्मः क्लेशरूपत्वाद्बन्धो भवति । तन्निरोधनं जीवन्मुक्तिः । उपा-ऽऽधिविनिर्मुक्तघटाऽऽकाशवत्प्राऽऽरब्धक्षयाद्विदेहमुक्तिः । जीवन्मुक्तिविदेहमुक्त्योरष्टो-त्तरशतोपनिषदः प्रमाणम् । कर्त्तृत्वाऽऽदिदुःखनिवृत्तिद्वारा नित्याऽऽनन्दाऽवाऽऽप्तिः प्रयोजनं भवति । तत्पुरुषप्रयत्नसाध्यं भवति । यथा पुत्रकामेष्टिना पुत्रं वाणिज्या-ऽऽदिना वित्तं ज्योतिष्टोमेन स्वर्गं तथा पुरुषप्रयत्नसाध्यवेदाऽन्तश्रवणाऽऽदिजनितसमा-धिना जीवन्मुक्त्यादिलाभो भवति । सर्ववासनाक्षयात्तल्लाभः । अत्र श्लोका भवन्ति ॥ उच्छास्त्रं शास्त्रितं चेति पौरुषं द्विविधं मतम् । तत्रोच्छास्त्रमनर्थाय परमाऽर्थाय शास्त्रि-तम् ॥ १ ॥ लोकवासनया जन्तोश्शास्त्रवासनयाऽपि च । देहवासनया ज्ञानं यथा-

वश्नैव जायते ॥ २ ॥ द्विविधो वासनाव्यूहश्शुभश्चैवाऽशुभश्च तौ । वासनौघेन शुद्धेन तत्र चेदनुनीयसे ॥ ३ ॥ तत्क्रमेणाऽऽशु तेनैव मामकं पदमाप्नुहि । अथ चेदशुभो भावस्त्वां योजयति सङ्कटे ॥ ४ ॥ प्राऽक्तनस्तदसौ यत्नाज्जेतव्यो भवता कपे । शुभाऽशुभाभ्यां मार्गाभ्यां वहन्ती वासना सरित् ॥ ५ ॥ पौरुषेण प्रयत्नेन योजनीया शुभे पथि । अशुभेषु समाविष्टं शुभेष्वेवाऽवतारयेत् ॥ ६ ॥ अशुभाच्चालितं याति शुभं तस्मादपीतरत् । पौरुषेण प्रयत्नेन लालयेच्चित्तबालकम् ॥७॥ द्रा(दृ) गभ्यासवशाद्याति यदा ते वासनोदयम् । तदाऽभ्यासस्य साफल्यं विद्धि त्वमरिमर्दनम् ॥ ८ ॥ सन्दिग्धायामपि भृशँ शुभामेव समाचर । शुभायां वासनावृद्धौ न दोषाय मरुत्सुत ॥ ९ ॥ वासनाक्षयविज्ञानमनोनाशा महामते । समकालं चिराऽभ्यस्ता भवन्ति

फलदा मताः ॥ १० ॥ त्रय एवं समं यावन्नाऽभ्यस्ताश्च पुनः पुनः । तावन्न पदस-म्प्राऽऽप्तिर्भवत्यपि समाशतैः ॥ ११ ॥ एकैकशो निषेव्यन्ते यद्येते चिरमप्यलम् । तन्न सिद्धिं प्रयच्छन्ति मन्त्रास्सङ्कीर्तिता इव ॥ १२ ॥ त्रिभिरेतैश्चिराऽभ्यस्तैर्हृदयग्रन्थयो दृढाः । निश्शङ्कमेव त्रुटयन्ति बिसच्छेदाद्गुणा इव ॥ १३ ॥ जन्माऽन्तरशता-ऽभ्यस्ता मिथ्या सँसारवासना । सा चिराऽभ्यासयोगेन विना न क्षीयते क्वचित् ॥ १४ ॥ तस्मात्सौम्य प्रयत्नेन पौरुषेण विवेकिना । भोगेच्छा दूरतस्त-क्त्वा त्रयमेव समाश्रय ॥ १५ ॥ तस्माद्वासनया युक्तं मनो बद्धं विदुर्बु-धाः । सम्यग्वासनया त्यक्तं मुक्तमित्याभिधीयते ॥ १६ ॥ मनोनिर्वासनी-भावमाचराऽऽशु महाकपे । सम्यगालोचनात्सत्याद्वासना प्रविलीयते ॥ १७ ॥

वासनाविलये चेतश्शममायाति दीपवत् । वासनाँ सम्परित्यज्य मयि चिन्मात्रविग्रहे ॥ १८ ॥ यस्तिष्ठति गतव्यग्रस्सोऽहं सच्चित्सुखाऽऽत्मकः । समाधिमथ कार्याणि मा करोतु करोतु वा ॥ १९ ॥ हृदयेनाऽऽत्तसर्वेहो मुक्त एवोत्तमाऽऽशयः । नैष्कर्म्येण न तस्याऽर्थस्तस्याऽर्थोऽस्ति न कर्मभिः ॥ २० ॥ न समाधानजाप्याभ्या यस्य निर्वासनं मनः । सन्त्यक्तवासनान्मौनादृते नाऽस्त्युत्तमं पदम् ॥ २१ ॥ वासनाहीनमप्येतच्चक्षुरादीन्द्रियँ स्वतः । प्रवर्त्तते बहिस्स्वाऽर्थे वासनामात्रकारणम् ॥ २२ ॥ अयत्नोपनतेष्वक्षि दृग्द्रव्येषु यथा पुनः । नीरागमेव पतति तद्वत्कार्येषु धीरधीः ॥ २३ ॥ भावसंवित्प्रकटितामनुरूपा च मारुते । चित्तस्योत्पत्त्युपरमा वासनां ( मं हँसं वा ) मुनयो विदुः ॥ २४ ॥ दृढाऽभ्यस्तपदाऽर्थैकभावनाद ( र ) तिचञ्चलम् । चित्तँ सञ्जायते

जन्मजरामरणकारणम् ॥ २५ ॥ वासनावशतः प्राऽणस्पन्दस्तेन च वासना । क्रियते चित्तबीजस्य तेन बीजाऽङ्कुरक्रमः ॥ २६ ॥ द्वे बीजे चित्तवृक्षस्य प्राऽणस्पन्दनवासने । एकस्मिंश्च तयोः क्षीणे क्षिप्रं द्वे अपि नश्यतः ॥२७॥ असङ्गव्यवहारत्वाद्भवभावनवर्जनात् । शरीरनाशदर्शित्वाद्वासना न प्रवर्त्तते ॥ २८॥ वासनासम्परित्यागाच्चित्तं गच्छत्यचित्त-ताम् । अवासनत्वात्सततं यदा न मनुते मनः ॥ २९ ॥ अमनस्ता तदोदेति परमो-पशमप्रदा । अव्युत्पन्नमना यावद्भवानज्ञाततत्पदः ॥ ३० ॥ गुरुशास्त्रप्रमाणैस्तु निर्णीतं तावदाचर । ततः पक्वकषायेण नूनं विज्ञातवस्तुना ॥ ३१ ॥ शुभोऽप्यसौ त्वया त्याज्यो वासनौघो निराधिना । द्विविधश्चित्तनाशोऽस्ति सरूपोऽरूप एव च ॥ ३२ ॥ जीवन्मुक्तस्स ( क्तौ स ) रूपस्स्यादरूपो देहमुक्तिगः । अस्य नाशमि-

दानीं त्वं पावने शृणु साऽऽदरम् ॥ ३३ ॥ चित्तनाशाऽभिधानँ हि यदा ते विद्यते पुनः । मैत्र्याऽऽदिभिर्गुणैर्युक्तं शा (क्तश्शा) न्तिमेति न सँशयः ॥ ३४ ॥ भूयोजन्मविनिर्मुक्तं जीवन्मुक्तस्य तन्मनः । सरूपोऽसौ मनोनाशो जीवन्मुक्तस्य विद्यते ॥ ३५ ॥ अरूपस्तु मनोनाशो वैदेहीमुक्तिगो भवेत् । सहस्राऽङ्कुरशाखाऽऽत्मफलपल्लवशालिनः ॥ ३६ ॥ अस्य सँसारवृक्षस्य मनोमूलमिदँ स्थितम् । सङ्कल्प एव तन्मन्ये सङ्कल्पोपशमेन तत् ॥ ३७ ॥ शोषयाऽऽशु यथा शोषमेति सँसारपादपः । उपाय एक एवाऽस्ति मनसस्स्वस्य निग्रहे ॥ ३८ ॥ मनसोऽभ्युदयो नाशो मनोनाशो महोदयः । ज्ञमनो नाशमभ्येति मनो ज्ञस्य हि शृङ्खला ॥ ३९ ॥ तावन्निशीव वेताला वल्गन्ति हृदि वासनाः । एकतत्त्वदृढाऽभ्यासाद्यावन्न विजितं मनः ॥ ४० ॥ प्रक्षीण-

चित्तदर्पस्य निगृहीतेन्द्रियद्विषः । पद्मिन्य इव हेमन्ते क्षीयन्ते भोगवासनाः ॥ ४१ ॥
हस्तँ हस्तेन सम्पीड्य दन्तैर्दन्तान्विचूर्ण्य च । अङ्गान्यङ्गैस्समाक्रम्य जयेदादौ स्वकं मनः ॥ ४२ ॥ उपविश्योपविश्यैकां ( कं ) चिन्तकेन मुहुर्मुहुः । न शक्यते मनो जेतुं विना युक्तिमनिन्दिताम् ॥ ४३ ॥ अङ्कुशेन विना मत्तो यथा दुष्टमतङ्गजः । अध्यात्मविद्याऽधिगमस्साधुसङ्गतिरेव च ॥ ४४ ॥ वासनासम्परित्यागः प्राऽणस्पन्दानिरोधनम् । एतास्ता युक्तयः पुष्टास्सन्ति चित्तजये किल ॥ ४५ ॥ सतीषु युक्तिष्वेतासु हठान्नियमयन्ति ये । चेतसो दीपमुत्सृज्य विचिन्वन्ति तमो ज ( ऽज्ञ ) नैः ॥ ४६ ॥ विमूढाः कर्त्तुमुद्युक्ता ये हठाच्चेतसो जयम् । ते निबध्नन्ति नागेद्रमुन्मत्तं बिसतन्तुभिः ॥ ४७ ॥ द्वे बीजे चित्तवृक्षस्य वृत्तिव्रततिधारिणः । एकं प्राऽणपरि-

स्पन्दो द्वितीयं दृढभावना ॥ ४८ ॥ सा हि सर्वगता सँवित्प्राऽणस्पन्देन चाल्यते । चित्तैकाऽग्र्याद्यतो ज्ञानमुक्तँ समुपजायते ॥ ४९ ॥ तत्साधनमथो ध्यानं यथावदुपदिश्यते । विनाऽप्यविकृतिं कृत्स्नाँ सम्भवव्यत्ययक्रमात् ॥ ५० ॥ यशोऽरिष्टं ( परिशिष्टं ) च चिन्मात्रं चिदानन्दं विचिन्तय । अपाऽनेऽस्तङ्गते प्राऽणो यावन्नाऽभ्युदितो हृदि ॥ ५१ ॥ तावत्सा कुम्भकाऽवस्था योगिभिर्याऽनुभूयते । बहिरस्तङ्गते प्राऽणे यावन्नाऽपाऽन उद्गतः ॥ ५२ ॥ तावत्पूर्णां समाऽवस्थां बहिष्ठं कुम्भकं विदुः । ब्रह्माऽऽकारमनोवृत्तिप्रवाहोऽहङ्कृतिं विना ॥ ५३ ॥ सम्प्रज्ञातसमाधिस्स्याद्ध्यानाऽभ्यासप्रकर्षतः । प्रशान्तवृत्तिकं चित्तं परमाऽऽनन्ददाय ( दीप ) कम् ॥ ५४ ॥ असम्प्रज्ञातनामाऽयं समाधिर्योगिना प्रियः । प्रभाशून्यं मनश्शून्यं बुद्धिशून्यं चिदात्म-

कम् ॥ ५५ ॥ अतद्व्यावृत्तिरूपोऽसौ समाधिर्मुनिभावितः । उर्ध्वपूर्णमधःपूर्णं मध्य-
पूर्णं शिवाऽऽत्मकम् । साऽक्षाद्विधिमुखो ह्येष समाधिः पारमाऽर्थिकः ॥ ५६ ॥ दृढभा-
वनया त्यक्तपूर्वाऽपरविचारणम् । यदादानं पदाऽर्थस्य वासना सा प्रकीर्त्तिता ॥५७॥
भावितं तीव्रसंवेगादात्मना यत्तदेव सः । भवत्याशु कपिश्रेष्ठ विगतेतरवासनः ॥ ५८ ॥
तादृग्रूपो हि पुरुषो वासनाविवशीकृतः । सम्पश्यति यदैवैतत्सद्वस्त्विति विमुह्यति
॥ ५९ ॥ वासनावेगवैचित्र्यात्स्वरूपं न जहाति तत् । भ्रान्तं पश्यति दुर्दृष्टिस्सर्वं
मदवशादिव ॥ ६० ॥ वासना द्विविधा प्रोक्ता शुद्धा च मलिना तथा । मलिना जन्म-
हेतुस्स्याच्छुद्धा जन्मविनाशिनी ॥ ६१ ॥ अज्ञानसुघनाऽऽकारा घनाऽहङ्कारशालिनी ।
पुनर्जन्मकरी प्रोक्ता मलिना वासना बुधैः ॥ ६२ ॥ पुनर्जन्माऽङ्कुरं त्यक्त्वा स्थिति-

स्संभृष्टबीजवत् । बहुशास्त्रकथाकन्थारोमन्थेन वृथैव किम् ॥ ६३ ॥ अन्वेष्टव्यं प्रयत्नेन मारुते ज्योतिरान्तरम् । दर्शनाऽदर्शने हित्वा स्वयं केवलरूपतः ॥ ६४ ॥ य आस्ते कपिशार्दूल ब्रह्म स ब्रह्मवित्स्वयम् । अधीत्य चतुरो वेदान्सर्वशास्त्राण्यनेकशः ॥ ६५ ॥ ब्रह्मतत्त्वं न जानाति दर्वी पाकरसं यथा ( दर्पाऽपहतचेतनः ) । स्वदे-( तन्मो ) हाऽशुचिगन्धेन न विरज्येत यः पुमान् ॥ ६६ ॥ विरागकारणं तस्य किमन्यदुपदिश्यते । अत्यन्तमलिनो देहो देही चाऽत्यन्तनिर्मलः ॥ ६७ ॥ उभयोरन्तरं ज्ञात्वा कस्य शौचं विधीयते । बद्धो ( न्धो ) हि वासनाबद्धो ( न्धो ) मोक्षस्स्याद्वासनाक्षयः ॥ ६८ ॥ वासनाँ सम्परित्यज्य मोक्षाऽर्थित्वमपि त्यज । मानसीर्वासनाः पूर्वं त्यक्त्वा विषयवासनाः ॥ ६९ ॥ मैत्र्याऽऽदिवासनानाम्नीर्गृहाणाऽमलवासनाः ।

ता अप्यतः परित्यज्य ताभिर्व्यवहरन्नपि ॥ ७० ॥ अन्तश्शान्तस्स(स)म( स्ते ) स्नेहो भव चिन्मात्रवासनः । तामप्यथ परित्यज्य मनोबुद्धिसमन्विताम् ॥ ७१ ॥ शेषस्थिर-समाधानो मयि त्वं भव मारुते । अशब्दमस्पर्शमरूपमव्ययं तथा रसं नित्यमगन्ध-वच्च यत् । अनामगोत्रं मम रूपमीदृशं भजस्व नित्यं पवनाऽऽत्मजाऽऽर्तिहम् ॥७२ ॥ दृशिस्वरूपं गगनोपमं परँ सकृद्विभातं त्वजमेकमक्षरम् । अलेपकं सर्वगतं यदद्वयं तदेव चाऽहं सकलं विमुक्त ॐ ॥ ७३ ॥ दृशिस्तु शुद्धोऽहमविक्रियाऽऽत्मको न मेऽस्ति कश्चिद्विषयस्स्वभावतः । पुरस्तिरश्चोर्ध्वमधश्च सर्वतस्सुपूर्णभूमाऽहमितीह भावय ॥ ७४ ॥ अजोऽमरश्चैव तथाऽजरोऽमृतस्स्वयम्प्रभस्सर्वगतोऽहमव्ययः । न कारणं कार्यमतीत्य निर्मलस्सदैव तृप्तोऽहमितीह भावय ॥ ७५ ॥ जीवन्मुक्तपदं त्यक्त्वा

स्वदेहे कालसात्कृते । विशत्यदेहमुक्तत्वं पवनोऽस्पन्दतामिव ॥ ७६ ॥ तदेतदृचाऽभ्युक्तम् । तद्विष्णोः परमं पदँ सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् । तद्विप्रासो विपन्यवो जागृवाँसस्समिन्धते । विष्णोर्यत्परमं पदम् ॥ ॐ सत्यमित्युपनिषत् । ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवाऽवशिष्यते ॥ ॐ शान्तिश्शान्तिश्शान्तिः ॥ हरिः ॐ तत्सत् ॥ इति शुक्लयजुर्वेदगता मुक्तिकोपनिषत्समाप्ता ॥ ॥ ॥ इत्यष्टोत्तरशतोपनिषदस्समाप्ताः ॥ श्रीमच्छङ्करभगवत्पादाऽऽचार्यचरणाऽरविन्दाभ्यां नमः ॥ श्रीसच्चिदानन्दाऽद्वैतगुरुपरब्रह्माऽर्पणमस्तु ॥ हरिः ॐ तत्सत् ॥ ॥ ॥ ॥ ॥

॥ समाप्ताः ॥

॥ श्रीगणेशायनमः ॥ ॥ (मुक्तिकोपनिषत्स्थदशोपनिषत्क्रमः) ॥ ॥ ओमीशकेनकठ-प्रश्नमुण्डमाण्डूक्यतित्तिरिः। ऐतरेयं च छान्दोग्यं बृहदारण्यकं दश ॥ १ ॥ (महावाक्य-रत्नाऽऽवल्यामुपनिषच्छान्तिपाठक्रमः) वाक्पूर्णसहनाऽऽप्यायन्भद्रंकर्णेभिरेव च। पञ्च शान्तीः पठित्वाऽऽदौ पठेद्वाक्यान्यनन्तरम् ॥२॥ (अस्य द्वितीयश्लोकस्य मुक्तिकोपनिषद-नुसारतस्स्पष्टीकरणम्) ऋग्यजुस्सामाऽथर्वाऽऽख्यवेदेषु द्विविधो मतः। यजुर्वेदश्शुक्लकृष्णविभेदेनाऽत एव च ॥ ३ ॥ शान्तयः पञ्चधा प्रोक्ता वेदाऽनुक्रमणेन वै। वाङ्मे मनसि शान्त्यैव ऐतरेयं प्रपठ्यते ॥४॥ ईशं पूर्णमदेनैव बृहदारण्यकं तथा। सह नाविति शान्त्या च तैत्तिरीयं कठं च वै ॥५॥ आप्यायन्त्विति शान्त्यैव केनच्छान्दोग्यसंज्ञके। भद्रंकर्णेति मन्त्रेण प्रश्नमाण्डूक्यमुण्डकम् ॥६॥ (इति क्रमेण प्रत्येकमुपनिषद आदावन्ते च शान्तिं पठेत्)

॥(अथ शाङ्करमठसम्प्रदायाऽनुसारतश्शान्तयः)॥ ॥श्रीगणेशायनमः॥ ॥ॐ शन्नो मित्रश्शं वरुणः ॥ शन्नो भवत्वर्यमा ॥ शन्न इन्द्रो बृहस्पतिः ॥ शन्नो विष्णुरुरुक्रमः ॥ नमो ब्रह्मणे ॥ नमस्ते वायो ॥ त्वमेव प्रत्यक्षं ब्रह्माऽसि ॥ त्वमेव प्रत्यक्षं ब्रह्म वदिष्यामि ॥ ऋतं वदिष्यामि ॥ सत्यं वदिष्यामि ॥ तन्मामवतु ॥ तद्वक्तारमवतु ॥ अवतु माम् ॥ अवतु वक्तारम् ॥ ॐ शान्तिश्शान्तिश्शान्तिः ॥ १ ॥

ॐ सह नाववतु ॥ सह नौ भुनक्तु ॥ सह वीर्यं करवावहै ॥ तेजस्विनावधीतमस्तु मा विद्विषावहै ॥ ॐ शान्तिश्शान्तिश्शान्तिः ॥ २ ॥

ॐ यश्छन्दसामृषभो विश्वरूपः ॥ छन्दोभ्योऽध्यमृतात्सम्बभूव ॥ स मेन्द्रो मेधया स्पृणोतु ॥ अमृतस्य देवधारणो भूयासम् ॥ शरीरं मे विचर्षणम् ॥ जिह्वा मे

मधुमत्तमा ॥ कर्णाभ्यां भूरि विश्रुवम् ॥ ब्रह्मणः कोशोऽसि मेधया पिहितः ॥ श्रुतं मे गोपाय ॥ ॐ शान्तिश्शान्तिश्शान्तिः ॥ ३ ॥

ॐ अहं वृक्षस्य रेरिव ॥ कीर्तिः पृष्ठं गिरेरिव ॥ ऊर्ध्वपवित्रो वाजिनीव स्वमृतमस्मि ॥ द्रविणँ सवर्चसम् ॥ सुमेधा अमृतोक्षितः ॥ इति त्रिशङ्कोर्वेदाऽनुवचनम् ॥ ॥ ॐ शान्तिश्शान्तिश्शान्तिः ॥ ४ ॥

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ॥ पूर्णस्य पूर्णमादाय पूर्णमेवाऽवशिष्यते ॥ ॐ शान्तिश्शान्तिश्शान्तिः ॥ ५ ॥

ओमाप्यायन्तु ममाऽङ्गानि वाक् प्राऽणश्चक्षुश्श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि सर्वं ब्रह्मोपनिषदं माऽहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराक-

रणं मे अस्तु । तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ॥
ॐ शान्तिश्शान्तिश्शान्तिः ॥ ६ ॥

ॐ वाङ् मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरावीर्म एधि वेदस्य म आणीस्थश्श्रुतं मे प्रहासीरनेनाऽधीतेनाऽहोरात्रात्सन्दधाम्यृतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु । तद्वक्तारमवतु ॥ अवतु माम् ॥ अवतु वक्तारमवतु वक्तारम् ॥ ॐ शान्तिश्शान्तिश्शान्तिः ॥ ७ ॥

ॐ भद्रं नो अपिवातय मनः ॥ ॐ शान्तिश्शान्तिश्शान्तिः॥ ८ ॥

ॐ भद्रं कर्णेभिश्शृणुयाम देवा भद्रं पश्येमाऽक्षभिर्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवाँसस्तनूभिर्व्यशेम देवहितं यदायुः ॥ स्वस्ति न इन्द्रो वृद्धश्रवास्स्वस्ति नः पूषा

विश्ववेदाः ॥ स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः ॥ स्वस्ति नो बृहस्पतिर्दधातु ॥ ॐ शान्ति-श्शान्तिश्शान्तिः ॥ ९ ॥

ॐ यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ॥ तँ हो देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥ ॐ शान्तिश्शान्तिश्शान्तिः ॥ १० ॥

( ॐ नमो ब्रह्माऽऽदिभ्यो ब्रह्मविद्यासम्प्रदायकर्तृभ्यो वंशऋषिभ्यो महद्भ्यो नमो गुरुभ्यः ) ॥ सर्वोपप्लवरहितः प्रज्ञानघनः प्रत्यगर्थो ब्रह्मैवाऽहमस्मि ॥ १ ॥ ॐ नाराऽयणं पद्मभवं वसिष्ठँ शक्तिं च तत्पुत्रपराशरं च । व्यासँ शुकं गौडपदं महान्तं गोविन्दयोगीन्द्रमथाऽस्य शिष्यम् ॥ २ ॥ श्रीशङ्कराऽऽचार्यमथाऽस्य पद्मपादं च हस्ताऽऽमलकं च शिष्यम् ॥ तं त्रोटकं वार्तिककारमन्यानस्मद्गुरून्सन्ततमानतोऽस्मि ॥ ३ ॥ श्रुतिस्मृति-

पुराणानामालयं करुणाऽऽलयम् ॥ नमामि भगवत्पादँ शङ्करं लोकशङ्करम् ॥४॥ शङ्करं शङ्कराऽऽचार्यं केशवं बादराऽयणम् ॥ सूत्रभाष्यकृतौ वन्दे भगवन्तौ पुनःपुनः ॥ ५ ॥ ईश्वरो गुरुरात्मेति मूर्तिभेदविभागिने ॥ व्योमवद्व्याप्तदेहाय दक्षिणामूर्तये नमः ॥ ६ ॥

॥ (अनाध्यायमङ्गलपाठः) ॥ अशुभानि निराचष्टे तनोति शुभसन्ततिम् ॥ स्मृतिमात्रेण यत्पुँसां ब्रह्म तन्मङ्गलं परम् ॥ १ ॥ अतिकल्याणरूपत्वान्नित्यकल्याणसंश्रयात् ॥ स्मर्तॄणां वरदत्वाच्च ब्रह्म तन्मङ्गलं विदुः ॥ २ ॥ ओङ्कारश्चाऽथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ॥ कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ ॥ ३ ॥ इति दश शान्तयस्समाप्ताः ॥छ॥ हरिः ओम् ॥छ॥ तत्सत् ॥छ॥ परब्रह्माऽर्पणमस्तु ॥छ॥

## ॥ विज्ञापना ॥

समलंकुर्वन्तु दृष्ट्यावधारयन्तु च कर्णामृतं मदीयं वचो निखिलनिगमसाररसनिरीक्षणपरीक्षणकुशलाः, यदेतद्धरातले संसारपथप्रवृत्तानां पाथेयमिवाधर्मकण्टकादिवर्जने दिव्यचक्षुरिव धर्मराजसदनोपदेशने वेत्रवतीकुलमिव तत्रभवता भगवताश्वलायनाचार्येण प्रणीतमृगादिचतुरुदधिमन्थनसमुद्धृतं गृह्यसूत्रं गार्ग्यनारायणीयव्याख्यया संकलितं परिशिष्टसमेतं कुमारिलभट्टविरचितसटिप्पणकारिकासमेतं कीलकाक्षैररङ्कयित्वा प्रसिद्धिं नीतमिति । एतस्य हि चत्वारोऽध्यायाः । तत्र प्रथमे पाकयज्ञप्रकारादिमधुपर्कान्ता विषयाः । द्वितीये श्रवणाकर्मकालनियमादिगृहप्रपदनादिकर्मान्ताः । तृतीये पञ्चयज्ञादियुद्ध्यमानराजपुरोहितजपमन्त्रान्ताः । चतुर्थे व्याधिपीडिताहिताग्निकर्तव्याद्याचारनमस्कारान्ताः सन्ति । तेच विशेषविस्तरेणास्मिन्नेव ग्रन्थे वाचकानां सौलभ्यार्थं विषयानुक्रमणिकया संगृहीताः । अयं ग्रन्थोऽन्यत्र मुद्रितोऽपि स्थलविशेषे क्वचित्पाठरहितोऽस्ति । अतः बहुभिर्विद्वद्भिः सुसंस्कार्य मुद्रणार्थं बोधितेन मया मुद्रण आदरोऽकारि । एतस्य संस्करणं च गाडगीलोपनामकैः केशवात्मजदिनकरशास्त्रिभिः महता प्रयासेन प्रेम्णा च कृतम् । एतस्य मूल्यं चातीवाल्पं रूपकद्वयं ग्राह्यतया स्थापितम् । तत् सर्वैर्जनैरादरणीयमेतत्पुस्तकमिति संप्रार्थयेऽहम् ।

(भवदीयः) तुकाराम तात्या.

## प्रसिद्धिलेखः

| | | डाकव्ययसह मूल्यम्. |
|---|---|---|
| | | रू० आ० |
| १. | ऋग्वेदसंहिताभाष्यं—श्रीमद्विद्यारण्यमुनिविरचितम् षोडसोपाह्वैर्महामहोपाध्यायै राजारामशास्त्रिभिः संशोधितम् ... ... ... ... ... ... ... ... ... ... ... ... ... ... | ५०—० |
| २. | ऋग्वेदसंहिता, परिशिष्टं सर्वानुक्रमसहितं च ... ... ... ... ... ... ... | ४—८ |
| ३. | शुक्लयजुर्वेदीयवाजसनेयसंहितापदानि—षोडसोपाह्वैर्महामहोपाध्यायै राजारामशास्त्रिभिः संशोधितानि. | २—१२ |
| ४. | ऐतरेयब्राह्मणं—षोडसोपाह्वैर्महामहोपाध्यायै राजारामशास्त्रिभिः संशोधितम् ... ... ... ... | २—१२ |
| ५. | शिक्षा, ज्योतिषं, छंदः, निघंटः, अष्टाध्यायी, तथा निरुक्तादि वेदस्य षडङ्गानि ... ... | २—२ |
| ६. | हठयोगप्रदीपिका सटीका—हूणभाषांतरसहिता ... ... ... ... ... ... ... ... | १—८ |
| ७. | महिम्नस्तोत्रम् ,, ... ... ... ... ... ... ... ... | ०—२ |
| ८. | कृष्णयजुर्वेदसंहिता—महामहोपाध्यायषोडसोपाख्यराजारामशास्त्रिभिः संशोधिता ... ... ... | ३—८ |
| ९. | घेरण्डसंहिता—इंग्लिशभाषान्तरसहिता ... ... ... ... ... ... ... ... ... | ०—१२ |
| १०. | योगसारसंग्रहः ... ... ... ... ... ... ... ... ... ... ... ... | ०—१० |
| ११. | सांख्यतत्त्वकौमुदी—इंग्लिशभाषान्तरसहिता ... ... ... ... ... ... ... ... | मुद्राप्यते. |
| १२. | भगवद्गीता—इंग्लिशभाषान्तरसहिता ... ... ... ... ... ... ... ... ... .. | मुद्राप्यते. |

☞ एतानि पुस्तकानि मुम्बापुर्यां यमपाणमिते ( ५२ ) गृहे कष्टमहोंसरस्तासंज्ञे तुकारामतात्यातः प्राप्नुवन्ति ।

॥ अस्य ग्रन्थस्य सर्वेऽधिकाराः १८६७ तमस्य इसवीसनस्य २५ तमराजनियमानुसारेण प्रकाशयित्रा स्वायत्तीकृताः ॥

इदं पुस्तकं तुकारामतात्याभिख्येन तत्त्वविवेचकग्रंथप्रसारकसमित्यै
'तत्त्वविवेचक' मुद्रणयन्त्रालये मुद्रयित्वा प्रसिद्धिं नीतं

मोहमय्याम्.

तच्च

मोहमय्यां यमबाणमिते ( ५२ ) गृहे कष्टमहौस रस्तासंज्ञे
तुकारामतात्यातः क्रय्यपुस्तकालये
लभ्येत 'तत्त्वविवेचक' मुद्रणालये च.

शकाब्दाः १८१७.

मूल्यं रूपकसप्तकम् ( ७ ).

৩৭৭

# শ্রীশ্রীবিজয়কৃষ্ণ মঠ

— বারাণসী —

## দেবোত্তর দলিলের প্রতিলিপি

Calcutta Collectorate
No. 37
of 2nd July, 1937
Adjudication
Fee 5/- Paid
Under section 81 Act
II of 1899
Rs. Five only.
Stamp Department

Sec. 32 Case No. 37 of 1937-38.

Certified that the full stamp duty chargeable on this Instrument under the Indian Stamp Act, amounting to Rs. (187/8/-) Rupees one hundred & eighty seven and annas eight only has been paid, and credited to Government this day under challan No 164.

Calcutta Collectorate
The 9th July, 1937.

(Illegible)
Collector of
Stamp Revenue

Admissible under Rule 21, duly stamped under the Bengal stamp (Amendment) Act, 1822 Schedule 1. A. No. 58.

Fee paid as under—A 52/-
I 20/-
M(a) 20/-
N 8/-
Rs. 100/-

(*Illegible*)
REGISTRAR OF ASSURANCE
CALCUTTA.
15/7/37

লিখিতং স্বামী কিরণ চাঁদ দরবেশ, গৃহস্থাশ্রমের পূর্ব্বনাম কিরণ চন্দ্র চট্টোপাধ্যায়, পিতার নাম স্বর্গীয় কুলচন্দ্র চট্টোপাধ্যায়, জন্মস্থান—জেলা ফরিদপুরস্থিত মাদারিপুর মহকুমার অন্তর্গত খালিয়া গ্রাম; বর্ত্তমান বাসস্থান সহর বেনারস, থানা ভেলুপুর, মহল্লা আউধ ঘরবী, মিউনিসিপাল মোকাম নং বি ৫।৫ এ, জেলা বেনারস। জাতি হিন্দু সন্ন্যাসী, পেশা ঈশ্বরারাধনা (Devotion)।

কস্ত দেবোত্তর ও অর্পণনামা (Deed of Dedication) পত্রমিদং কার্য্যঞ্চাগে, আমি ভারতপ্রসিদ্ধ মহাত্মা শ্রীশ্রীমৎ বিজয়কৃষ্ণ গোস্বামী-প্রভুজীর মন্ত্রশিষ্য। উক্ত গোস্বামী প্রভুর তিরোভাবের পরে, সন ১৩১৯ সালে, আমি গার্হস্থাশ্রম ত্যাগ করি, এবং প্রয়াগধামে সন্ন্যাসাশ্রম গ্রহণান্তর কাশীধামে আগমন করি। তদবধি এই কাশীধামেই অবস্থান করিতেছি। উপরোক্ত আউধ ঘর্‌বী মহল্লায় ১নং তফশিলে বর্ণিত জমী খরিদ করিয়া তদুপরি পাকা ইমারতাদি নির্ম্মান করিয়া, আমি একটী আশ্রম প্রতিষ্ঠা করিয়াছি; এবং বিগত ১৯৯৩ সম্বতের অক্ষয়া তৃতীয়া তিথিতে ইং ১৯০৬ খৃষ্টাব্দের ২৭ এপ্রিল তারিখে **শ্রীশ্রীবিজয়কৃষ্ণমঠ** স্থাপনা করিয়া তন্মধ্যে শ্রীশ্রীনামব্রহ্ম, শ্রীশ্রীবিজয়কৃষ্ণ ও শ্রীশ্রীযোগমায়া, —এই ত্রিবিগ্রহ প্রতিষ্ঠা করিয়া এযাবৎ উহার যথাযোগ্য সেবা-পূজা নির্ব্বাহ করিয়া আসিতেছি।

[ ১ ] যেহেতু উপরোক্ত স্থান ও তদুপরি "শ্রীশ্রীবিজয়কৃষ্ণ মঠ" ও তদন্তর্গত আশ্রম, আমার শিষ্য-শিষ্যা ও অনুরাগী ভক্তবর্গের স্বেচ্ছাপ্রদত্ত অর্থে ধর্ম্মার্থে খরিদ ও নির্ম্মিত হইয়াছে, এবং যেহেতু এপর্য্যন্ত উহা ধর্ম্মার্থেই ব্যবহৃত হইয়া আসিতেছে ও চিরকাল ধর্ম্মার্থেই ব্যবহৃত হয়—ইহাই আমার অভিপ্রায়; তদহেতু আমি উক্ত স্থান ও মঠ এবং আশ্রম আমার প্রতিষ্ঠিত **শ্রীশ্রীনামব্রহ্মদেব, শ্রীশ্রীবিজয়কৃষ্ণদেব** ও **শ্রীশ্রীযোগমায়াদেবী,**—এই ত্রিবিগ্রহকে দেবোত্তর সম্পত্তিরূপে নির্ব্যূঢ় স্বত্বে উৎসর্গ ও অর্পণ করিলাম; এবং অদ্য হইতে আমি সম্পূর্ণরূপে নিঃস্বত্ব হইলাম। অত্র অর্পণনামা দ্বারা আমার সর্ব্বপ্রকারের মালিকী স্বত্ব অদ্য হইতে উপরোক্ত ত্রিবিগ্রহে বর্ত্তিল, এবং ত্রিবিগ্রহ নির্ব্যূঢ় স্বত্বে মালিক-দখিলকার হইলেন।

শ্রীশ্রীবিগ্রহত্রয়

[ ২ ] অত্র মঠ ও তদন্তর্ভুক্ত সম্পত্তির রক্ষণাবেক্ষণ, বিগ্রহের যথাযোগ্য সেবা-পূজা নির্ব্বাহন ও স্থানের পবিত্রতা সংরক্ষণের জন্য একজন মহান্ত ও পাঁচজন ট্রাষ্টির দ্বারা গঠিত একটী পঞ্চায়েত সভা থাকা আবশ্যক। তদহেতু আমি স্বামী কিরণচাঁদ দরবেশ শ্রীশ্রীবিজয়কৃষ্ণ মঠের প্রথম মহান্ত নিযুক্ত হইলাম, এবং নিম্নলিখিত পাঁচজনকে উক্ত মঠের প্রথম ট্রাষ্টী বা পঞ্চায়েত নিযুক্ত করিলাম, যথা:— (১) আমার গুরুভগ্নী ও গৃহস্থাশ্রমের সহধর্ম্মিণী শ্রীমতী সরোজবালা দেবী (২) আমার শিষ্য শ্রীমান শৈলেন্দ্র চন্দ্র গুহ, পিতার নাম ৺সতীশ চন্দ্র গুহ; কলিকাতা স্মল কজ্‌ কোর্টের উকীল (৩) আমার শিষ্য শ্রীমান যোগেশ চন্দ্র ঘোষ, পিতার নাম ৺নীলকমল ঘোষ; ইষ্ট্‌ ইণ্ডিয়ান রেলের ইন্‌স্পেক্টর্‌ অব্‌ ওয়ার্কস (৪) আমার শিষ্য

মহান্ত ও পঞ্চায়েতসভা

॥ इति दशोपनिषच्छान्तिसमेतमष्टोत्तर-

शतमुपनिषदः समाप्ताः ॥